# अथ ज्योतिष्करण्डकस्य बृहद्विषयानुक्रमः

॥ अर्हम् ॥

# पूर्वभृद्वालभ्यप्राचीनतराचार्यरचितं ज्योतिष्करण्डकम्

## आचार्यश्रीमन्मलयगिरिकृतिवरविहितविवृतियुतम्



*स्पष्टं चराचरं विश्वं, जानीते यः प्रतिक्षणम् । तस्मै नमो जिनेशाय, श्रीवीराय हितैषिणे ॥ १ ॥*

सम्यग्गुरुपदाम्भोजपर्युपास्तिप्रसादतः । ज्योतिष्करण्डकं व्यक्तं, विवृणोमि यथाऽऽगमम् ॥ २ ॥

इह कायमनोभ्यामभीष्टदेवतानमस्कारकरणादखिलविघ्नविनायकोपशान्तिं मन्यमानो वाचनिकमभीष्टदेवतानमस्कारमकृत्वा प्रेक्षावतामसन्देहेन प्रवृत्त्यर्थं परम्परया प्रकरणस्य सर्वज्ञमूलतां ख्यापयन् प्रथमतः प्रयोजनमुद्दिशति-

*सुण ताव सूरपन्नत्तीवण्णणं वित्थरेण जं निउणं । थोगुद्धएण तत्तो वोच्छं उद्धोगमेत्तागं ॥ १ ॥*

अयमत्र पूर्वाचार्योपदर्शित उपोद्घातः- कोऽपि शिष्योऽल्पश्रुतः कंचिदाचार्यं पूर्वगतसूत्रार्थधारकं वालभ्यं श्रुतसागरपारगतं शिरसा प्रणम्य विज्ञपयति स्म, यथा-भगवन् ! इच्छामि युष्माकं श्रुतनिधीनामन्ते यथाऽवस्थितं कालविभागं ज्ञातुमिति, तत एव-

मुक्ते मत्याचार्य आह- शृणु वत्स! तावदवहितो येन कथयामि, अत्र शृण्विति क्रियापदेन श्रुतज्ञानविषय उपयोग आक्षिप्यते, श्रुतज्ञानं न मंगलं, मायनन्दिमध्ये तस्य पठितत्वात् , ततः श्रोतृणामपि समस्तविघ्नविनायकोपशमनिमित्तं मंगलमनेनाक्षिप्तमिति सिद्धा तेषामप्यभिलषितार्थसिद्धिः, यत्सूर्यप्रज्ञप्तौ विस्तरेण निपुणं-निपुणमतिगम्यं कालविभागस्य वर्णनं कृतं ततोऽहं उद्योकमात्रं-यावता भवतो मनाक्कालविभागपरिज्ञानरूप आलोको भवति तावन्मात्रकं 'स्तोकोच्चयेन' स्तोकस्योद्धरणेन वक्ष्ये। एतेन प्रकरणस्य परम्परया सर्वज्ञमूलता निवेदिता, तथाहि-सूर्यप्रज्ञप्तेरिदं प्रकरणमुद्धृतं, सूर्यप्रज्ञप्तिश्च पूर्वेभ्यो विनिर्गता, पूर्वाणि च साक्षादर्थतो भगवता वर्द्धमानस्वामिनाऽभिहितानि, सूत्रतो गणधरदेवैः, ततो भवतीदं प्रकरणं परम्परया सर्वज्ञमूलं, सर्वज्ञमूलत्वादविनयमवितथत्वादावश्यकमुपादेयमिति ॥ इह कालविभागोऽभिधेयः, कालविभागपरिज्ञानं श्रोतॄणामनन्तरं प्रयोजनं, परम्पराप्रयोजनं निःश्रेयसावाप्तिः, तथाहि-कालविभागं सम्यक् परिज्ञाय नास्य कालस्यान्तो नापि संसारे दुःखानामिति संवेगान्मोक्षाय यतन्ते, ततस्तदवाप्तिरिति, कर्तुरनन्तरं प्रयोजनं सत्त्वानुग्रहः, परम्पराप्रयोजनं तस्यापि निःश्रेयसावाप्तिः, सत्त्वानुग्रहस्य परम्परया मोक्षावाप्तिनिबन्धनत्वात् , उक्तञ्च- "सर्वज्ञस्योपदेशेन, यः सत्त्वानामनुग्रहम्। करोति बोधबालानां, स प्राप्नोत्यचिराच्छिवम् ॥ १ ॥" इह 'कालविभागोऽभिधेय' इत्युक्तं ततो यैरधिकारैः कालविभागो वक्तव्यस्तानाभिधित्सुराह-

**कालपमाणं १ माणं २ निप्फत्ति अहिगमासगस्सवि ३ य। वोच्छामि ओमरत्तं ४ पव्वातिहिणो समत्तिं च ५ ॥२॥**
**नक्खत्तपरीमाणं ६ परिमाणं वावि चंदसूराणं ७। नक्खत्तचंदसूराण गइं ८ नक्खत्तजोगं च ९ ॥ ३ ॥**

मंडलविभाग१०मयणं११आउट्टी१२मंडलेमुहुत्तगई१३। उउ१४विसुव१५ धईवाए१६तावं१७वुड्ढि च दिवसाणं१८॥४॥
अयमासपुण्णमासी १९ पणट्ठपव्वं २० च पोरिसिं२१वावि। ववहारनयमएणं तं पुण सुण मे अणन्नमणो ॥ ५ ॥

इह सूर्यप्रज्ञप्तिसत्का अधिकारा एकविंशतिःउपप्राभृतविनिबद्धाः, तत्र प्रथमेऽधिकारे कालस्य-समयादिघटिकापर्यंतस्य प्रमाणं वक्ष्ये, द्वितीये मानं-प्रमाणं संवत्सराणां, तृतीयेऽधिकमासस्य निष्पत्तिं, तदनन्तरं चाल्पवक्तव्यत्वाद् गाथोक्तं क्रममुल्लंघ्य चतुर्थे पर्वतिथिसमाप्तिं वक्ष्ये,पञ्चमेऽवमरात्रं, गाथायां चान्यथानिर्देशःछन्दोवशात्, ततः षष्ठे नक्षत्राणां परिमाणं-नक्षत्राणां संस्थानादिपरिमाणं वक्ष्यामि, सप्तमे चन्द्रसूर्यपरिमाणं अष्टमे चन्द्रसूर्यनक्षत्राणां गतिं,नवमे नक्षत्रयोगं,दशमे जम्बूद्वीपे चन्द्रसूर्याणां मण्डलविभागम्, एकादशेऽयनं, द्वादशे आवृत्तिं, त्रयोदशे चन्द्रसूर्यनक्षत्राणां मण्डले मुहूर्त्तगतिपरिमाणं,चतुर्दशे ऋतुपरिमाणं,पंचदशे विषुवाणि, षोडशे व्यतिपातान्, सप्तदशे तापक्षेत्रम्, अष्टादशे दिवसानां वृद्ध्यपवृद्धी, एकोनविंशतितमेऽमावास्यापौर्णमासीवक्तव्यतां, विंशतितमे प्रनष्टं पर्व, एकविंशतितमे पौरुषीं, एतांश्चैकविंशतिसंख्यानप्यर्थाधिकारान् वक्ष्ये व्यवहारनयमतेन, न निश्चयमतेन निश्चयनयमतेन हि कलांशप्रतिकलांशगणनया परमार्थतः परमश्रुतविद एव बुध्यन्ते, न शेषाः, नापि च तथा कथ्यमानं श्रोतॄणां अञ्जसाऽवगमपथमृच्छति, ततो व्यहारनयमतेन योजनगव्यूतकतिपयकलाकलांशप्रविभागरूपेण वक्ष्ये, तच्च तथा मे कथयतो भवानवहितमनस्को भूत्वा शृणु ॥ २-५ ॥ तदेवं निर्दिष्टा अर्थाधिकाराः, सम्प्रति ' यथोद्देशं निर्देश ' इति न्यायात् प्रथमतः कालप्रमाणरूपं प्रथममधिकारं विवक्षुरिदमाह—

लोगाणुभावजणियं जोइसचक्कं भणंति अरिहंता। सव्वे कालविसेसा जस्स गइविसेसनिप्फन्ना ॥ ६ ॥

'यस्य' ज्योतिश्चक्रस्य चंद्रसूर्यनक्षत्रादिरूपस्य सम्बन्धिना गतिविशेषेण निष्पन्नाः 'सर्वे कालविशेषाः' चन्द्रमासस्सूर्यमासनक्षत्रमासादिकाः तज्ज्योतिश्चक्रं लोकानुभावजनितम्, अनादिकालसन्ततिपतिततया शाश्वतं वेदितव्यं, नेश्वरादिकृतमिति भणन्ति-प्रतिपादयन्ति भगवन्तः 'अर्हन्तः' तीर्थकराः, तीर्थकृतां च वचनमवश्यं प्रमाणायितव्यं, क्षीणसकलदोषतया तद्वचनस्य वितथार्थत्वाभावात्, उक्तंच- 'रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम्। यस्य तु नैते दोषास्तस्यानृतकारणं किं स्यात्? ॥१॥ अपिच-युक्त्याऽपि विचार्यमाणो नेश्वरादिर्घटां प्रांचति, ततस्तदभावादपि ज्योतिश्चक्रं लोकानुभावजनितमवसेयं, यथा च युक्त्या विचार्यमाणो नेश्वरादिर्घटते तथा तत्त्वार्थटीकादौ विजृम्भितमिति तत एवावधार्यं ॥ ६ ॥ तदेवं लोकानुभावजनितात् ज्योतिश्चक्रात् कालविशेषो निष्पन्न इति सामान्यतः कालस्य सम्भवं प्रतिपाद्य सम्प्रति संक्षेपतः कालस्य भेदानाचष्टे--

संखेवेण उ कालो अणागयातीतवट्टमाणो य। संखेज्जमसंखेज्जो अणंतकालो उ निद्दिट्ठो ॥ ७ ॥

कालः सङ्क्षेपतस्त्रिधा, तद्यथा--अनागतोऽतीतो वर्त्तमानश्च, तत्र यो विवक्षितं वर्त्तमानसमयमवधीकृत्य भावी समयराशिः स सर्वोऽपि कालोऽनागतः, यस्तु तमेव विवक्षितं वर्त्तमानं समयमवधीकृत्य भूतवान् समयराशिः सोऽतीतः, यस्तु वर्त्तते समयः स कालो वर्त्तमानः, तदेवमित्थं संक्षेपतः कालस्य त्रैविध्यं प्रतिपाद्य संप्रति प्रकारान्तरेण सङ्क्षेपत एव कालस्य त्रैविध्यमाह- 'संखेज्जे' त्यादि, त्रिविधः कालो भगवद्भिः- तीर्थकरगणधरैर्निर्दिष्टस्तद्यथा--सङ्ख्येयोऽसङ्ख्येयोऽनन्तश्च, तत्र समयादिः शीर्षप्रहेलिकापर्यन्तः सङ्ख्येयः, असङ्ख्येयः पल्योपमादिकः, अनन्तः अनन्तोत्सर्पिण्यवसर्पिण्यादिकः ॥ ७ ॥ तत्र प्रथमतः सङ्-

कालेहेतुः तस्य त्रैविध्यंच

ख्येयकालं विवक्षुरिदमाह—

कालो परमनिरुद्धो अविभज्जो तं तु जाण समयं तु। समया य असंखेज्जा हवइ हु उस्सासनिस्सासो ॥८॥
उस्सासो निस्सासो यदो (दुवे)ऽवि पाणुत्ति भन्नए एको। पाणा य सत्त थोवा थोवावि य सत्त लवमाहु ॥ ९ ॥
अट्ठत्तीसं तु लवा अद्धलवो चेव नालिया होइ।

यः कालः 'परमनिरुद्धः' परमनिकृष्टः, एतदेव व्याचष्टे–'अविभज्यः' विभक्तुमशक्यः, किमुक्तं भवति ?-यस्य भूयोऽपि विभागः कर्तुं न शक्यते स कालः परमनिरुद्धः, तमित्थम्भूतं परमनिरुद्धं कालविशेषं समयं जानीहि, स च समयो दुरधिगमः, तं हि भगवन्तः केवलिनोऽपि साक्षात् केवलज्ञानेन विदन्ति, न तु भृङ्गग्राहिकया परेभ्यो निर्दिष्टुं शक्नुवन्ति, निर्देशो हि प्रथमतः काययोगेण भाषाद्रव्याण्यादाय पश्चाद्वाक्पर्याप्तिकरणप्रयोगतो विधीयते, ततो यावत्समय इत्येतावन्त्यक्षराण्युच्चार्यन्ते तावदसङ्ख्येयाः समयाः समतिक्रामन्तीति न साक्षाद्विनिर्लुठितरूपतया निर्देष्टुं शक्यते, इत्थम्भूताः समया असङ्ख्येया एक उच्छ्वासनिःश्वासो भवति, किमुक्तं भवति ?-अनन्तरोक्तस्वरूपाः समया जघन्ययुक्तासङ्ख्यातकप्रमाणा एकाऽऽवलिका, सङ्ख्येयावलिका एक उच्छ्वासः तावत्प्रमाण एवैको निःश्वासः, तयोश्चायं भेदः-उर्ध्वगमनस्वभाव उच्छ्वासः अधोगमनस्वभावो निःश्वासः ॥ ८ ॥ पुरुषस्य शारीरिकबलोपेतस्यानुपहतकरणग्रामस्य नीरुजस्य प्रशस्ते यौवने वर्त्तमानस्यानाकुलचेतसो य एकः उच्छ्वासः सङ्ख्येयावलिकाप्रमाणो यश्चैको निःश्वासः सङ्ख्यातावलिकाप्रमाण एव तौ द्वावपि समुदितावेकः प्राणो भण्यते, प्राणो नाम काल-

विशेषः, एतदुक्तं भवति-यथोक्तपुरुषगतोच्छ्वासनिश्वासप्रमितः कालविशेषः प्राण इति, यच्च पुरुषस्य शारीरिकबलोपेतादिविशेषणकलापोपादानं तदन्यथाभूतपुरुषसम्बन्धिनावुच्छ्वासनिःश्वासौ न प्राणरूपकालविशेषप्रमितिहेतू भवत इति प्रतिपत्त्यर्थं, ते च प्राणाः 'सप्त' सप्तसङ्ख्या एकः स्तोकः, स्तोकानपि च सप्तसङ्ख्यानेकं लवमाहुः पूर्वसूरयः ॥ ९ ॥ तेऽपिच लवा अष्टात्रिंशत्-अष्टात्रिंशत्सङ्ख्याः, अर्द्धं लवस्य अर्द्धलवः 'समे अंशेऽर्धे' मिति समासश्च चेवशब्दः समुच्चये एका नालिका भवति, सार्द्धाष्टात्रिंशल्लवाः समुदिता एका नालिका भवतीत्यर्थः ॥

## ॥ इति श्रीमलयागिरिविराचितायां ज्योतिष्करण्डटीकायां कालप्रमाणनामा प्रथमोऽधिकारः ॥

तदेवमुक्तं कालप्रमाणं, सम्प्रति मानं घटिकादीनां वक्तव्यं, तत्र प्रथमतो नालिकायाः संस्थानादि विवक्षुराह-

**तीसे पुण संठाणं छिड्डं उदगं च वोच्छामि ॥ १० ॥**

'तीसे' इति पश्चार्धं, तस्याः पुनर्नालिकायाः 'संस्थानम्' आकृतिं तथा 'छिद्रम्' विवरमधोभागे येनोदकं नालिकामध्ये प्रविशति उदकं च यादृग्भूतं छिद्रेण प्रविशत् नालिकायां भूत्वा यथोक्तनालिकारूपकालविशेषपरिमाणहेतुर्भवति तादृग्भूतं वक्ष्यामि ॥१०॥ तत्र प्रतिज्ञातमेव निर्वाहयितुकामः प्रथमतः संस्थानप्ररूपणां छिद्रप्रमाणवक्तव्यतोपक्षेपं च कुर्वन्नाह-

नालिकाया आकारः

**दालिमपुप्फागारा लोहमयी नालिगा उ कायव्वा । तीसे तलंमि छिद्दं छिद्दपमाणं च मे सुणह ॥ ११ ॥**

'दालिमे' त्यादि, ' नालिका ' घटिका लोहमयी कर्त्तव्या, सा च संस्थानमाधिकृत्य दाडिमपुष्पाकारा कर्त्तव्या, . दाडिमपुष्पस्येवाकारः-संस्थानं यस्याः सा तथा, तस्याश्चैवम्भूताया नालिकाया मूले-अधस्ताच्छिद्रं कर्त्तव्यं, तस्य च छिद्रस्य प्रमाणं पूर्वसूरिपरम्परागतं कथयतो मे-मम शृणुत ॥११॥ छिद्रप्रमाणमेव कथयति–



छन्नउयमूलवालेहिं तिवस्सजायाए गयकुमारीए। उज्जुकयपिंडिएहि उ कायव्वं नाडियाछिद्दं ॥ १२ ॥
अहवा दुवस्सजायाए गयकुमारीएँ पुच्छवालेहिं। बिहिं बिहिं गुणेहिं तेहि उ कायव्वं नाडियाछिद्दं ॥१३॥
अहवा सुवण्णमासेहिं चउहिं चतुरंगुला कया सूई। नालियतलंमि तीए उ कायव्वं नालियाछिद्दं ॥१४॥
एवं छिद्दपमाणं धरिमं मेज्जं च मे निसामेह। एत्तो उदगपमाणं वोच्छं उदगं च जं भणियं ॥ १५ ॥

'छन्नउये'त्यादि, 'त्रिवर्षजातायाः' त्रीणि वर्षाणि जातायाः त्रिवर्षजाता 'कालो द्विगौ च मेयै'रिति तत्पुरुषसमासः तस्या गजकुमार्याः षण्णवतिसङ्ख्यैर्मूलवालैः-पुच्छमूलवालैः 'ऋज्वीकृतपिण्डितैः'ऊर्ध्वमृज्वीकृत्यैकत्र मीलितैर्नालिकाया अधस्तात्तले छिद्रं कर्त्तव्यं, किमुक्तं भवति ?–ऊर्ध्वमृजूकृता गजकुमार्याः षण्णवतिसङ्ख्याः पुच्छमूलवाला एकत्र पिण्डिता यावत्प्रमाणे छिद्रे परिपूर्णा मान्ति न चापान्तरालं सूक्ष्ममपि भवति तावत्प्रमाणं नालिकाया अधस्तात् मूले छिद्रम् कर्त्तव्यमिति॥१२॥प्रकारान्तरेण छिद्रप्रमाणमाह—'अहवे' त्यादि, ' अथवे'ति प्रकारान्तरताद्योतने गजकुमार्या द्विवर्षजातायाः ' तैः ' प्रागुक्तसङ्ख्याकैः षण्णवत्येत्यर्थः पुच्छवालैः प्रत्येकं द्वाभ्यां द्वाभ्यां ' गुणैः ' गुण्यन्ते स्म गुणा गुणिता इत्यर्थः तैः, किमुक्तं भवति ?–षण्णवति-

संख्यैर्द्विगुणितैर्नालिकाया अधस्तात् मूले छिद्रं कर्त्तव्यमिति, भावार्थः प्राग्वदवगन्तव्यः ॥१३॥ भूयः प्रकारान्तरेण छिद्रप्रमाणमेवाह- 'अहवे' त्यादि, अथवेति पूर्ववत् 'सुवर्णमाषैः' वक्ष्यमाणप्रमाणैः चतुर्भिः- चतुःसंख्यैश्चतुरंगुलप्रमाणा या कृता सूची 'तया सूच्या नालिकाया अधस्तात्तले 'नालिकाछिद्रं' नालिकारूपकालविशेषप्रमितये छिद्रं कर्त्तव्यं, किमुक्तं भवति ?-यावत्प्रमाणे छिद्रे यथोक्तप्रमाणा सूचिः प्रविशति न च मनागप्यपान्तरालं भवति तावत्प्रमाणं छिद्रं कर्त्तव्यमिति ॥१४॥'एवम्' उक्तेन प्रकारेण नालिकायाः छिद्रप्रमाणमभिहितमिति शेषः, सम्प्रति 'धरिमं' धरिमप्रमाणं तुलाप्रमाणमित्यर्थः 'मेयं च' मेयप्रमाणं च, येन मेयं मीयते तन्मे यथोक्तमुपवर्णयतः 'निशमयत' आकर्णयत, ततः 'इतः' धरिमप्रमाणमेयप्रमाणकथनादनन्तरं धरिमप्रमाणेन मेयप्रमाणेन च यदुदकप्रमाणं पूर्वाचार्यैर्भणितं 'यच्च' यादृग्भूतं च नालिकायोग्यमुदकं तदहं वक्ष्यामि ॥१५॥ तत्र प्रथमतो धरिमप्रमाणमाह-

चत्तारि मधुरगत्तणफलाणि सो सेयसासवो एक्को । सोलस य सासवा पुण हवंति मासप्फलं एक्कं ॥ १६ ॥
दो चेव धन्नमासप्फलाणि गुंजाफलं हवइ एक्कं । गुंजाफलाणि दोन्नि उ रुप्पियमासो हवइ एक्को ॥ १७ ॥
सोलस रुप्पियमासा एक्को धरणो हवेज्ज संखित्तो । अड्ढाइज्जा धरणा य सुवण्णो सो य पुण करिसो ॥१८॥
करिसा चत्तारि पलं पलाणि पुण अद्धतेरस उ पत्थो । भारो य तुला वीसं एस विही होइ धरिमस्स ॥ १९ ॥

चत्वारि मधुरतृणफलानि-मधुरतृणतन्दुलाः, स मेयविषये सकलजगत्प्रसिद्ध एकः श्वेतसर्षपो भवति, षोडश च श्वेतसर्षपा एकं 'माषफलं' धान्यमाषफलं, द्वे धान्यमाषफले एकं भवति गुञ्जाफलं, द्वे च गुञ्जाफले एको रूप्यमाष,कर्ममास इत्यर्थः, षोडश

ष रूप्यमाषका एकं धरणं, अर्धतृतीयानि धरणान्येकः सुवर्णः, स एव चैकः सुवर्णः कर्ष इत्युच्यते, चत्वारः कर्षाः पलं, अर्द्धत्रयोदश पलानि ' सार्धानि द्वादश पलानि प्रस्थः, पलशतिका तुला, विंशतिस्तुला भारः ' एषः ' पूर्वाचार्यप्रदर्शितो धरिमप्रमाणविषयो विधिः ॥ १९ ॥ तदेवमुक्तो धरिमप्रमाणविषयो विधिः, सम्प्रति तुलामानमाह—

पणतीस लोहपलिया वट्टा बावत्तरंगुला दीहा । पंचपलधरणगस्स य समायकरणे तुला होइ ॥ २० ॥
सव्वग्गेण तुलाए लेहाओ पण्णवीसई होंति । चत्तारि य लेहाओ जाओ नंदीपिणद्धाओ ॥ २१ ॥
समकरणि अद्धकरिसो तत्तो करिसुत्तरा य चत्तारि । तत्तो पलुत्तराओ जाव य दसगोत्ति लेहाओ ॥२२॥
पारस पन्नरस वीसगे य एत्तो दसुत्तरा अट्ठ । एवं सव्वसमासो लेहाणं पन्नवीसं तु ॥ २३ ॥
पंचसु पन्नरसगे तीसगपन्नासगे य लेहाओ । नंदीपिणद्धकाओ सेसाओ उज्जुलेहाओ ॥ २४ ॥

सुगालितानां पञ्चत्रिंशत्संख्यानां लोहपलानामत्यर्थं घनैः कुट्टनेन निर्मापिता ' वृत्ता ' सुवृत्ता, विषमोन्नविहीनेत्यर्थः, द्वासप्तत्यंगुलदीर्घा ' पंचपलधरणगस्स य ' त्ति ध्रियते येन तद्धरणं धरणमेव धरणकं, येन धृत्वा तोल्यते तदित्यर्थः तस्य प्रमाणं पञ्च पलानि कर्त्तव्यानि, ततः समायकरणे-धरणके तुलायां संयोजिते सति यत्र प्रदेशे तुला ध्रियमाणा समा भवति नैकस्मिन्नपि पक्षेऽग्रतः पृष्ठतो वा नतोन्नता वा भवति तत्र प्रदेशे ' समायकरणे ' समतासमागमपरिज्ञाननिमित्तरेखाकरणे तुला परिपूर्णा भवति, तस्यां चैवंभूतायां तुलायां समकरणीं रेखामपहाय शेषा रेखाः पञ्चविंशतिर्भवन्ति ॥ २० ॥ तथा चाह—' सव्वे ' त्यादि,

तुलातद्रेखामानसंख्यादि

तुलायां तोल्यपरिमाणसूचिकाः ‘ सर्वाग्रेण ’ सर्वसंख्यया रेखाः पञ्चविंशतिर्भवन्ति, तासां च पञ्चविंशतिसंख्यानां रेखाणां मध्ये या रेखाः ‘ नंन्दीपिनद्धा ’ फुल्लिकायुक्तास्ताश्चतस्रो वेदितव्याः ॥ २१ ॥ तत्र पञ्चविंशतिमेव रेखाः प्ररूपयति- ‘ समे ’ त्यादि, तुलायां प्रथमा रेखा तावत्समकरणी भवति, यत्र प्रदेशे धरणकसहिता तुला ध्रियमाणा समा भवति तत्र प्रदेशे समतापरिज्ञानार्थमेका रेखा भवतीत्यर्थः, सा पंचविंशतिसंख्यागणने न गण्यते, तस्याः समतापरिज्ञाननिमित्ततया तोल्यवस्तुपरिमाणेऽनुपयोगात्, ततः प्रथमा रेखा ‘ अर्द्धकर्षा ’ अर्द्धकर्षरूपपरिमाणसूचिका भवति, ततः ‘ कर्षोत्तराः ’ कर्षाद्येकैककर्षवृद्धिसूचिकाश्चतस्रो रेखा भवन्ति, तद्यथा-द्वितीया कर्षरूपपरिमाणसूचिका तृतीया द्विकर्षसूचिका चतुर्थी त्रिकर्षसूचिका पंचमी चतुःकर्षसूचिका, पलसूचिकेत्यर्थः, ‘ तत्तो ’ इत्यादि, ततः-पंचमरेखाया ऊर्ध्वं रेखाः ‘ पलोत्तराः ’ एकैकपलवृद्धिसूचिकास्तावद्वसेया यावद्दशकमिति-दशपलसूचिका रेखा, तद्यथा-षष्ठी रेखा द्विपलसूचिका सप्तमी त्रिपलसूचिका अष्टमी चतुष्पलसूचिका नवमी पंचपलसूचिका दशमी षट्पलसूचिका एकादशी सप्तपलसूचिका द्वादश्यष्टपलसूचिका त्रयोदशी नवपलसूचिका चतुर्दशी दशपलसूचिका ‘ बारसे ’ त्यादि ततः पंचदशी रेखा द्वादशपलसूचिका षोडशी पंचदशपलसूचिका सप्तदशी विंशतिपलसूचिका ‘ एत्तो दसुत्तरा अट्ठ ’ त्ति अत ऊर्ध्वमष्टौ रेखाः ‘ दशोत्तराः ’ दशकवृद्ध्या पलपरिमाणसूचिकाः, तद्यथा-अष्टादशी रेखा त्रिंशत्पलसूचिका एकोनविंशतितमा चत्वारिंशत्पलसूचिका विंशतितमा पंचाशत्पलसूचिका एकविंशतितमा षष्टिपलसूचिका द्वाविंशतितमा सप्ततिपलसूचिका त्रयोविंशतितमाऽशीतिपलसूचिका चतुर्विंशतितमा नवतिपलसूचिका पंचविंशतितमा पलशतसूचिका, शतिके काण्डे पंचविंशतितमा रेखा भवतीत्यर्थः, ‘ एवम् ’ उक्तेन प्रकारेण रेखाणां ‘ सर्वसमासः ’ सर्वसंक्षेपः सर्वसंख्येत्यर्थः पंचविंशतिरिति

॥ १० ॥

॥ २२-२३ ॥ यदुक्तं पंचविंशतिरेखाणां मध्ये चतस्रो रेखा नन्दीपिनद्धिका इति तद् व्याचिख्यासुराह—'पंचे' त्यादि, पंचसु पंचदशसु त्रिंशति पंचाशति च या रेखास्ता नन्दीपिनद्धिकाः, किमुक्तं भवति ?—पंचपलपरिमाणसूचिका पंचदशपलपरिमाणसूचिका त्रिंशत्पलपरिमाणसूचिका पंचाशत्पलपरिमारणसूचिका, एताश्चतस्रो रेखाः फुल्लडिकायुक्ताः, शेषा एकविंशतिसंख्या ऋजवः ॥२४॥ तदेवमुक्तं तुलास्वरूपं, सम्प्रति मेयप्रमाणमाह—

तिन्नि उ पलाणि कुलवो करिसऽद्धं चेव होइ बोधव्वो। चत्तारि चेव कुलवा पत्थो पुण मागहो होइ ॥२५॥
चउपत्थमाढगं पुण चत्तारि य आढगाणि दोणो उ। सोलस दोणा खारी खारीओ वीसई बाहो ॥ २६ ॥

इह कुलवो मागधदेशप्रसिद्धो यदा धरिमप्रमाणेन मातुमिष्यते तदा स त्रीणि पलानि एकस्य च कर्षस्य—पलचतुर्भागरूपस्यार्द्धं बोद्धव्यः, चत्वारश्च कुडवा एकत्र पिण्डिता एकः प्रस्थो मागधो भवति, सोऽपि च धरिमप्रमाणचिन्तायां सार्द्धानि द्वादश पलान्यवगन्तव्यः। 'चउपत्थ' मित्यादि, चत्वारः प्रस्थाः समाहृताश्चतुष्प्रस्थसमुदायमेकमाढकं गणितज्ञा वदन्ति, तत्रापि तोल्यत्वचिन्तायां पञ्चाशत्पलान्यवसेयानि, चत्वारः पुनराढकाः समुदिता एको द्रोणः, तत्रापि च द्रोणे पलपरिमाणचिन्तायां द्वे पलशते वेदितव्ये, षोडश च द्रोणा एकत्र समुदिता एका खारी, तस्यां च खार्यां पलानि द्वात्रिंशच्छतानि भवन्ति, विंशतिश्च खार्य एकत्र पिण्डिता एको वाहः, तस्मिंश्च वाहे धरिमप्रमाणचिंतायां चतुःषष्टिपलानां सहस्राणां संख्या ॥२५-२६॥ सम्प्रति प्रस्तुतवक्तव्यतोपसंहारं वक्ष्यमाणवक्तव्यतोपक्षेपं च कुर्वन्नाह—

धरिमस्स य मेयस्स य एस विही नालिगाए उदगस्स । उद्देसे उवइट्ठं उदगपमाणं अओ वोच्छं ॥ २७ ॥

'धरिमस्य' तोल्यस्य 'मेयस्य' कुडवादिप्रमेयस्य 'एषः' अनन्तरोक्तो विधिः, सम्प्रति नालिकाया उदकस्य विषये यत्प्राक् 'उद्देशे' उद्देशविधौ उपदिष्टं यथोदकप्रमाणं वक्ष्ये इति तदत ऊर्ध्वं वक्ष्य इति ॥२७॥ प्रतिज्ञातमेव निर्वाहयति—

उदगस्स नालियाए हवंति दो आढगा उ परिमाणं । उदगं च इच्छियव्वं जारिसगं तं च वोच्छामि ॥ २८ ॥
एयस्स उ परिकम्मं कायव्वं दूसपट्टपारिपूतं । मेहोदयं पसन्नं सारइयं वा गिरिनईणं ॥ २९ ॥
बे नालिया मुहुत्तो सट्ठिं पुण नालिया अहोरत्तो । पन्नरस अहोरत्ता पक्खो तीसं दिणा मासो ॥ ३० ॥
संवच्छरो उ बारस मासो पक्खा य ते चउव्वीसं । तिन्नेव सया सट्ठा हवंति राइंदियाणं तु ॥ ३१ ॥
इय एस कमो भणिओ नियमा संवच्छरस्स कम्मस्स । कम्मोत्ति सावणोत्ति य उउत्ति य तस्स नामाणि ॥३२॥

'उदे'त्यादि, यावत्प्रमाणच्छिद्रेण प्रविष्टेन नालिका परिपूर्णा भवति, तावत्प्रमाणस्य नालिकोदकस्य मेयप्रमाणचिन्तायां द्वावाढकौ परिमाणं भवति, धरिमप्रमाणचिन्तायां पुनः पलशतं, उदकमपि च नालिकायोग्यं यादृशमीप्सितव्यं 'तच्च' तादृशं च तदुदकं वक्ष्यामि, ॥२८॥ तदेवाह-'एये'त्यादि, 'एतस्य' नालिकायोग्यस्योदकस्य प्रथमं परिकर्म्मैतद् द्रष्टव्यं-यदुत दूष्यपट्टगालितं कर्त्तव्यं, अथवा यत्स्वभावत एव 'मेघोदकं' मेघेषु वर्षत्सु यत्कस्मिन्निर्लेपे शुभे स्थाने ध्रियते तन्मेघोदकं तद्वा नालिकायोग्यं ग्रहीतव्यं, यदिवा यद् गिरिनदीनां जलं 'शारदं' शरत्कालभावि प्रसन्नं तदिति ॥२९॥ तदेवं नालिकायोग्यमुदकं नालिकोदक-

परिमाणं चाभिधाय सम्प्रति मुहूर्त्तादिप्रमाणमाह—'वेनाली' त्यादि, द्वे 'नालिके' घटिके समुदिते एको मुहूर्त्तः, स च धरिमप्रमाणचिन्तायां द्वे पलशते मेयप्रमाणचिन्तायां चत्वार आढकाः, षष्टिः पुनः 'नालिकाः' घटिकाः समुदिता एकोऽहोरात्रः, त्रिंशन्मुहूर्त्ता एकोऽहोरात्रमित्यर्थः, तत्र च मेयप्रमाणचिंतायां विंशत्युत्तरमाढकशतं धरिमप्रमाणचिंतायां षट् पलसहस्राणि, तानि यदि भारीकृत्य चिंत्यन्ते तदा त्रयो भारा भवन्ति, पंचदशाहोरात्रा एकः पक्षः, स च मेयप्रमाणचिंतायामष्टादशाढकशतानि धरिमप्रमाणचिंतायां पंचचत्वारिंशद्भाराः, तथा त्रिंशद् 'दिनानि' अहोरात्रा एको मासः, स च धरिमप्रमाणचिंतायां नवतिर्भाराः मेयप्रमाणचिन्तायां षट्त्रिंशदाढकशतानि ॥३०॥ 'संवच्छरे' त्यादि, ते अनन्तरोक्तप्रमाणा मासा द्वादशसंख्या एकः संवत्सरो भवति, ते च द्वादश मासाः पक्षतया चिंत्यमानाश्चतुर्विंशतिः पक्षाः भवन्ति, रात्रिंदिवसतया चिंत्यमानास्त्रीणि शतानि षष्ठीनि-षष्ट्यधिकानि भवन्ति. 'रात्रिंदिवानाम्' अहोरात्राणां, एष च संवत्सरो यदा मेयरूपतया चिंत्यते तदा शतद्वयाधिकानि त्रिचत्वारिंशत्सहस्राण्याढकानां भवन्ति ४३२००, तोल्यरूपतया तु चिंत्यमानो भाराणामेकं सहस्रमशीत्यधिकं १०८०, एष च संवत्सरो लोके कर्मसंवत्सर इति ऋतुसंवत्सर इति च प्रसिद्धिं गतः, तथाहि-लौकिकास्त्रिंशतमहोरात्रान् मासं परिगणयंति, इत्थम्भूतमासद्वयात्मकं च वसन्तादिकमृतुं, तथाभूतानां षण्णां वसन्तादीनामृतूनां समुदायं संवत्सरं, यानि च लोके कर्माणि प्रवर्त्तंते तानि सर्वाण्यमुं संवत्सरमधिकृत्येत्येष कर्मसंवत्सरः सावनसंवत्सर ऋतुसंवत्सर इति ख्यातः ॥ ३१ ॥ तथा चाह—'इये' त्यादि, 'एष' पूर्वोक्तक्रमो 'भणितः' ज्ञातव्यो नियमात् 'कर्मणः' कर्मनामसंवत्सरस्य, तस्य चैवंरूपस्य सवत्सरस्यामूनि नामानि, तद्यथा- 'कर्मे' ति कर्म-लौकिको व्यवहारस्तत्प्रधानतः संवत्सरोऽप्युपचारात्कर्म, 'सावणो' त्ति सवनं-कर्मसु प्रेरणं 'सू प्रेरणे' इति वचनात् तत्र भव एष संवत्सर इति सावनः, ऋतु:-

लोकप्रसिद्धो वसन्तादिस्तत्प्रधान एष संवत्सर इत्युपचाराद् ऋतुः ॥ ३२ ॥ संप्रति संवत्सरप्रस्तावादशेषसंवत्सरप्ररूपणार्थमाह—

आइच्चो उडु चंदो रिक्खो अभिवड्डिओ य पंचेए। संवच्छरा जिणमए जुगस्स माणे विधीयंते ॥ ३३ ॥

'जिनमते' जिनशासने पंचैते संवत्सराः प्ररूप्यन्ते, तद्यथा- 'आइच्चो' त्ति पदैकदेशे पदसमुदायोपचाराद् आदित्यसंवत्सर ऋतुसंवत्सरश्चन्द्रसंवत्सरो नक्षत्रसंवत्सरोऽभिवर्द्धितसंवत्सर इति, एते पंचापि संवत्सरा युगस्य 'माने' प्रमाणे विधीयन्ते, वक्ष्यमाण-सूर्यसंवत्सरपंचात्मकयुगचिंतायामेते उपयुज्यन्त इत्यर्थः, यथा चैते तत्रोपयुज्यन्ते तथाऽग्रे युगमासपरिमाणचिंतायां भावयिष्यामः ॥३३॥ सम्प्रत्यमूनेव सूर्यादीन् संवत्सरान् प्रतिपादयति-

छप्पि उऊ परियट्टा एसो संवच्छरो उ आइच्चो। पुव्वं भणिओ कम्मो एत्तो चंदं पवुच्छामि ॥ ३४ ॥
पुण्णिमपरियट्टा पुण बारस संवच्छरो हवइ चंदो। नक्खत्तचंदजोगो बारसगुणिओ उ नक्खत्तो ॥ ३५ ॥
तेरस य चंदमासा एसो अभिवड्डिओ उ नायव्वो। मासाणं तु पमाणं वोच्छं सव्वेसि वासाणं ॥ ३६ ॥
आइच्चो खलु मासो तीसं अद्धं च सावणो तीसा। चंदो एगुणतीसं बिसट्ठिभागा य बत्तीसा ॥ ३७ ॥
नक्खत्तो खलु मासो सत्तावीसं भवे अहोरत्ता। अंसा य एकवीसं सत्तट्ठिकएण छेएणं ॥ ३८ ॥
अभिवड्डिओ उ मासो एक्कत्तीसं भवे अहोरत्ता। भागसयमेगवीसं चउवीससएण छेएणं ॥ ३९ ॥

षडपि प्रावृडादय ऋतवो यदा परिपूर्णाः आवृत्ता भवन्ति तदा स आदित्यसंवत्सरो भवति, यद्यपि च लोके षष्ट्यहोरात्र-

प्रमाणः प्रावृडादिक ऋतुः प्रसिद्धस्तथाऽपि परमार्थतः स एकषष्ट्यहोरात्रप्रमाणो वेदितव्यः, तत्रैवोत्तरकालमव्यभिचारदर्शनात्, अत एव तस्मिन् संवत्सरे त्रीणि शतानि षट्षष्ट्यधिकानि रात्रिन्दिवानामवसेयानि, पूर्वं भणितः- पूर्वं प्रतिपादितः 'कर्म' कर्मसंवत्सर इति नाम्ना भूयोऽभिधीयते, किन्तु पूर्वप्रतिपादित एवात्रावधारणीयः, तत्र च रात्रिन्दिवपरिमाणं त्रीणि शतानि षष्ट्यधिकानि, एतच्च प्रागेवोक्तमत ऊर्ध्वं 'चान्द्रं' चन्द्रसंवत्सरं प्रवक्ष्यामि ॥ ३४ ॥ प्रतिज्ञातमेव निर्वाहयति-' द्वादश ' द्वादशसङ्ख्याः पौर्णमासीपरावर्त्ता एकश्चन्द्रः-एकश्चन्द्रसंवत्सरो भवति, एकश्च पौर्णमासीपरावर्त्त एकश्चान्द्रो मासः, तस्मिंश्च चान्द्रे मासे रात्रिन्दिवपरिमाणचिन्तायामेकोनत्रिंशद्रात्रिन्दिवानि द्वात्रिंशद् द्वाषष्टिभागा रात्रिंदिवस्य, एतद् द्वादशभिर्गुण्यते, जातानि त्रीणि शतानि चतुष्पञ्चाशदधिकानि रात्रिंदिवानां द्वादश च द्वाषष्टिभागा रात्रिंदिवस्य, एवंपरिमाणश्चान्द्रः संवत्सरः । सम्प्रति नक्षत्रसंवत्सरमाह-नक्षत्रचन्द्रयोगाः-सप्तविंशत्या नक्षत्रैः साकल्येन य एकक्रामणयोग एष द्वादशभिर्गुणितो 'नक्षत्रो' नक्षत्रसंवत्सरो भवति, अत्र पुनरेकः समस्तनक्षत्रयोगपर्याय एव नक्षत्रमासः, स च सप्तविंशतिरहोरात्रा एकविंशतिश्च सप्तषष्टिभागा अहोरात्रस्य, एष राशिर्यदा द्वादशभिर्गुण्यते तदा त्रीण्यहोरात्रशतानि सप्तविंशत्यधिकानि एकपञ्चाशच्च सप्तषष्टिभागा अहोरात्रस्य, एतावत्प्रमाणो नक्षत्रसंवत्सरः ॥३५॥ साम्प्रतमभिवर्द्धितसंवत्सरमाह-त्रयोदश चन्द्रमासा यस्मिन् संवत्सरे भवन्ति स एष संवत्सरोऽभिवर्द्धित इत्युच्यते, एकस्मिंश्च चन्द्रमासेऽहोरात्रा एकोनत्रिंशत् भवन्ति द्वात्रिंशत् द्वाषष्टिभागा अहोरात्रस्य, एष राशिस्त्रयोदशभिर्गुण्यते, जातानि त्रीण्यहोरात्रशतानि अशीत्यधिकानि चतुश्चत्वारिंशच्च द्वाषष्टिभागा अहोरात्रस्य, एतावद्रात्रिन्दिवपरिमाणोऽभिवर्धितसंवत्सरः, संप्रति एतदेवानन्तरभावितं रात्रिन्दिवपरिमाणं क्रमेण संवत्सराणां साक्षादुपदेष्टुकामः प्रथमतो मासपरिमाणार्थमाह-'सर्वेषां' पञ्चानामपि

सूर्यादि मास दिनसंख्या

'वर्षाणां' संवत्सराणां क्रमेण मासानां परिमाणं वक्ष्ये ॥३६॥ तदेवाह-'आदित्य' आदित्यसंवत्सरसम्बन्धी खलु मासो भवति त्रिंशद्रात्रिंदिवानि एकस्य च रात्रिन्दिवस्यार्द्धं, तथाहि-सूर्यसंवत्सरस्य परिमाणं त्रीणि शतानि षट्षष्ट्यधिकानि रात्रिंदिवानि, द्वादशभिश्च मासैः संवत्सरः, ततस्त्रयाणां शतानां षट्षष्ट्यधिकानां द्वादशभिर्भागे हृते यथोक्तं मासपरिमाणं भवति । तथा सावनो मासः-कर्ममासस्त्रिंशद् रात्रिंदिवानि, तथाहि-कर्मसंवत्सरस्त्रीणि शतानि षष्ट्यधिकानि, तेषां द्वादशभिर्भागे हृते भवति यथोक्तं कर्ममासपरिमाणं, तथा चन्द्रमास एकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागा दिनस्य, तथाहि-चान्द्रसंवत्सरस्त्रीण्यहोरात्रशतानि चतुष्पञ्चाशदधिकानि द्वादश च द्वाषष्टिभागा अहोरात्रस्य, तत्र त्रयाणां शतानां चतुष्पञ्चाशदधिकानां द्वादशभिर्भागो ह्रियते, लब्धा एकोनत्रिंशदहोरात्राः, शेषास्तिष्ठन्ति षडहोरात्राः, ते द्वाषष्टिभागकरणार्थं द्वाषष्ट्या गुण्यन्ते, जातानि त्रीणि शतानि द्विसप्तत्यधिकानि, येऽपि च द्वादश द्वाषष्टिभागा उपरितनास्तेऽपि तत्र प्रक्षिप्यन्ते, जातानि त्रीणि शतानि चतुरशीत्यधिकानि, तेषां द्वादशभिर्भागे हृते लब्धा द्वात्रिंशद् द्वाषष्टिभागाः, एतावच्चन्द्रमासपरिमाणं ॥ ३७ ॥ नक्षत्रमासः सप्तविंशतिरहोरात्र एकविंशतिश्च सप्तषष्टिभागा अहोरात्रस्य, नक्षत्रसंवत्सरे ह्यहोरात्रास्त्रीणि शतानि सप्तविंशत्यधिकानि एकपञ्चाशच्च सप्तषष्टिभागा अहोरात्रस्य, तत्त्रयाणां शतानां सप्तविंशत्यधिकानां द्वादशभिर्भागो ह्रियेत, लब्धाः सप्तविंशतिरहोरात्राः, शेषास्त्रयस्तिष्ठन्ति, तेऽपि सप्तषष्टिभागकरणार्थं सप्तषष्ट्या गुण्यन्ते, जाते द्वे शते एकोत्तरे २०१, येऽपि चोपरितना एकपञ्चाशत् सप्तषष्टिभागास्तेऽपि च तत्र प्रक्षिप्यन्ते, जाते द्वे शते द्विपञ्चाशदधिकानि (के) २५२, तेषां द्वादशभिर्भागे हृते लब्धा एकविंशतिः सप्तषष्टिभागाः,आगतं यथोक्तं नक्षत्रमासपरिमाणम् । अभिवर्द्धिते मासे एकत्रिंशदहोरात्रा एकविंशत्युत्तरं शतं चतुर्विंशत्युत्तरशतभागानामहोरात्रस्य, तथाहि-अभिवर्द्धितसंव-

स्त्रसाणि रात्रिंदिवशतानि त्र्यशीत्यधिकानि चतुश्चत्वारिंशच्च द्वाषष्टिभागा अहोरात्रस्य, तत्र त्रयाणां शतानां त्र्यशीत्यधिकानां द्वादशभिर्भागो ह्रियते, लब्धा एकत्रिंशदहोरात्राः, शेषास्तिष्ठन्त्येकादशाहोरात्राः,ते चतुर्विंशत्युत्तरशतभागकरणार्थं चतुर्विंशत्युत्तरेण शतेन गुण्यन्ते, जातानि त्रयोदश शतानि चतुःषष्ट्यधिकानि १३६४, येऽपि चोपरितनाश्चतुश्चत्वारिंशद् द्वाषष्टिभागास्तेऽपि द्वाभ्यां गुण्यन्ते, जाता अष्टाशीतिः, साऽनन्तरराशौ प्रक्षिप्यते, जातानि चतुर्दश शतानि द्विपञ्चाशदधिकानि १४५२, तेषां द्वादशभिर्भागे हृते लब्धमेकविंशत्युत्तरशतं भागानामिति ॥ ३९ ॥ सम्प्रति प्रतिसंवत्सरमहोरात्रप्रमाणमाह—

तिन्नि अहोरत्तसया छावट्ठा भक्खरो हवइ वासो । तिन्नि सया पुण सट्ठा कम्मो संवच्छरो हवइ ॥ ४० ॥

तिन्नि अहोरत्तसया चउपण्णा नियमसो हवइ चंदो । भागा य बारसेव य बावट्ठिकएण छेएण ॥ ४१ ॥ अ

तिण्णि अहोरत्तसया सत्तावीसाय होन्ति नक्खत्ते । एक्कावन्नं भागा सत्तट्ठिकएण छेएण ॥ ४१ ॥ च

तिण्णि अहोरत्तसया तेसीइं चेव होइ अभिवड्ढे । चोयालीसं भागा बावट्ठिकएण छेएण ॥ ४२ ॥

एता व्याख्यातार्थाः ॥ ४०-४२ ॥ तदेवमुक्तं प्रति संवत्सरं रात्रिंदिवपरिमाणम्, एकैकस्मिंश्च रात्रिंदिवे त्रिंशन्मुहूर्त्ताः, तत एकैकस्मिन् संवत्सरे यावन्तो मुहूर्त्ता भवन्ति तदेतत्क्रमेण प्रतिपिपादयिषुराह-

दस चेव सहस्साइं नव चेव सया हवंतऽसीया य । एयं मुहुत्तगणियं नेयव्वं सूरवासस्स ॥ ४३ ॥

दस चेव सहस्साइं अट्ठेव सया हवंति संपुण्णा । एयं मुहुत्तगणियं नायव्वं कम्मवासस्स ॥ ४४ ॥

चंदे मुहुत्तगणितं सयाणि छच्चेव पणवीसाणि । दस य सहस्सा पुण्णा बिसट्ठिभागा य पन्नासं ॥४५॥
नव चेव सहस्साइं सयाणि अट्ठेव होंति बत्तीसा । नक्खत्ते खलु वासे छप्पण सगसट्ठिभागा य ॥ ४६ ॥
एक्कारस य सहस्सा पंचेव सया हवंति एक्कारा । अभिवड्ढिए मुहुत्ता वासे अट्ठारस य भागा ॥ ४७ ॥

'सूर्यवर्षस्य' सूर्यसंवत्सरस्य 'मुहूर्त्तगणितं' मुहूर्त्तपरिमाणमेतज्ज्ञातव्यं, किं तत् ? इत्याह- दश सहस्राणि नव शतानि 'अशीतानि' अशीत्यधिकानि, तथाहि— सूर्यसंवत्सरेऽहोरात्राणां त्रीणि शतानि षट्षष्ट्यधिकानि भवन्ति, एकैकस्मिंश्चाहोरात्रे त्रिंशन्मुहूर्त्ताः, ततस्त्रीणि शतानि षट्षष्ट्यधिकानि त्रिंशता गुण्यन्ते, ततो यथोक्तं मुहूर्त्तपरिमाणं भवति ॥ ४३ ॥ 'कर्मवर्षस्य' कर्मसंवत्सरस्य मुहूर्त्तगणितमेतज्ज्ञातव्यं, यदुत दश सहस्राणि परिपूर्णानि चाष्टौ शतानि १०८००, तथाहि-कर्मसंवत्सरे रात्रिंदिवानि त्रीणि शतानि षष्ट्यधिकानि, ततस्तानि त्रिंशता गुण्यन्ते, ततो यथोक्तं मुहूर्त्तगणितमागच्छति ॥४४॥ 'चान्द्रे' चन्द्रसंवत्सरे 'मुहूर्तगणितं' मुहूर्त्तपरिमाणं दश सहस्राणि षट् शतानि 'पञ्चविंशानि' पञ्चविंशत्यधिकानि मुहूर्त्तानाम्, एकस्य च मुहूर्त्तस्य द्वाषष्टिभागाः परिपूर्णाः पञ्चाशत् १०६२५-५०।६२ तथाहि-चान्द्रे संवत्सरे रात्रिंदिवानि त्रीणि शतानि चतुष्पञ्चाशदधिकानि द्वादश च द्वाषष्टिभागा रात्रिन्दिवस्य, ततस्त्रीणि शतानि चतुष्पञ्चाशदधिकानि रात्रिंदिवानां त्रिंशता गुण्यन्ते, जातानि मुहूर्त्तानां दश सहस्राणि षट् शतानि विंशत्यधिकानि १०६२०, येऽपि च द्वादश द्वाषष्टिभागा रात्रिंदिवस्य तेऽपि त्रिंशता गुण्यन्ते, जातानि त्रीणि शतानि षष्ट्यधिकानि ३६०, एतेषां द्वाषष्ट्या भागे हृते लब्धाः पंच मुहूर्त्ताः,

ज्योतिष्क-रण्डे श्रीम-लयगिरी-यायां २ अधि०

॥ १९ ॥

आदित्यादिवर्षाणां मुहूर्त्तमानं

शेषास्तिष्ठन्ति पंचाशद् द्वाषष्टिभागा मुहूर्त्तस्य, मुहूर्त्ताश्च मुहूर्त्तराशौ प्रक्षिप्यन्ते, ततो यथोक्तं मुहूर्त्तप्रमाणं भवति १०६२५-५०।६२
॥४५॥ 'नक्षत्रे' नक्षत्रसम्बन्धिनि संवत्सरे मुहूर्त्तानां नव सहस्राण्यष्टौ शतानि 'द्वात्रिंशानि' द्वात्रिंशदधिकानि भवन्ति षट्पंचाशच्च सप्तषष्टिभागा मुहूर्त्तस्य ९८३२-५६।६७ तथाहि- नक्षत्रसंवत्सरे त्रीण्यहोरात्रशतानि सप्तविंशत्याधिकानि एकपंचाशच्च सप्तषष्टिभागा रात्रिंदिवस्य, तत्र त्रीणि शतानि सप्तविंशत्यधिकानि त्रिंशता गुण्यन्ते, जातानि नव सहस्राण्यष्टौ शतानि दशोत्तराणि ९८१०, येऽपि चैकपंचाशत्सप्तषष्टिभागा रात्रिंदिवस्य तेऽपि त्रिंशता गुण्यन्ते, जातानि पंचदश शतानि त्रिंशदधिकानि १५३०, तेषां सप्तषष्ट्या भागो ह्रियते, लब्धा द्वाविंशतिर्मुहूर्त्ताः, शेषास्तिष्ठन्ति षट्पंचाशत् सप्तषष्टिभागाः, मुहूर्त्ताश्च मुहूर्त्तराशौ प्रक्षिप्यन्ते, ततो भवति यथोक्तं मुहूर्त्तपरिमाणमिति ॥ ४६ ॥ अभिवर्द्धिते संवत्सरे मुहूर्त्ता भवन्ति-एकादश सहस्राणि पंच शतान्येकादशानि-एकादशाधिकानि अष्टादश च द्वाषष्टिभागा मुहूर्त्तस्य ११५११-१८।६२ तथाहि-अभिवर्द्धिते संवत्सरे रात्रिंदिवानां त्रीणि शतानि त्र्यशीत्यधिकानि चतुश्चत्वारिंशच्च द्वाषष्टिभागा रात्रिंदिवस्य ३८३-४४।६२, तत्र त्रीणि शतानि त्र्यशीत्याधिकानि त्रिंशता गुण्यन्ते, जातान्येकादश सहस्राणि चत्वारि शतानि नवत्यधिकानि ११४९०, येऽपि च चतुश्चत्वारिंशद् द्वाषष्टिभागास्तेऽपि त्रिंशता गुण्यन्ते, जातानि त्रयोदश शतानि विंशत्यधिकानि १३२०, तेषां द्वाषष्ट्या भागो ह्रियते, लब्धा एकविंशतिर्मुहूर्त्ताः, शेषास्तिष्ठन्त्यष्टादश द्वाषष्टिभागा मुहूर्त्तस्य, मुहूर्त्ताश्च मुहूर्त्तराशौ प्रक्षिप्यन्ते, यथोक्तं परिमाणमागच्छति ॥४७॥ सम्प्रति तोल्यरूपतया मेयरूपतया च क्रमेण पंचानामपि संवत्सराणां क्रियते चिन्ता, तत्र सूर्यसंवत्सरस्तोल्यरूपतया चिंत्यमानो भारसहस्रमष्टानवत्यधिकं १०९८, तथाहि-सूर्यसंवत्सरे त्रीणि शतानि षट्षष्ट्यधिकान्यहोरात्राणां, अहोरात्रो भारत्रितयप्रमाणः, ततस्त्रीणि शतानि षट्षष्ट्यधिकानि त्रिभिर्गु-

॥ १९ ॥

आदित्यादीनांतोल्यमेयमाने

ष्यन्ते, जातं सहस्रमष्टानवत्यधिकमिति । मेयरूपतया तु स एव सूर्यसंवत्सरश्चिन्त्यमानस्त्रिचत्वारिंशदाढकसहस्राणि नव शतानि विंशत्युत्तराणि ४३९२०, तथाहि-एकैकस्मिन्नहोरात्रे विंशत्युत्तरमाढकशतं भवति, ततस्त्रीणि शतानि षट्षष्ट्यधिकानि विंशत्युत्तरेण शतेन गुण्यन्ते, गुणने च सति यथोक्तमाढकपरिमाणमागच्छति ॥ कर्मसंवत्सरे तोल्यरूपतया मेयरूपतया च चिंता प्रागेव कृता । चन्द्रसंवत्सरस्तोल्यरूपतया चिन्त्यमानो भारसहस्रं द्वाषष्ट्यधिकं षट्त्रिंशच द्वाषष्टिभागा भारस्य १०६२-३६।६२ तथाहि-चान्द्रे संवत्सरे त्रीण्यहोरात्रशतानि चतुष्पंचाशदधिकानि द्वादश च द्वाषष्टिभागा १२।६२ रात्रिंदिवस्य, एकैकस्मिंश्च रात्रिंदिवे भारत्रयं, तत्र-त्रीणि शतानि चतुष्पंचाशदधिकानि त्रिभिर्गुण्यन्ते, जातानि दश शतानि द्वाषष्ट्यधिकानि भाराणां, येऽपि च द्वादश द्वाषष्टिभागास्तेऽपि त्रिभिर्गुण्यन्ते, जाताः षट्त्रिंशद् द्वाषष्टिभागा भारस्य, मेयरूपतया तु स एव चान्द्रः संवत्सरश्चिंत्यमानो द्विचत्वारिंशत्सहस्राणि पंच शतान्युत्तराण्याढकानां भवन्ति चतुर्दश च द्वाषष्टिभागा आढकस्य ४२५०३-१४।६२ तथाहि-त्रीणि शतानि चतुष्पंचाशदधिकानि विंशत्युत्तरेण शतेन गुण्यन्ते, एकैकस्मिन् रात्रिंदिवे विंशत्युत्तरस्याढकशतस्य भावाज्जातानि द्विचत्वारिंशत्सहस्राणि चत्वारि शतान्यशीत्यधिकान्याढकानां ४२४८०, येऽपि च द्वादश द्वाषष्टिभागास्तेऽपि विंशत्युत्तरेण शतेन गुण्यन्ते, जातानि चतुर्दश शतानि चत्वारिंशदधिकानि १४४०, तेषां द्वाषष्ट्या भागे हृते लब्धास्त्रयोविंशतिराढकाः, शेषास्तु चतुर्दश द्वाषष्टिभागास्तिष्ठन्ति, आढकाश्चाढकराशौ प्रक्षिप्यन्ते, ततो यथोक्तमाढकपरिमाणं भवति । नक्षत्रसंवत्सरस्तोल्यरूपतया चिन्त्यमानो नव भारशतानि त्र्यशीत्यधिकानि एकोनविंशतिश्च सप्तषष्टिभागा भारस्य ९८३-१९।६७तथाहि-नक्षत्रसंवत्सरे त्रीणि शतानि सप्तविंशत्यधिकान्यहोरात्राणां एकपंचाशच्च सप्तषष्टिभागा अहोरात्रस्य, एकैकस्मिंश्चाहोरात्रे भारत्रयं,

॥ २० ॥

तवस्त्रीणि शतानि सप्तविंशत्यधिकानि त्रिभिर्गुण्यन्ते, जातानि नव शतान्येकाशीत्यधिकानि ९८१, एकपंचाशच्च सप्तषष्टिभागाः त्रिभिर्गुण्यन्ते, जातं त्रिपंचाशदधिकमेकं शतं १५३, तस्य सप्तषष्ट्या भागे हृते लब्धौ द्वौ भारौ, शेषाश्चैकोनविंशतिः सप्तषष्टिभागास्तिष्ठन्ति, लब्धौ च भारौ भारराशिमध्ये प्रक्षिप्येते, ततो यथोक्तं भारपरिमाणं भवति, मेयरूपतया तु स एव नक्षत्रसंवत्सर एकोनचत्वारिंशत्सहस्राणि त्रीणि शतान्येकत्रिंशदधिकान्याढकानां भवन्ति त्रयोविंशतिश्च सप्तषष्टिभागा आढकस्य ३९३३१-२३|६७ तथाहि-एकैकस्मिन्नहोरात्रे विंशत्युत्तरमाढकशतं, ततस्त्रीणि शतानि सप्तविंशत्यधिकान्यहोरात्राणां विंशत्युत्तराढक शतेन गुण्यन्ते, जातानि एकोनचत्वारिंशत् सहस्राणि द्वे शते चत्वारिंशदधिके आढकानां ३९२४०, येऽपि चैकपंचाशत्सप्तषष्टिभागास्तेऽपि विंशत्युत्तरेण शतेन गुण्यन्ते, जातान्येकषष्टिशतानि विंशत्युत्तराणि ६१२०, तेषां सप्तषष्ट्या भागे हृते लब्धा एकनवतिराढकाः ९१, शेषास्तिष्ठन्ति त्रयोविंशतिः सप्तषष्टिभागाः, आढकाश्चाढकराशौ प्रक्षिप्यन्ते, ततः प्रागुक्तमाढकपरिमाणं भवति । तथाऽभिवर्द्धितसंवत्सरस्तोल्यरूपतया चिन्त्यमान एकादश भारशतान्येकपंचाशदधिकानि अष्टौ च द्वाषष्टिभागा भारस्य भवन्ति, तथाहि-अभिवर्द्धितसंवत्सरे त्रीण्यहोरात्रशतानि त्र्यशीत्यधिकानि भवन्ति चतुश्चत्वारिंशच्च द्वाषष्टिभागा अहोरात्रस्य, एकैकस्मिंश्चाहोरात्रे भारत्रितयं, ततस्त्रीणि शतानि त्र्यशीत्यधिकानि त्रिभिर्गुण्यन्ते, जातान्येकादश शतान्येकोनपंचाशदधिकानि ११४९, येऽपि च चतुश्चत्वारिंशद् द्वाषष्टिभागास्तेऽपि त्रिभिर्गुण्यन्ते जातं द्वात्रिंशं शतं १३२, तस्य द्वाषष्ट्या भागे हृते लब्धौ द्वौ भारौ, शेषाश्चाष्टौ द्वाषष्टिभागास्तिष्ठन्ति, लब्धौ च द्वौ भारौ प्रागुक्तभारराशिमध्ये प्रक्षिप्येते, ततो यथोक्तं तोल्यपरिमाणं भवति । स एव चाभिवर्द्धितः संवत्सरो मेयरूपतया चिन्त्यमानः पट्चत्वारिंशदाढकसहस्राणि पंचचत्वारिंशदधिकानि दश च द्वाषष्टिभागा आढकस्य भवन्ति ४६०४५-१०|६२ तथाहि-एकैक-

स्मिन्नहोरात्रे विंशत्युत्तरमाढकशतं, ततस्त्रीणि शतानि त्र्यशीत्यधिकान्यहोरात्राणां विंशत्युत्तरेण शतेन गुण्यन्ते, जातान्याढकानां पंचचत्वारिंशत्सहस्राणि नव शतानि षष्ट्यधिकानि ४५९६०, येऽपि च चतुश्चत्वारिंशद् द्वाषष्टिभागास्तेऽपि विंशत्युत्तरेण शतेन गुण्यन्ते, जातानि द्विपंचाशच्छतान्यशीत्यधिकानि, तेषां द्वाषष्ट्या भागे हृते लब्धाः पंचाशीतिराढकाः, शेषास्तिष्ठन्ति दश द्वाषष्टिभागाः, आढकाश्च आढकराशौ प्रक्षिप्यन्ते, ततो भवति यथोक्तमाढकपरिमाणमिति ॥ ४७ ॥ सम्प्रति प्रस्तुतवक्तव्यतोपसंहारं वक्ष्यमाणवक्तव्यतोपक्षेपं च कुर्वन्नाह–

एए पमाणवासा पंचवि उववणिणया जहुद्दिट्ठा । एत्तो जुगवासाणि य वोच्छामि अहाणुपुव्वीए ॥ ४८ ॥

अत्रगाथायां नपुंसकत्वेऽपि पुंस्त्वनिर्देशः प्राकृतत्वात्, भवति च प्राकृते यथेच्छं लिङ्गव्यत्ययो, यदाह पाणिनिः-' लिंगं व्यभिचार्यपी ' ति, ' एतानि ' अनन्तरोक्तानि ' प्रमाणवर्षाणि ' अहोरात्रप्रमाणकारीणि वर्षाणि यदिवा लौकिकं लोकोत्तरं वा व्यवहारमधिकृत्य यथायोगं प्रमाणभूतानि वर्षाणि ' यथोद्दिष्टानि ' येन क्रमेणोद्दिष्टानि पूर्वं तेनैव क्रमेण पंचाप्युपवर्णितानि, अत ऊर्ध्वं ' यथानुपूर्व्या ' यथानुक्रमेण ' युगवर्षाणि ' यैर्वर्षैर्युगं-सूर्यसंवत्सरपंचात्मकं भवति तान्यपि वक्ष्ये ॥ ४८ ॥ तान्येवाह–

चंदो चंदो अभिवड्ढिओ य चंदमभिवड्ढिओ चेव । पंचहिं सहियं जुगमिणं दिट्ठं तेलोकदंसीहिं ॥ ४९ ॥
पढमबिइया उ चंदा तइयं अभिवड्ढियं विजाणाहि । चंदं चेव चउत्थं पंचममभिवड्ढियं जाण ॥ ५० ॥

चान्द्रः चान्द्रस्तदनन्तरमभिवर्द्धितस्ततो भूयश्चान्द्रः, अत्र मकारोऽलाक्षणिकः, ततोऽभिवर्द्धितः, एतैरेभिर्वा पंचभिर्वर्षैः सहितं,

किमुक्तं भवति ?–एतत्पञ्चवर्षात्मकं युगम्, इत्थम्भूतं च युगमिदं दृष्टं 'त्रैलोक्यदर्शिभिः' सर्वज्ञैः–तीर्थकृद्भिस्ततोऽवश्यमिदं तथेति श्रद्धेयम् ॥ ४९ ॥ एतदेव व्याख्यानयति–युगे–पञ्चसंवत्सरात्मकेऽनन्तरमुद्दिष्टे प्रथमद्वितीयौ संवत्सरौ चान्द्रौ ज्ञातव्यौ, तृतीयं संवत्सरमभिवर्द्धितं जानीहि, चतुर्थं संवत्सरं भूयश्चान्द्रमेव जानीहि, पंचममभिवर्द्धितम्, अत्र ये त्रयश्चान्द्राः संवत्सरास्ते द्वादशमासिकाः, यौ तु द्वावभिवर्द्धिताख्यौ संवत्सरौ तौ त्रयोदशमासकौ चन्द्रमासप्रमाणेन, अत्र द्वितीयस्य चान्द्रसंवत्सरस्य य आदिसमयस्तदनन्तरः पश्चाद्भावी समयः प्रथमचान्द्रसंवत्सरस्य पर्यवसानं च, तदानीं च चंद्रमसो योग उत्तराषाढाभिः, उत्तराषाढानां च तदानीं शेषीभूताःषड्विंशतिर्मुहूर्त्ताः षड्विंशतिश्च द्वाषष्टिभागा मुहूर्त्तस्य द्वाषष्टिभागस्य सप्तषष्टिधा छिन्नस्य सत्काश्चतुष्पंचाशद्भागाः, उक्तं च–"जे णं दोच्चस्स चंदसंवच्छरस्स आई से णं पढमस्स चंदसंवच्छरस्स पज्जवसाणे अणंतरपच्छाकडे समये, तंसमयं च णं चंदे केणं नक्खत्तेणं जोएइ,? ता उत्तराहिं आसाढाहिं,उत्तराणं आसाढाणं छव्वीसं च मुहुत्ता छव्वीसं बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता चउपण्णं चुण्णिया सेसा" इति। तदानीं च सूर्यस्य योगः पुनर्वसुनक्षत्रेण, पुनर्वसुनक्षत्रस्य च तदा शेषीभूताः षोडश मुहूर्त्ता अष्ट द्वाषष्टिभागा मुहूर्त्तस्य एकस्य च द्वाषष्टिभागस्य सप्तषष्टिधाछिन्नस्य सत्का विंशतिर्भागाः, उक्तं च–'तंसमयं च णं सूरे केणं नक्खत्तेणं जोएइ ?, ता पुणव्वसुणा, पुणव्वसुस्स सोलस मुहुत्ता अट्ठ य बावट्ठि भागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छित्ता वीसं चुण्णिया भागा सेसा" इति। तृतीयस्याभिवर्द्धिताख्यस्य संवत्सरस्य य आदिसमयस्तदनन्तरं पश्चाद्भावी समयो द्वितीयस्य चान्द्रसंवत्सरस्य पर्यवसानं, तदानीं च चन्द्रमसो योगः पूर्वाषाढाभिः, तासां च पूर्वाषाढानां शेषीभूताः सप्त मुहूर्त्तास्त्रिपंचाशच्च द्वाषष्टिभागा मुहूर्त्तस्य एकस्य च द्वाषष्टिभागस्य सप्तषष्टिधा छिन्नस्य सत्का एकोनचत्वारिंशद्भागाः, उक्तं च–"जे णं तच्चस्स अभिवड्ढियसंवच्छरस्स आई से णं

दोच्चस्स चंदसंवच्छरस्स पज्जवसाणे अणंतरपच्छाकडे समए, तंसमयं च णं चंदे केणं नक्खत्तेणं जोएइ ?, ता पुव्वाहिं आसा-
ढाहिं, पुव्वाणं आसाढाणं सत्त मुहुत्ता तेवण्णं च बावट्ठिभागा मुहुत्तस्स बावट्ठि च सत्तछट्ठिहा छित्ता ईयालीसं चुण्णिया भागा
सेसा" इति, तदानीं च सूर्यस्य योगः पुनर्वसुनक्षत्रेण, तस्य च पुनर्वसुनक्षत्रस्य तदा शेषीभूता द्विचत्वारिंशन्मुहूर्त्ताः पंचत्रिंशच्च
द्वाषष्टिभागा मुहूर्त्तस्य एकस्य च द्वाषष्टिभागस्य सप्तषष्टिधा छिन्नस्य सत्काः सप्त भागाः, उक्तं च–"तंसमयं च णं सूरे केणं नक्ख-
त्तेणं जोएइ ?, ता पुणव्वसुणा, पुणव्वसुस्स णं बायालीसं मुहुत्ता पणतीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा -
छित्ता सत्त चुण्णिया भागा सेसा " इति, चतुर्थस्य चान्द्रस्य संवत्सरस्य य आदि समयस्तदनन्तरः पश्चाद्भावी समयस्तदनन्तरम-
भिवर्द्धिताख्यस्य संवत्सरस्य पर्यवसानं, तदानीं च चन्द्रमसो योग उत्तराषाढाभिः, तासां चोत्तराषाढानां शेषीभूतानां तदानीं
त्रयोदश मुहूर्त्ताः त्रयोदश च द्वाषष्टिभागा मुहूर्त्तस्य एकस्य च द्वाषष्टिभागस्य सप्तषष्टिधा छिन्नस्य सत्काः सप्तविंशतिभागाः
उक्तं च-"जे णं चउत्थस्स चंदसंवच्छरस्स आई से णं तच्चस्स अभिवड्ढियसंवच्छरस्स पज्जवसाणे अणंतरपच्छाकडे समये, तं समयं
च णं चंदे केणं नक्खत्तेणं जोएइ ?, ता उत्तराहिं आसाढाहिं, उत्तराणं आसाढाणं तेरस मुहुत्ता तेरस य बावट्ठीभागा मुहुत्तस्स
बावट्ठिभागं च सत्तट्ठिहा छित्ता सत्तावीसं चुण्णिया भागा सेसा"इति, तदानीं च सूर्यस्य योगः पुनर्वसुनक्षत्रेण, पुनर्वसुनक्षत्रस्य च तदा
मुहूर्त्तौ षट्पंचाशत् द्वाषष्टिभागा मुहूर्त्तस्य एकस्य च द्वाषष्टिभागस्य सप्तषष्टिधा छिन्नस्य सत्काः षष्टिभागाः शेषाः,उक्तंच-'तंसमयं च णं
केणं नक्खत्तेणं जोएइ ? ता पुणव्वसुणा, पुणव्वसुस्स दो मुहुत्ता छप्पन्नं बावट्ठिभागा मुहुत्तस्स बावट्ठि च सत्तट्ठिहा छित्ता सट्ठी चु-
ण्णिया भागा सेसा " इति । पंचमस्य त्वभिवर्द्धितस्य संवत्सरस्य य आदिसमयस्तदनन्तरं पश्चाद्भावी समयश्चतुर्थस्य चान्द्रस्य संव-

पीए तहेव अभिचंदे ६। माहिंद ७ बलवं ८ पम्हे ९ बहुसच्चे १० चेवं ईसाणे ११ ॥ १ ॥ तट्ठे १२ व भावियप्पा १३ वेसवणे १४ वारुणे १५ य आणंदे १६। विजये १७ य वीससेणे १८ पायावच्चे १९ तह य उवसमे २० य ॥२॥ गंधव्व २१ अग्गिवेसा २२ सयरिसहे २३ आयवं २४ च अममं २५ च। अणवं २६ भोमे २७ रिसहे २८ सव्वट्ठे २९ रक्खसे ३० ईया ॥ ३ ॥" ततो युगे मुहूर्त्तानामादि रुद्र एव भवति, तथा च जम्बूद्वीपप्रज्ञप्तावेवोक्तं- "किमाइया णं भंते! संवच्छरा? किमाइया अयणा? किमाइया उऊ? किमाइया मासा? किमाइया पक्खा? किमाइया अहोरत्ता? किमाइया मुहुत्ता? किमाइया करणा? किमाइया नक्खत्ता? गोयमा! चंदाइया संवच्छरा दक्खिणाइया अयणा पाउसाइया उऊ सावणाइया मासा बहुलाइया पक्खा दिवसाइया अहोरत्ता रोद्दाइया मुहुत्ता बवाइया करणा अभिइआइया नक्खत्ता पन्नत्ता समणाउसो !" इति ॥ तदेवं 'राइया महविदेहेसु' ( राई य विदेहवासेसु ) इत्यनेनावयवेन महाविदेहेषु ॥ अनया गाथया भरतैरावतयोर्युगस्यादिः प्ररूपितः, सम्प्रति भरतैरावतविदेहेषु साधारणं युगस्यादिं प्ररूपयन्ति—

सावणबहुलपडिवए बालवकरणे अभीइनक्खत्ते। सव्वत्थ पढमसमये जुगस्स आइं वियाणाहि ॥ ५५ ॥
अट्ठारस सट्ठिसया तिहीण नियमा जुगंमि नायव्वा। तत्थेव अहोरत्ता तीसा अट्ठारस सया उ ॥ ५६ ॥
तत्थ पडिमिज्जमाणे पंचहिं माणेहिं पुव्वगणिएहिं। मासेहिं विभज्जित्ता जइ मासा होंति ते वोच्छं ॥ ५७ ॥ 
आइच्चेण उ सट्ठी मासाणं उणो उ होंति एगट्ठी। चंदेण य बावट्ठी सत्तट्ठी होंति नक्खत्ते ॥ ५८ ॥
सत्तावन्नं मासा सत्त य राइंदियाइं अभिवड्ढे। एक्कारस य मुहुत्ता बिसट्ठिभागा य तेवीसं ॥ ५९ ॥

'सर्वत्र' भरतैरवते महाविदेहेषु च श्रावणमासे 'बहुलपक्षे' कृष्णपक्षे प्रतिपदि तिथौ बालवकरणेऽभिजिन्नक्षत्रे प्रथमसमये युगस्यादिं विजानीहि, किमुक्तं भवति?-एतावान् युगस्यादौ(दिः)सर्वेष्वपि क्षेत्रेष्वव्यभिचारी, अमीषां च यथा युगादिता तथा प्रागेव भावितं ॥ ५५ ॥ सम्प्रति युगे सर्वसङ्ख्यया तिथिपरिमाणमहोरात्रपरिमाणं च प्रतिपादयति-इह तिथयः शशिसम्भवाः अहोरात्राः सूर्यसम्भवाः, तत्र युगे तिथीनां नियमाद्भवंत्यष्टादश शतानि षष्ट्यधिकानि ज्ञातव्यानि, कथमिति चेदुच्यते, इह सूर्य एकैकमर्धमण्डलमेकेनाहोरात्रेण परिसमापयति, तस्य चाहोरात्रस्य षष्टिर्भागाः क्रियन्ते, तत्राहोरात्रगता एकोनषष्टिभागा एकस्यास्तिथेः परिमाणं, तत एवं च सति प्रत्यहोरात्रमेकैकः षष्टिभागो वर्द्धते, युगे चाहोरात्राणामष्टादश शतानि त्रिंशदधिकानि, तत एकषष्टिभागा अपि प्रवर्द्धमाना एतावन्तो लभ्यन्ते, तत एतेषां तिथिकरणार्थमेकषष्ट्या भागे हृते लब्धास्त्रिंशत्तिथयः, ता अहोरात्रराशेरुपर्यधिकत्वेन प्रक्षिप्यन्ते, तत आगतं यथोक्तं तिथिपरिमाणमिति, तथा तत्रैवैकस्मिन् युगेऽहोरात्रा अष्टादश शतानि त्रिंशानि-त्रिंशदधिकानि भवन्ति, तथाहि-एकैकस्मिन् युगेऽन्यूनातिरिक्तानि पञ्च सूर्यवर्षाणि भवन्ति, एकैकस्मिंश्च सूर्यवर्षे त्रीणि शतानि षट्षष्ट्यधिकान्यहोरात्राणां, तानि पञ्चभिर्गुण्यन्ते, ततो यथोक्तमहोरात्रपरिमाणं भवति ॥ ५६ ॥ 'तत्थे' त्यादि, 'तत्र' अनन्तरोक्तस्वरूपे युगे पञ्चभिः 'मानैः' मानसंवत्सरैः प्रमाणसंवत्सरैरादित्यसंवत्सरादिभिरित्यर्थः 'पूर्वगणितैः' प्राक् प्रतिसंख्यातस्वरूपैः 'प्रतिमीयमाने' परिगण्यमाने 'मासैः' सूर्यादिमासैर्विभज्यमाना मासा यावन्तो भवन्ति तान् वक्ष्ये ॥ ५७ ॥ प्रतिज्ञातमेव निर्वाहयति-'आइच्चेण' मित्यादि, आदित्येन-आदित्यमासेन विभज्यमाना मासा भवन्ति युगे 'षष्टिः' षष्टिसंख्याः, तथाहि-सूर्यमासे सार्द्धास्त्रिंशदहोरात्राः,युगे चाहोरात्राणामष्टादश शतानि त्रिंशदधिकानि, तत एतेषां सार्द्धैस्त्रिंशदहोरात्रैर्भागे ह्रियमाणे षष्टिर्मासा लभ्यन्ते ।

तथा 'ऋतोः' ऋतुसंवत्सरस्य सत्कैर्मासैर्विभज्यमाने युगे एकषष्टिर्मासा भवन्ति, ऋतुमासो हि त्रिंशदहोरात्रप्रमाणः, ततोऽष्टादशशतानां त्रिंशदधिकानां त्रिंशता भागे हृते एकषष्टिरेव लभ्यत इति। तथा 'चान्द्रेण' चान्द्रसंवत्सरसत्केन मासेन च विभज्यमाना मासा युगे सर्वसंख्यया द्वाषष्टिर्भवन्ति, तथाहि-चान्द्रमासपरिमाणमेकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागा दिनस्य, तत एकोनत्रिंशद्दिनानि द्वाषष्टिभागकरणार्थं द्वाषष्ट्या गुण्यन्ते, जातानि सप्तदश शतान्यष्टानवत्यधिकानि १७९८, ततो द्वात्रिंशदुपरितना द्वाषष्टिभागास्तत्र प्रक्षिप्यन्ते, जातान्यष्टादश शतानि त्रिंशदधिकानि १८३०, येऽपि च युगाहोरात्रा अष्टादश शतानि त्रिंशदधिकानि तेऽपि द्वाषष्ट्या गुण्यन्ते, जात एको लक्षस्त्रयोदश सहस्राणि चत्वारि शतानि षष्ट्यधिकानि ११३४६०, एतेषामष्टादशशतैस्त्रिंशदधिकैश्चन्द्रमाससत्कद्वाषष्टिभागरूपैर्भागो ह्रियते, लब्धाश्चन्द्रमासा द्वाषष्टिः तथा 'नक्षत्रे' नक्षत्रमासे परिगण्यमाने सर्वसंख्यया युगे नक्षत्रमासाः सप्तषष्टिर्भवन्ति, तथाहि-नक्षत्रमासः सप्तविंशतिरहोरात्रा एकविंशतिः सप्तषष्टिभागाः, अहोरात्राः सप्तषष्टिभागकरणार्थं सप्तषष्ट्या गुण्यन्ते, जातान्यष्टादश शतानि नवोत्तराणि १८०९, तत उपरितना एकविंशतिः सप्तषष्टिभागास्तत्र प्रक्षिप्यन्ते, जातान्यष्टादश शतानि त्रिंशदधिकानि १८३०, युगस्यापि च सम्बन्धिनस्त्रिंशदधिकाष्टादशशतप्रमाणा अहोरात्राः सप्तषष्ट्या गुण्यन्ते, जात एको लक्षो द्वाविंशतिः सहस्राणि षट् शतानि दशोत्तराणि १२२६१०, एतेषामष्टादशशतैस्त्रिंशदधिकैर्नक्षत्रमाससत्कसप्तषष्टिभागरूपैर्भागो ह्रियते, लब्धाः सप्तषष्टिर्मासाः ॥ ५८ ॥ अभिवर्द्धितसंवत्सरसत्के मासे परिगण्यमाने सर्वसंख्यया युगेऽभिवर्द्धितमासाः सप्तपञ्चाशद् भवन्ति, सप्तरात्रिन्दिवानि एकादश मुहूर्त्ताः एकस्य च मुहूर्त्तस्य द्वाषष्टिभागास्त्रयोविंशतिः, तथाहि-अभिवर्द्धितो मास एकत्रिंशदहोरात्रा एकविंशत्युत्तरं शतं च चतुर्विंशत्युत्तरशतभागानामहोरात्रस्य, तत एकत्रिंशदहोरात्रा-

श्चतुर्विंशत्युत्तरशतभागकरणार्थं चतुर्विंशत्युत्तरेण शतेन गुण्यन्ते, जातान्यष्टात्रिंशच्छतानि चतुश्चत्वारिंशदधिकानि ३८४४, तत उपरितनमेकविंशत्युत्तरं शतं भागानां तत्र प्रक्षिप्यन्ते, जातान्येकोनचत्वारिंशच्छतानि पंचपष्ट्यधिकानि३९६५, यानि च युगेऽहोरात्राणामष्टादश शतानि त्रिंशदधिकानि १८३० तानि चतुर्विंशत्युत्तरेण शतेन गुण्यन्ते, जाते द्वे लक्षे पड्विंशतिः सहस्राणि नव शतानि विंशत्यधिकानि २२६९२०, तत एतेषामेकोनचत्वारिंशच्छतैः पंचपष्ट्यधिकैरभिवर्द्धितमाससत्कचतुर्विंशत्युत्तरशतभागरूपैर्भागो ह्रियते, लब्धाः सप्तपंचाशन्मासाः, शेपास्तिष्ठन्ति नव शतानि पंचदशोत्तराणि ९१५, तेषामहोरात्रानयनाय चतुर्विंशत्याधिकेन शतेन भागो ह्रियते, लब्धानि सप्त रात्रिंदिवानि, शेपास्तिष्ठन्ति चतुर्विंशत्युत्तरशतभागाः सप्तचत्वारिंशत्, तत्र चतुर्भिर्भागैरेकस्य च भागस्य चतुर्भिस्त्रिंशद्भागैर्मुहूर्त्तो भवति, तथाहि-एकस्मिन्नहोरात्रे त्रिंशन्मुहूर्त्ताः, अहोरात्रे च चतुर्विंशत्युत्तरं शतं भागानां कल्पितमास्ते, तस्य चतुर्विंशत्युत्तरशतस्य त्रिंशता भागे हृते लब्धाश्चत्वारो भागाः, एकस्य च भागस्य सत्काश्चत्वारस्त्रिंशद्भागाः, तत्र पंचचत्वारिंशद्भागैरेकस्य च भागस्य सत्कैश्चतुर्दशभिस्त्रिंशद्भागैरेकादश मुहूर्त्ता लब्धाः, शेपस्तिष्ठति एको भाग एकस्य च भागस्य सत्काः पोडश त्रिंशद्भागाः, किमुक्तं भवति ?-पट्चत्वारिंशत्त्रिंशद्भागाः, एकः, एकस्य च भागस्य सत्काः (पोडश) शेषास्तिष्ठन्ति, ते च किल मुहूर्त्तस्य चतुर्विंशत्युत्तरशतभागास्ततः पट्चत्वारिंशतः चतुर्विंशत्युत्तरशतस्य च द्विकेनापवर्त्तना क्रियते लब्धा मुहूर्त्तस्य द्वापष्टिभागास्त्रयोविंशतिः ॥ एवंसंख्याकैश्च मासैर्यदाऽष्टादश शतानां त्रिंशदधिकानामहोरात्राणां भागो ह्रियते तदा यथोक्तं मासगतदिवसपरिमाणमागच्छति, तद्यथा- युगे किल सूर्यमासापेक्षया पष्टिर्मासास्ततोऽष्टादशशतानां त्रिंशदधिकानां षष्ट्या भागे हृते लब्धास्त्रिंशद्दिवसा अर्द्धदिवसश्च, एतावन्तो दिवसाः सूर्यमासे, तथैकपष्टिश्च कर्ममासा युगे, ततोऽष्टादशशतानां त्रिंशदधिकानामेकपष्ट्या भागो ह्रियते

लब्धास्त्रिंशदहोरात्रा एतावत् कर्ममासेऽहोरात्रपरिमाणं, चन्द्रमासा युगे द्वाषष्टिस्ततस्त्रिंशदधिकानामष्टादशशतानां द्वाषष्ट्या भागहरणं, लब्धा एकोनत्रिंशदहोरात्रा द्वात्रिंशच्च द्वाषष्टिभागा अहोरात्रस्य, एतावच्चन्द्रमासपरिमाणं। तथा नक्षत्रमासा युगे सप्तषष्टिः, ततः सप्तषष्ट्या अष्टादशशतानां त्रिंशदधिकानां भागो ह्रियते, लब्धाः सप्तविंशतिरहोरात्राः सप्तषष्टिश्चैकविंशतिभागाः, इदं नक्षत्रमासपरिमाणं। तथाऽभिवर्द्धितमासा युगे सप्तपंचाशत् ततोऽष्टादशशतानां त्रिंशदधिकानां सप्तपंचाशता भागो ह्रियते, लब्धा द्वात्रिंशदहोरात्राः, शेषास्तिष्ठन्ति षट्, तत्र सप्तपंचाशन्मासानामुपरि सप्ताहोरात्रा एकादश मुहूर्त्ताः एकस्य च मुहूर्त्तस्य त्रयोविंशतिर्द्वाषष्टिभागा वर्त्तन्ते, तत्र सप्तभ्यः षट् पातिताः शेष एकोऽहोरात्रस्तिष्ठति, सच चतुर्विंशत्युत्तरशतभागीक्रियते, ये चैकादश मुहूर्त्ता एकस्य च मुहूर्त्तस्य त्रयोविंशतिर्द्वाषष्टिभागाः, एतावन्तः सप्तचत्वारिंशच्चतुर्विंशत्युत्तरशतभागा लभ्यन्ते, एतच्च प्रागेव भावितं, ततः सप्तचत्वारिंशच्चतुर्विंशत्युत्तरशतमध्ये प्रक्षिप्यते, जातमेकसप्तत्यधिकं शतं, तस्य सप्तपंचाशता भागे हृते लब्धास्त्रयश्चतुर्विंशत्युत्तरशतभागाः, एतावता हीना द्वात्रिंशदहोरात्राः, किमुक्तं भवति ?–एकत्रिंशदहोरात्रा एकविंशत्युत्तरं शतं चतुर्विंशत्युत्तरशतभागानामिति, एतावत्परिमाणमभिवर्द्धितमासस्य । सम्प्रति सूर्यादिमासेषु मुहूर्त्तादिपरिमाणं चिन्त्यते, तत्र सूर्यमासे त्रिंशदहोरात्रा एकं चाहोरात्रस्यार्द्धं, अहोरात्रे च त्रिंशन्मुहूर्त्तास्ततस्त्रिंशत् त्रिंशता गुण्यन्ते जातानि नव शतानि, अहोरात्रार्द्धे च पंचदश मुहूर्त्तास्ततः सर्वसंख्यया सूर्यमासे नव शतानि पंचदशोत्तराणि मुहूर्त्तानां भवन्ति ९१५, एकैकस्मिश्च मुहूर्त्ते द्वे द्वे घटिके इति नव शतानि पंचदशोत्तराणि द्वाभ्यां गुण्यन्ते, जातान्यष्टादश शतानि त्रिंशदधिकानि १८३०, एतावत्सूर्यमासे घटिकानां परिमाणं भवति। मेयरूपतया तु चिन्तायामेकैको मुहूर्त्तश्चतुराढकप्रमाण इति मुहूर्त्तानां नव शतानि पंचदशोत्तराणि चतुर्भिर्गुण्यन्ते, जातानि षट्-

त्रिंशच्छतानि षष्ट्यधिकानि ३६६०, एतावन्तः सर्वसंख्यया सूर्यमासे आढकाः। तोल्यत्वचिंतायामेकैकस्मिन्नहोरात्रे त्रयो भारास्ततस्त्रिंशत्त्रिभिर्गुण्यते जाता नवतिः ९०, अहोरात्रार्द्धे च सार्द्धो भार इति सर्वसङ्कलनया सूर्यमासे सार्द्धा एकनवतिर्भाराः। तथा कर्ममासे त्रिंशदहोरात्रास्ततो मुहूर्त्तानयनार्थं त्रिंशता गुण्यन्ते, जातानि नव शतानि ९००, एतावन्तः कर्ममासे मुहूर्त्ताः, एत एव मुहूर्त्ता घटिकानयनाय द्वाभ्यां गुण्यन्ते, प्रतिमुहूर्त्तं घटिकाद्वयस्य भावात्, जातान्यष्टादश शतानि १८००, एतावत्कर्ममासे घटिकानां परिमाणं, तथा मुहूर्त्ते चत्वार आढका इति तदेव मुहूर्त्तपरिमाणं नवशतात्मकमाढकानयनाय चतुर्भिर्गुण्यते, जातानि षट्त्रिंशच्छतानि ३६००, एतावन्तो मेयत्वचिंतायामाढकाः कर्ममासे, तोल्यत्वचिन्तायां प्रत्यहोरात्रं त्रयो भारा इति त्रिंशदहोरात्रास्त्रिभिर्गुण्यन्ते, जाता नवतिः, इयत्संख्याकाः कर्ममासे भाराः। तथा चन्द्रमासे एकोनत्रिंशदहोरात्रा द्वात्रिंशच्च द्वाषष्टिभागा अहोरात्रस्य, तत एकोनत्रिंशत् मुहूर्त्तानयनार्थं त्रिंशता गुण्यन्ते, जातान्यष्टौ शतानि सप्तत्यधिकानि ८७०, येऽपि च द्वात्रिंशद् द्वाषष्टिभागास्तेऽपि मुहूर्त्तगतभागकरणार्थं त्रिंशता गुण्यन्ते, जातानि नव शतानि षष्ट्यधिकानि९६०, एतेषां द्वाषष्ट्या भागो ह्रियते, लब्धाः पंचदश मुहूर्त्ताः, शेषास्तिष्ठन्ति मुहूर्त्तस्य त्रिंशद् द्वाषष्टिभागाः,मुहूर्त्ताश्च मुहूर्त्तराशौ प्रक्षिप्यन्ते, ततःसर्वसंकलनया जातानि चन्द्रमासे मुहूर्त्तानामष्टौ शतानि पंचाशीत्याधिकानि त्रिंशच्च द्वाषष्टिभागा मुहूर्त्तस्य ८८५-३०। ६२ एतदेव मुहूर्त्तपरिमाणं घटिकानयनाय द्वाभ्यां गुण्यते, जातानि सप्तदश शतानि सप्तत्यधिकानि षष्टिश्च द्वाषष्टिभागा घटिकायाः १७७०-६०।६२ एतावच्चन्द्रमासे घटिकापरिमाणं,तथा प्राक्तनमेव मुहूर्त्तपरिमाणं सकलमप्याढकानयनाय चतुर्भिर्गुण्यते, जातानि पंचत्रिंशच्छतानि एकचत्वारिंशदधिकानि अष्टापंचाशच्च द्वाषष्टिभागा आढकस्य ३५४१-५८। ६२; एतावन्मेयत्वचिन्तायां चन्द्रमासे आढकपरिमाणं, तथा तोल्यत्वचिन्तायामहोरात्रपरिमाणं प्रा-

सूर्यादिवर्षाणां घटिकामानं मेय तोल्ये च

॥ ३४ ॥

ज्योतिष्करण्डे श्रीमलयगिरीयायां २ अधि०

॥ ३५ ॥

कनमेकोनत्रिंशद्रूपं भारानयनाय त्रिभिर्गुण्यते, जाताः सप्ताशीतिः८७, येऽपि च द्वात्रिंशद् द्वाषष्टिभागास्तेऽपि त्रिभिर्गुण्यन्ते, जाता षण्णवतिः, तस्या द्वाषष्ट्या भागो ह्रियते,लब्ध एको भारः, शेषास्तिष्ठन्ति चतुस्त्रिंशत्, ततः सर्वसंख्यया चन्द्रमासे तोल्यत्वचिन्तायामष्टाशीतिर्भारा श्चतुस्त्रिंशच्च द्वाषष्टिभागा भारस्य ८८-३४। ६२, नक्षत्रमासे सप्तविंशतिरहोरात्रा एकविंशतिः सप्तषष्टिभागा अहोरात्रस्य, ततः सा सप्तविंशतिस्त्रिंशता गुण्यते, जातान्यष्टौ शतानि दशोत्तराणि ८१०, येऽपि चैकविंशतिः सप्तषष्टिभागा उपरितनास्तेऽपि त्रिंशता गुण्यन्ते, जातानि षट् शतानि त्रिंशदधिकानि, तेषां सप्तषष्ट्या भागो ह्रियते, लब्धा नव मुहूर्त्ताः, शेषास्तिष्ठन्ति सप्तविंशतिः, मुहूर्त्ताश्च मुहूर्त्तराशौ प्रक्षिप्यन्ते, जातानि सर्वसंख्यया मुहूर्त्तानामष्टौ शतान्येकोनविंशत्यधिकानि८१९, सप्तविंशतिश्च एकस्य तस्य सप्तषष्टिभागाः, एतावन्नक्षत्रमासे मुहूर्त्तपरिमाणं, ततो घटिकापरिमाणानयनार्थमेतदेव द्वाभ्यां गुण्यते, जातानि षोडश शतानि अष्टात्रिंशदधिकानि चतुष्पंचाशच्च सप्तषष्टिभागा घटिकायाः १६३८-५४। ६७ एतावद् घटिकापरिमाणं नक्षत्रमासे, तोल्यत्वचिन्तायामेकस्मिन्नहोरात्रे त्रयो भारा इति सप्तविंशतिरहोरात्रास्त्रिभिर्गुण्यन्ते, जातान्येकाशीतिः, एकविंशतिरपि त्रिभिर्गुण्यन्ते जाता त्रिषष्टिस्ततो जातं तोल्यत्वपरिमाणं नक्षत्रमासे एकाशीतिर्भारास्त्रिषष्टिश्च सप्तषष्टिभागा भारस्य, तथैकस्मिन् मुहूर्त्ते चत्वार आढका इति मुहूर्त्तपरिमाणमनन्तरोक्तं सर्वमपि चतुर्भिर्गुण्यते तत आगतानि नक्षत्रमासे मेयपरिमाणचिन्तायामाढकानां द्वात्रिंशच्छतानि सप्तसप्तत्यधिकानि एकचत्वारिंशच्च सप्तषष्टिभागा आढकस्य ३२७७-४१। ६७। अभिवर्द्धितमासे एकत्रिंशदहोरात्रा एकविंशत्युत्तरं च शतं चतुर्विंशत्युत्तरशतभागानामहोरात्रस्य, तत्र मुहूर्त्तानयनार्थमेकत्रिंशदहोरात्रास्त्रिंशता गुण्यन्ते, जातानि नव शतानि त्रिंशदधिकानि ९३०, यदपि चैकविंशत्युत्तरं शतं भागानां तदपि त्रिंशता गुण्यते, जातानि षट्त्रिंशच्छतानि त्रिंशदधिकानि३६३०, एतेषां चतुर्वि-

सूर्यादिवर्षाणां घटिकामानं मेयतोल्ये च

॥ ३५ ॥

शत्युत्तरेण शतेन भागो ह्रियते, लब्धा एकोनत्रिंशन्मुहूर्त्ताः,शेषमुद्धरति चतुर्विंशत्युत्तरशतभागानां चतुस्त्रिंशद्भागाः,मुहूर्त्ताश्च मुहूर्त्तराशौ प्रक्षिप्यन्ते, ततो जातमभिवर्द्धिते मासे सर्वसंकलनया मुहूर्त्तपरिमाणं नव शतान्येकोनषष्ट्याधिकानि चतुस्त्रिंशच्च चतुर्विंशत्युत्तरशतभागाः ९५९-३४ । १२४, मुहूर्त्ते च घटिकाद्वयमित्येतदेव मुहूर्त्तपरिमाणं घटिकानयनाय द्वाभ्यां गुण्यते, जातान्येकोनविंशतिः शतान्यष्टादशाधिकानि घटिकानामष्टषष्टिश्चतुर्विंशत्युत्तरशतभागानाम् १९१८-६८ । १२४ एकैकस्यां च घटिकायां द्वौ द्वावाढकाविति घटिकापरिमाणमिदं मेयरूपतया चिन्तायामाढकानयनाय द्वाभ्यां गुण्यते. जातान्याढकानामष्टात्रिंशच्छतानि सप्तत्रिंशदधिकानि द्वादश च चतुर्विंशत्युत्तरशतभागा आढकस्य ३८३७-१२ । १२४ तथाहि-एकैकस्मिन्नहोरात्रे भारत्रयमित्येकत्रिंशदहोरात्रास्त्रिभिर्गुण्यन्ते, जातास्त्रिणवतिर्भाराः, यदपि चैकविंशत्युत्तरं शतं तदपि त्रिभिर्गुण्यते, जातानि त्रीणि शतानि त्रिषष्ट्याधिकानि ३६३, तेषां च चतुर्विंशत्युत्तरेण शतेन भागो ह्रियते, लब्धौ द्वौ भारौ, तौ च पूर्वराशौ प्रक्षिप्येते, शेषं पंचदशोत्तरं शतं, तत आगतं तोल्यचिन्तायामभिवर्द्धितमासे परिमाणं पंचनवतिर्भाराः शतमेकं पंचदशोत्तरं चतुर्विंशत्युत्तरशतभागानां ९५-११५ । १२४ यदा तु मासस्य त्रिंशत्तमो भागो दिवस इति दिवसलक्षणमनुसृत्य सूर्यमासादिदिवसपरिमाणं चिन्त्यते तदा यदेव तस्य २ मासस्य दिवसापेक्षया परिमाणं तदेव तस्य दिवसस्य मुहूर्त्तापेक्षया परिमाणमवसेयं, यथा सूर्यस्य दिवसस्य त्रिंशन्मुहूर्त्ता अर्धश्च परिमाणं, कर्म्मदिवसस्य त्रिंशन्मुहूर्त्ताः, चन्द्रदिवसस्यैकोनत्रिंशन्मुहूर्त्ता द्वात्रिंशच्च द्वाषष्टिभागा मुहूर्त्तस्य, नक्षत्रदिवसस्य सप्तविंशतिर्मुहूर्त्ता एकविंशतिश्च सप्तषष्टिभागा मुहूर्त्तस्य, अभिवर्द्धितदिवसस्यैकत्रिंशन्मुहूर्त्ता एकविंशत्युत्तरं शतं चतुर्विंशत्युत्तरशतभागानां मुहूर्त्तस्य । तथा सूर्यदिवसस्यैकषष्टिर्घटिकाः परिमाणं, कर्म्मदिवसस्य षष्टिर्घटिकाः, चन्द्रदिवसस्यैकोनषष्टिर्घटिकाः द्वौ च द्वात्रिंशद्भागौ घटिकायाः, नक्षत्रदिवसस्य चतुष्पंचा-

न्नर् घटिका द्विचत्वारिंशत्सप्तषष्टिभागा घटिकायाः, अभिवर्द्धितदिवसस्य त्रिषष्टिर्घटिका अष्टादशोत्तरं शतं चतुर्विंशत्युत्तरशतभागानां घटिकायाः, एकैकस्यां च घटिकायां द्वौ द्वावाढकाविति दिवसस्य मेयचिन्तायां सूर्यदिवसस्य द्वाविंशमाढकशतं परिमाणं १२२, कर्मदिवसस्य विंशत्युत्तरमाढकशतं १२०, चन्द्रदिवसस्याष्टादशोत्तरमाढकशतं चत्वारश्च द्वाषष्टिभागा आढकस्य ११-८४।६२ नक्षत्रदिवसस्य नवोत्तरमेकं शतमाढकाः सप्तदश सप्तषष्टिभागा आढकस्य १०९-१७।६७ अभिवर्धितदिवसस्य सप्तविंशत्युत्तरमाढकशतं द्वादशोत्तरं च शतं चतुर्विंशत्युत्तरशतभागानामाढकस्य १२७-११२।१२४ एकैकस्यां च नालिकायां पलशतमिति तोल्यत्वचिन्तायामिदं दिवसस्य परिमाणं—सूर्यदिवसस्यैकषष्टिः पलशतानि परिमाणं ६१०० कर्मदिवसस्य षष्टिः पलशतानि ६००० चन्द्रदिवसस्यैकोनषष्टिः पलशतानि द्वौ च द्वाषष्टिभागौ पलस्य ५९००-२।६२ नक्षत्रदिवसस्य चतुष्पञ्चाशत्पलशतानि द्वाचत्वारिंशच्च सप्तषष्टिभागाः पलस्य ५४००-४२।६७ अभिवर्द्धितदिवसस्य त्रिषष्टिः पलशतानि अष्टादशोत्तरं च शतं चतुर्विंशत्युत्तरपलशतस्य ६३००-११८।१२४ तदेवमुक्तं सप्रपञ्चं पञ्चानामपि संवत्सराणां स्वरूपं युगप्रमाणं च॥ सम्प्रत्युत्तरकालविशेषः सर्वोऽपि येन संवत्सरेण परिभावनीयस्तत्प्रतिपादनार्थमाह—

सव्वे कालविसेसा आउपमाणा ठिई य कम्माणं। सव्वे समाविभागा सूरपमाणेण नायव्वा ॥ ६० ॥
जं किर सूरेण जुगं अणूणमाहिगाणि पंच वासाणि। ता किर जुगेण सव्वं गणंति अद्धाविसेसं तु ॥ ६१ ॥

'सर्वे' वर्षशतवर्षसहस्रादयो ये कालविशेषा यानि च तिर्यङ्नरामराणामायुषां प्रमाणानि सिद्धान्ते व्यावर्ण्यन्ते याश्च कर्म्मणां ज्ञानावरणीयादीनां स्थितयस्त्रिंशत्सागरोपमकोटीकोट्यादिप्रमाणा ये चोत्सर्पिण्यामवसर्पिण्यां च सुषमसुषमादिरूपा विभागास्ते सर्वेऽपि

'सूर्यमानेन' सूर्यसंवत्सरपरिमाणेन ज्ञातव्याः॥६०॥ननु यद् युगं प्राक् चन्द्रचन्द्राभिवर्द्धितचंद्राभिवर्धितरूपसंवत्सरपञ्चकपरिमाणं व्यावर्णितं तेन युगेनोत्तरः सर्वोऽपि कालविशेषोगण्यते, तथा चोक्तं-'वीसं युगा वाससयं दस वाससयाइं वाससहस्से' इत्यादि तत्कथमुच्यते सर्वे कालविशेषाः सूर्यमानेन ज्ञातव्या इति ?, तत आह—'जं किरे' त्यादि 'यत्' यस्मात् किल 'युगं' प्राग्व्यावर्णितस्वरूपं 'सूर्येण' सूर्यसंवत्सरेण परिभाव्यमानमन्यूनाधिकानि पञ्च वर्षाणि भवन्ति, मकारोऽलाक्षणिकः, संवत्सरपञ्चकप्रतिपत्त्यर्थं चन्द्रचन्द्राभिवर्द्धितचन्द्राभिवर्धितरूपं प्राग्व्यावर्णितं ततस्तेन युगेन परिभाव्यमानो वर्षशतादिकः कालविशेषः सूर्यसंवत्सरगणनया तुल्य इति परिभाव्य 'युगेन' अनन्तरोदितस्वरूपेण सर्वमद्धाविशेषं पूर्वसूरयो गणयन्ति, 'तुः' पूरणार्थः, ततः परमार्थतः सर्वोऽपि कालविशेषः सूर्यसंवत्सरप्रमातव्य इति न कश्चिद्दोषः॥६१॥ सम्प्रत्युत्तरः कालविशेषश्चिन्त्यते, तत्रानन्तरोदितस्वरूपैश्चतुर्भिर्युगैर्विंशतिवर्षाणि पञ्च विंशतीनि वर्षशतं दश वर्षशतानि वर्षसहस्रं शतं वर्षसहस्राणां वर्षलक्षं चतुरशीतिर्वर्षलक्षाण्येकं पूर्वाङ्गं चतुरशीतिः पूर्वाङ्गलक्षाणि पूर्वं, तथा चैतदेवाह—

वाससयसहस्साइं चुलसीइगुणाइं होज्ज पुव्वंगं । पुव्वंगसयसहस्सा चुलसीइगुणं हवइ पुव्वं ॥ ६२ ॥

पुवस्स उ परिमाणं सयरी खलु होंति सयसहस्साइं । छप्पण्णं च सहस्सा बोधव्वा वासकोडीणं ॥ ६३ ॥

पुव्वाण सयसहस्सं [पुव्व] चुलसीइगुणं भवे लयंगमिह ( इमेगं )। तेसिंपि सयसहस्सं चुलसीइगुणं लया होइ ६४

तत्तो महालयाणं चुलसीइ चेव सयसहस्साणि । नालिणंगं नाम भवे एत्तो वोच्छं समासेणं ॥ ६५ ॥

ज्योतिष्क-रण्डे श्रीम-लयगिरी-यायां २ अधि०

॥ ३९ ॥

नलिणं महानलिणंगं हवइ महानलिणमेव नायव्वं । पउमंगं तह पउमं तत्तो य महापउमअंगं ॥६६॥
हवइ महापउमं चिय तत्तो कमलंगमेव नायव्वं । कमलं च महाकमलंगमेव परतो महाकमलं ॥ ६७ ॥
कुमुयंगं तह कुमुयं तत्तो य तहा महाकुमुयअंगं । तत्तो परतो य महाकुमुयं तुडियंग बोद्धव्वं ॥ ६८ ॥
तुडियमहातुडियंगं महतुडियं अडडंगमडड परं । परतो य महाअडडअंग तत्तो य महाअडडमेव ॥ ६९ ॥
ऊहंगंपिय ऊहं हवइ महहंगं च ऊहगं तत्तो । महाऊहं हवइहु सीसपहेलिया होइ नायव्वा ॥ ७० ॥
एत्थं सयसाहस्साणि चुलसीई चेव होइ गुणकारो । एक्केक्कंमि उ ठाणे अह संखा होइ कालंमि ॥ ७१ ॥

सुगमा ॥६२॥ सम्प्रति यथोक्तमेव पूर्वपरिमाणं मुग्धजनविबोधनार्थं वर्षकोटिभिः प्ररूपयति–पूर्वस्य परिमाणं 'खलु' निश्चितं भवति वर्षकोटीनां सप्ततिः शतसहस्राणि तदुपरि षट्पञ्चाशत्सहस्राणि बोद्धव्यानि७०५६०००००००००॥६३॥ पूर्वाणां 'शतसहस्रं' चतुरशीतिगुणम् 'इह' प्रवचने एकं लताङ्गं भवति, किमुक्तं भवति ?–चतुरशीतिपूर्वलक्षाण्येकं लताङ्गमिति, तेषामपि लताङ्गानां शतसहस्रं चतुरशीतिगुणमेका लता भवति, चतुरशीतिर्लताशतसहस्राण्येका महालता ॥६४॥ 'ततः' महालतारूपात्संख्यास्थानादूर्ध्वं महालतानां चतुरशीतिशतसहस्राणि नलिनाङ्गं नाम सङ्ख्यास्थानं भवति, 'एत्तो वोच्छं समासेणं'ति 'इतः' नलिनांगरूपात्सङ्ख्यास्थानादूर्ध्वं यानि सङ्ख्यास्थानानि तानि समासेन–संक्षेपेण वक्ष्ये, इह समासेनेति किमुक्तं भवति?–अत ऊर्ध्वं संख्यास्थानान्येव क्रमेण केवलानि निर्देक्ष्यामि, न तु प्राक्तनसङ्ख्यास्थानानीव प्रत्येकं गुणकारनिर्देशेन, यस्तु वक्ष्यमाणसङ्ख्यानां गुणकारः

पूर्वाङ्गादि शीर्षप्रहेलिकान्तं

॥ ३९ ॥

स पर्यन्ते कथयिष्यत इति ॥६५॥ प्रतिज्ञातमेव निर्वाहयति-इह सर्वत्रापि चतुरशीतिशतसहस्रप्रमाणो गुणकारः 'एत्थं सयसहस्साणी'-त्यादि वक्ष्यमाणवचनात्, तत एवं भावना-चतुरशीतिनलिनाङ्गशतसहस्राण्येकं नालिनं, चतुरशीतिनलिनशतसहस्राण्येकं महानलिनाङ्गं, चतुरशीतिमहानलिनाङ्गशतसहस्राण्येकं महानलिनं, चतुरशीतमहानलिनशतसहस्राण्येकं पद्माङ्गं, चतुरशीतिपद्माङ्गशतसहस्राण्येकं पद्मं, ततश्चतुरशीतिपद्मशतसहस्राण्येकं महापद्माङ्गं ॥६६॥ 'हवइ' इत्यादिद्वितीयगाथा-चतुरशीतिमहापद्माङ्गशतसहस्राण्येकं महापद्मं, ततश्चतुरशीतिमहापद्मशतसहस्राण्येकं कमलाङ्गं, चतुरशीतिकमलाङ्गशतसहस्राण्येकं कमलं, चतुरशीतिकमलशतसहस्राण्येकं महाकमलाङ्गं, ततः परतश्चतुरशीतिमहाकमलाङ्गशतसहस्राण्येकं महाकमलम्॥६७॥'कुमुयंग'मित्यादितृतीयगाथा-ततश्चतुरशीतिमहाकमलशतसहस्राण्येकं कुमुदाङ्गं, चतुरशीतिकुमुदाङ्गशतसहस्राण्येकं कुमुदं, तथा ' ततः ' कुमुदरूपात्सङ्ख्यास्थानादूर्ध्वं चतुरशीतिकुमुदशतसहस्राण्येकं महाकुमुदाङ्गं, ततः परतश्चतुरशीतिमहाकुमुदाङ्गशतसहस्राण्येकं महाकुमुदं, चतुरशीतिमहाकुमुदशतसहस्राण्येकं त्रुटिताङ्गं बोद्धव्यम्॥६८॥ 'तुडिये' त्यादिचतुर्थगाथा-चतुरशीतित्रुटिताङ्गशतसहस्राण्येकं त्रुटितं, चतुरशीतित्रुटितशतसहस्राण्येकं महात्रुटितांगं, चतुरशीतिमहात्रुटिताङ्गशतसहस्राण्येकं महात्रुटितकं, ततः परतश्चतुरशीतिमहात्रुटितशतसहस्राण्येकमडडाङ्गं, चतुरशीत्यडडाङ्गशतसहस्राण्येकमडडं, चतुरशीतिअडडशतसहस्राण्येकं महाडडाङ्गं, चतुरशीतिमहाडडांगशतसहस्राणि एकं महाडडं॥६९॥ 'ऊहंगपिये'-त्यादिपंचगगाथा, चतुरशीतिमहाडडशतसहस्राण्येकमूहाङ्गं, चतुरशीत्यूहाङ्गशतसहस्राण्येकमूहं, चतुरशीत्यूहशतसहस्राण्येकं महोहाङ्गं, चतुरशीतिमहोहशतसहस्राण्येकं महोहं, चतुरशीतिमहोहशतसहस्राण्यकं शीर्पप्रहेलिकाङ्गं चतुरशीतिशीर्पप्रहेलिकाङ्गशतसहस्राण्येका शीर्पप्रहेलिका ज्ञातव्या ॥७०॥ सम्प्रत्येपु सङ्ख्यास्थानेपु गुणकारनिर्देशमाह-'एत्थ' मित्यादि, 'अत्र' एपु नलिनादिपु सङ्ख्यास्थानेपु

शीर्षप्रहेलिकापर्यन्तेषु मध्ये एकैकस्मिन् सङ्ख्यास्थाने पूर्वं पूर्वं सङ्ख्यास्थानमधिकृत्य गुणकारो भवति चतुरशीतिशतसहस्राणि, किमुक्तं भवति ?-पूर्वं २ सङ्ख्यास्थानं चतुरशीतिशतसहस्रगुणमुत्तरमुत्तरं सङ्ख्यानं भवति, एतच्च प्रागेव भावितमिति ॥ इह स्कन्दिलाचार्यप्रवृत्तौ दुष्षमानुभावतो दुर्भिक्षप्रवृत्त्या साधूनां पठनगुणनादिकं सर्वमप्यनेशत्, ततो दुर्भिक्षातिक्रमे सुभिक्षप्रवृत्तौ द्वयोः सङ्घमेलापकोऽभवत्, तद्यथा-एको वालभ्यामेको मथुरायां, तत्र च सूत्रार्थसङ्घटनेन परस्परं वाचनाभेदो जातः, विस्मृतयोर्हि सूत्रार्थयोः स्मृत्वा स्मृत्वा सङ्घटने भवत्यवश्यं वाचनाभेदो, न काचिदनुपपत्तिः, तत्रानुयोगद्वारादिकमिदानीं प्रवर्त्तमानं माथुरवाचनानुगतं, ज्योतिष्करण्डकसूत्रकर्त्ता चाचार्यो वालभ्यः, तत इदं सङ्ख्यास्थानप्रतिपादनं वालभ्यवाचनानुगतमिति नास्यानुयोगद्वारप्रतिपादितसङ्ख्यास्थानैः सह विसदृशत्वमुपलभ्य विचिकित्सितव्यमिति । सम्प्रत्युपसंहारमाह-' अहे ' इति 'अद्दि'त्ति एषा-अनन्तरोदिता सङ्ख्या भवति ' काले ' कालविषया ॥ ७१ ॥

एसो पण्णवणिज्जो कालो संखेज्जओ मुणेयव्वो । वोच्छामि असंखेज्जं कालं उवमाविसेसेणं ॥ ७२ ॥
सत्थेण सुतिक्खेणावि छित्तुं भित्तुं व जं किर न सक्का । तं परमाणुं सिद्धा वयंति आइं पमाणाणं ॥ ७३ ॥
परमाणू तसरेणू रहरेणू अग्गयं च वालस्स । लिक्खा जूया य जवो अट्ठगुणविवड्ढिया कमसो ॥ ७४ ॥
जवमज्झा अट्ठ हवन्ति अंगुलं छच्च अंगुला पाओ । पाया य दो विहत्थी दो य विहत्थी हवइ हत्थो ॥७५॥
दंडं धणुं जुगं नालिया य अक्ख मुसलं च चउहत्था । अट्ठेव धणुसहस्सा जोयणमेगं च माणेणं ॥ ७६ ॥

एयं धणुप्पमाणं नायव्वं जोयणस्स य पमाणं । कालस्स परीमाणं एत्तो उड्ढं पवक्खामि ॥ ७७ ॥

जं जोयणविच्छिण्णं तं तिगुणं परिरएण सविसेसं । तं जोयणमुव्विद्धं जाण पलिओवमं नाम ॥ ७८ ॥

'एषः' अनन्तरोदितस्वरूपः 'कालः' प्रज्ञापनीय इति, अत्र शक्तावनीयः प्रत्ययः, ततोऽयमर्थः- प्रतिनियतपरिमाणतया प्रतिपादयितुं शक्यः संख्येयो ज्ञातव्यः, अत ऊर्ध्वमसंख्येयं-संख्यातीतं कालं वक्ष्यामि। ननु यः संख्यातीतः स कथं प्रतिपादनीयः? इत्यत आह-'उपमाविशेषेण' उपमाभेदेन, पल्यस्योपमया इत्यर्थः ॥ ७२ ॥ तत्र पल्यप्रमाणनिरूपणार्थं योजनप्रमाणमभिधित्सुराह- इह परमाणुर्द्विविधः, तद्यथा-सूक्ष्मो व्यावहारिकश्च, तत्र यः सूक्ष्मः सोऽत्यन्तपरमनिकृष्टः, तेषां च सूक्ष्मपरमाणूनामनन्तानां विश्रसापरिणामतस्तथाविधसंघातविशेषापत्त्या व्यावहारिकपरमाणुरेको निष्पद्यते, तथा चोक्तमनुयोगद्वारसूत्रे-"से किं तं परमाणू ?, २ दुविहे पन्नत्ते, तंजहा- सुहुमे यावहारिए य, तत्थ णं जे से सुहुमे से ठप्पे, तेसि णं अणंताणं सुहुमपोग्गलाणं समुदयसमिइसमागमेणं ववहारिए परमाणुपोग्गले निप्फज्जइ" त्ति अत्र 'से ठप्पे' इति स सूक्ष्मपरिमाणुः स्वरूपख्यापनं प्रति स्थाप्यः-स्थापनीयः, किमुक्तं भवति?-न तस्यात्यन्तपरमनिकृष्टतालक्षणं रूपमतिरिच्यान्यद् वैशेषिकं रूपं प्रतिपादनीयमस्तीति, 'समुदयसमिइसमागमेणं'ति समुदायाः- त्रिचतुरादिमेलकास्तेषां समुदयानां-त्रिचतुरादिमेलकानां याः समितयः-संघातास्तासां समागमेन-एकीभावेन, शेषं सुगमं, स व्यावहारिकः परमाणुरधिकृतगाथायामुपात्तो वेदितव्यः, तथा चाह-यं व्यावहारिकं परमाणुं 'शस्त्रेण' खड्गक्षुरिकादिना सुतीक्ष्णेनापि न कोऽपि पुरुषश्छेत्तुं भेत्तुं वा शक्नुयात्, तत्र छेदनभेदने उपलक्षणे-तेन यो व्यावहारिकः परमाणुः स पुष्कलावर्त्तेऽपि महामेघे

सर्वप्रयत्नेन वर्षति मध्ये गच्छन्नपि नोदकेनार्द्रीक्रियते नापि गङ्गाया महानद्याः श्रोतसा प्रतिश्रोते गच्छन्नपि स्खल्यते नाप्युदकावर्त्ते उदकबिंदोर्वा मध्ये निपतितः सन् कोत्थमायाति, तमित्थम्भूतं व्यावहारिकं परमाणुं सिद्धा इव सिद्धाः- भगवन्तोऽर्हन्त उत्पन्नके-वलज्ञानाः सर्वेषामंगुलादीनां प्रमाणानामादिं वदन्ति, न चैतद् व्याख्यानमनार्षं, यत उक्तमनुयोगद्वारेषु-'से णं भंते ! वावहा-रिए परमाणू असिधारं वा खुरधारं वा ओगाहिज्जा? हंता ओगाहिज्जा, से णं तत्थ छिज्जेज्ज वा भिज्जेज्ज वा?, नो इणट्ठे समट्ठे, नो खलु तत्थ सत्थं संकमइ । से णं भंते! अगणिकायस्स मज्झंमज्झेणं विइवइज्जा?, हंता विइवइज्जा, से णं तत्थ डज्झिज्जा?, नो इणमट्ठे समट्ठे, नो खलु तत्थ सत्थं संकमइ, से णं भंते ! पुक्खलसंवट्टयस्स महामेहस्स मज्झंमज्झेणं विइवइज्जा ?, हंता विइवइज्जा, से णं तत्थ उदउल्ले सिया ?, नो इणट्ठे समट्ठे, नो खलु तत्थ सत्थं संकमइ, से णं भंते! गंगाए महानईए पडिसोयं हव्वमागच्छेज्जा?, हंता हव्वं आगच्छेज्जा, से णं तत्थ विनिघायमावज्जेज्जा ?, नो इणट्ठे समट्ठे, नो खलु तत्थ सत्थं संकमइ, से णं भंते ! उदकावत्ते उदगबिंदुं वा ओगाहेज्जा?, हंता ओगाहेज्जा, से णं तत्थ विकुत्थेज्ज वा परियावज्जेज्ज वा?, नो इणमट्ठे समट्ठे, नो खलु तत्थ सत्थं संकमइ' इति, अत्र 'विणिघायमावज्जेज्जा' इति प्रस्खलनमापद्येत 'परियावज्जेज्जा' इति पर्यापद्येत, तद्रूपतामापद्येतेत्यर्थः ॥७३॥

तदेवं व्यावहारिकं परमाणुं प्रतिपाद्य सम्प्रति तदादीनि प्रमाणानि प्रतिपादयति-'परमाणू' इत्यादि, परमाणोर्व्यावहारिकात्परतो ये त्रसरेण्वादयस्ते क्रमशः- क्रमेण पूर्वस्माद् अष्टगुणविवर्धिता वेदितव्याः, एष गाथाऽक्षरार्थः, सम्प्रदायस्त्वयम्-अनन्तानां व्यावहारि-कपरमाणूनां विश्रसापरिणामतस्तथाविधसंघातविशेषापन्ना एका उच्छ्लक्ष्णश्लक्ष्णिका भवति अष्टौ उच्छ्लक्ष्णश्लक्ष्णिका श्लक्ष्णश्लक्ष्णिका एका अष्टौ श्लक्ष्णश्लक्ष्णिका ऊर्ध्वमधस्तिर्यग् वा कथमपि चलन् योलभ्यते न शेषकालं स ऊर्ध्वरेणुः,अष्टावूर्ध्वरेणव एकस्त्रसरेणुः, त्रसरेणुर्नाम

॥ ४३ ॥

यः पौरस्त्यादिवायुप्रेरितः सन् चलनधर्मा भवति, त्रस्यति-पौरस्त्यादिवायुप्रेरितः सन् गच्छतीति त्रसः स चासौ रेणुरितिव्युत्पत्तेः, अष्टौ त्रसरेणव एको रथरेणुः-रथेन गच्छतोत्खातो रेणुः, रथे गच्छति तदुत्खातो य ऊर्ध्वं तिर्यग्वा रेणुरित्यर्थः, अष्टौ रथरेणवो देवकुरूत्तरकुरुमनुष्याणामेकं वालाग्रं, अष्टौ देवकुरूत्तरकुरुमनुष्याणां वालाग्राणि एकं हरिवर्षरम्यकवर्षमनुष्यवालाग्रं अष्टौ हरिवर्षरम्यकवर्षमनुष्यवालाग्राण्येकं हैमवतहैरण्यवतवर्षमनुष्याणां वालाग्रं अष्टौ हैमवतहैरण्यवतवर्षमनुष्यवालाग्राणि पूर्वविदेहापरविदेहमनुष्याणामेकं वालाग्रं, अष्टौ पूर्वविदेहापरविदेहमनुष्यवालाग्राण्येका लिक्षा, अष्टौ लिक्षा एका यूका, अष्टौ यूका एकं यवमध्यं, अष्टौ यवमध्यानि एकमंगुलं, नचैतदपि सम्प्रदायव्याख्यानमनार्षं, यत उक्तमनुयोगद्वारेषु-'अणंताणं वावहारियपरमाणुपोग्गलाणं समुदयसमिइसमागमेणं सा एगा उस्सण्हसण्हिया अट्ठ उस्सण्हसण्हिया एगा सण्हसण्हिया अट्ठ सण्हसण्हियाउ सा एगा उद्धरेणू अट्ठ उद्धरेणू सा एगा तसरेणू अट्ठ तसरेणूओ सा एगा रहरेणू अट्ठ रहरेणुओ देवकुरुउत्तरकुरुयाणं मणुयाणं एगे वालग्गे, अट्ठ देवकुरुउत्तरकुरुयाणं मणुयाणं वालग्गा एगे हरिवासरम्मगवासयाणं मणुयाणं वालग्गे अट्ठ हरिवासरम्मय वासयाणं मणुयाणं वालग्गा हेमवय हेरण्णवयवासयाणं मणुयाणं से एगे वालग्गे अट्ठ हेमवयहेरण्णवयवासयाणं मणुयाणं वालग्गा पुव्वविदेहअवरविदेहाणं मणुस्साणं से एगे वालग्गे, अट्ठ पुव्वविदेहअवरविदेहमणुस्साणं वालग्गा सा एगा लिक्खा अट्ठ लिक्खाउ सा एगा जूया अट्ठ जूयाओ से एगे जवमज्झे इति" ॥ ७४ ॥ अष्टौ यवमध्यान्येकमंगुलं भवति, षडंगुलानि पादो, द्वौ पादौ वितस्तिः, द्वे वितस्ती हस्तश्चत्वारो हस्ता दण्डो धनुर्वा युगं वा नालिका वाऽक्षो वा मुसलं वा ॥ ७५ ॥ तथा चाह-दण्डो धनुर्युगं नालिकाऽक्षो मुशलमित्येते सर्वेऽपि प्रत्येकं चतुर्हस्ताः-चतुर्हस्तप्रमाणाः, तथा चोक्तं- "छन्नवई अंगुलाइं से एगे दंडेइ वा धणूइ वा जुगेइ वा नालियाइ वा

॥ ४५ ॥

अक्खे वा मुसलेइ वा" इति; एतेन चतुर्हस्तलक्षणेन मानेन-प्रमाणेन यद्धनुस्तेषां धनुषामष्टौ सहस्राणि योजनमेकम् ॥ ७६ ॥ एतदेवाह-' एतत् ' अनन्तरोदितं धनुःप्रमाणं-योजनमानं योजनस्य च प्रमाणं, वक्ष्यमाणस्य पल्यस्योपयोगि ज्ञातव्यमिति शेषः, साम्प्रतमत ऊर्ध्वं पल्यपरिकल्पनया परिमाणं प्रवक्ष्यामि ॥ ७७ ॥ तदेव विवक्षुः प्रथमतः पल्यपरिमाणमाह यत् पल्यं योजनविस्तीर्णम्-एकं योजनं विष्कम्भतः, उपलक्षणमेतद् एकं योजनमायामतश्च तत् योजनं, ' परिरएण ' परिरयमधिकृत्येत्यर्थः, ' त्रिगुणं सविशेषं-सत्रिभागं, तथा तत् पल्यं योजनमेकमुद्विद्धम्-उण्डं सत् पल्योपमं नामेति शिष्यामंत्रणे जानीहि, किमुक्तं भवति ?-येन पल्येन वक्ष्यमाणनीत्या यः-कालः परिमीयते-परिच्छिद्यते येन तत् कालपरिमाणं पल्योपमं जानीहीति ॥ ७८ ॥ सम्प्रत्यनन्तरोदिते पल्ये यत्कर्त्तव्यं तदाह—

एकाहियबेहियतेहियाण उक्कोससत्तरत्ताणं । सम्मट्ठं सन्निचियं भरियं वालग्गकोडीणं ॥ ७९ ॥
ओगाहणाओ तेसिं अंगुलभागो भवे असंखेज्जा । एयं लोमपमाणं एत्तो वोच्छामि अवहारं ॥ ८० ॥
वाससए वाससए एक्केक्के अवहियंमि जो कालो । सो कालो नायव्वो उवमा एक्कस्स पल्लस्स ॥ ८१ ॥

तत्-अनन्तरोदितप्रमाणं पल्यमेकाहिकद्व्याहिकत्र्याहिकाणां-मुण्डिते शिरसि या एकेनाह्ना प्ररूढास्ता एकाहिकाः या द्वाभ्यामहोभ्यां ता द्व्याहिकाः यास्त्रिभिरहोभिस्तास्त्र्याहिकास्तासामुत्कर्षतः ' सप्तरात्राणां ' सप्ताहोरात्रप्ररूढपर्यन्तानां वालाग्रकोटीनां भृतं, कथंभूतमित्याह-संमृष्टम्-आकर्णभृतं ' सन्निचितं ' प्रचयविशेषापादनेनातिनिविडमानमापादितं, तत्रेत्थं निविडमानमापादितं

यथा तानि वालाग्राणि न वायुरपहरति नापि वह्निस्तानि दहति नापि तेषु सलिलं प्रविश्य कोथमापादयति, यथा चात्रार्थेऽनुयोगद्वारसूत्रं–" से णं पल्ले एगाहियवेहियतेहियाणं उक्कोसेणं सत्तरत्तपरूढाणं सम्मट्ठे सन्निचियभरिए वालग्गकोडीणं, ते णं वालग्गा नो अग्गी डहेज्जा नो वाऊ हरिज्जा नो कुत्थेज्जा " इत्यादि ॥७९॥ इह पल्योपमं त्रिधा भवति, तद्यथा–उद्धारपल्योपममद्धापल्योपमं क्षेत्रपल्योपमं, एकैकं द्विधा, तद्यथा-व्यावहारिकं सूक्ष्मं च, तत्र व्यावहारिकं सर्वमपि प्ररूपणामात्रं, न तेन किंचिदपि प्रयोजनं, उद्धारपल्योपमक्षेत्रपल्योपमाभ्यामपि कालप्रमाणचिन्तायामिह न किमपि प्रयोजनमतो न ताभ्यामधिकारः, ततः सूक्ष्माद्धापल्योपमनिरूपणार्थं वालाग्राणामसङ्ख्येयखण्डनिर्देशार्थमाह—'ओगाहे' त्यादि, इह यानि प्राग् मुण्डिते शिरस्येकाहिकानि द्व्याहिकानि त्र्याहिकानीति यावदुत्कर्षतः सप्ताहिकानि वालाग्राणि शुद्धानि गृहीत्वा पल्यं भृतं तेषां वालाग्राणां सम्बन्ध्येकैकं वालाग्रमसंख्येयानि खण्डानि क्रियते, किंप्रमाणमसंख्येयं खण्डमिति चेदुच्यते-इह विशुद्धलोचनश्छद्मस्थः पुरुषो यदतीवसूक्ष्मं द्रव्यं चक्षुषा पश्यति तदसंख्येयभागमात्रमसंख्येयं खण्डम्, इदं द्रव्यतोऽसंख्येयस्य खण्डस्य प्रमाणं, क्षेत्रतः पुनरिदंसूक्ष्मस्य पनकजीवस्य या जघन्यावगाहना तया यद् व्याप्तं क्षेत्रं तदसंख्येयगुणक्षेत्रावगाहिद्रव्यप्रमाणमसंख्येयं खण्डं, तथा चात्रार्थेऽनुयोगद्वारसूत्रं-" तत्थ णं एगमेगे वालग्गे असंखेज्जाइं खंडाइं किज्जइ, ते णं वालग्गा दिट्ठीओगाहणाओ असंखिज्जइभागमित्ता सुहुमस्स पणगजीवस्स सरीरोगाहणाओ उ असंखेज्जगुणा" इति, अत्र वृद्धाः पूर्वपुरुषपरम्परायातसम्प्रदायवशादेवं व्याख्यानयन्ति-बादरपर्याप्तपृथ्वीकायिकशरीरप्रमाणमसंख्येयं खण्डमिति, तथा चाहानुयोगद्वारटीकाकारो हरिभद्रसूरिः–' बादरपृथ्वीकायिकपर्याप्तशरीरतुल्यान्यसंख्येयानि खण्डानीति वृद्धवादः " एतदुपजीव्याह—तेषां वालाग्राणामवगाहना भवत्यंगुलभागोऽसंख्येयः,

बादरपर्याप्तपृथिवीकायिकशरीरप्रमाणेत्यर्थः, एतत् सूक्ष्माद्धापल्योपमप्ररूपणावसरे पल्यभरणचिन्तायां लोमप्रमाणमुक्तं तीर्थकरगणधरैरत ऊर्ध्वमपहारं लोम्नां वक्ष्यामि ॥ ८० ॥ तमेवाह-'वासे'त्यादि, पूर्वोक्तप्रमाणासंख्येयखण्डीकृतैर्वालाग्रैरुक्तप्रकारेण पल्ये भृते सति वर्षशते वर्षशतेऽतिक्रान्ते सति एकैकं वालाग्रमपहरेत्, एवमेकैकस्मिन् वालाग्रेऽपहृते यः कालः सकलपल्यनिर्लेपीकरणे लगति स किलैकस्य पल्यस्योपमा ज्ञातव्या, एकं सूक्ष्ममद्धापल्योपमं ज्ञातव्यमित्यर्थः ॥८१॥

एएसिं पल्लाणं कोडीकोडी हवेज्ज दसगुणिया । तं सागरोवमस्स उ एक्कस्स भवे परीमाणं ॥ ८२ ॥
दससागरोवमाणं पुण्णाओ होंति कोडिकोडीओ । ओसप्पिणिपमाणं तं चेवुस्सप्पिणीएवि ॥ ८३ ॥
छच्चेव य कालसमा भणिया ओसप्पिणीए भरहंमि । तासिं नामविहत्तिं परिमाणविहिं च वोच्छामि॥८४॥

'एतेषाम्' अनन्तरोदितानां 'पल्यानां' सूक्ष्माद्धापल्योपमानां कोटाकोटी दशभिर्गुणिता सती यावत्प्रमाणा भवति तत्सागरोपमस्य-अद्धासागरोपमस्यैकस्य भवति परिमाणमिति ॥८२॥ अनन्तरोदितस्वरूपाणां सागरोपमाणां-सूक्ष्माद्धासागरोपमाणां परिपूर्णा दश कोटीकोट्यो भवन्त्येकस्या अवसर्प्पिण्याः परिमाणं, यदेव चावसर्प्पिणीपरिमाणं तदेवोत्सर्प्पिण्या अपि परिमाणं ज्ञातव्यम्, उत्सर्प्पिण्यपि दशसागरोपमकोटीकोटीप्रमाणा ज्ञातव्येत्यर्थः, अवसर्प्पिण्यां च समस्ता अपि शुभा भावाः क्रमेणानन्तगुणतया हीयन्ते, अशुभा भावाः क्रमेणानन्तगुणतया परिवर्द्धन्ते, उत्सर्प्पिण्यां च क्रमेण शुभा भावा अनन्तगुणतया परिवर्द्धन्ते, अशुभाश्च हानिमुपगच्छन्ति, एवं च तयोः शब्दव्युत्पत्तिः-अवसर्पति-क्रमेण हानिमुपपद्यन्ते शुभा भावा अस्यामित्यवसर्पिणी,उत्सर्पन्ति-क्रमेण परिवर्द्धन्ते शुभा भावा अ-

स्यामित्युत्सर्प्पिणी, अवसर्प्पिण्युत्सर्पिण्यः पंचसु भरतेषु पंचस्वैरवतेष्वनाद्यनन्तं कालं परावर्त्तन्ते, अहोरात्रवत् ॥८३॥ अवसर्प्पिण्यामुत्सर्प्पिण्यां च प्रत्येकं षद् कालविभागाः ततस्तत्प्ररूपणार्थमाह- 'छच्चेवे' त्यादि, अस्मिन् भरते, उपलक्षणमेतत् शेषेषु चान्येषु चतुर्षु भरतेषु पंचसु चैरवतेष्ववसर्प्पिण्याः 'षडेव' षट्संख्या एव 'कालसमाः' कालविभागरूपा भणितास्तीर्थकरगणधरैः, ततः 'तासां' कालसमानां नामविभक्तिं परिणामविधिं च वक्ष्यामि ॥ ८४ ॥ प्रतिज्ञातमेव निर्वाहयति—

सुसमसुसमा य सुसमा हवई तह सुसमदुस्समा चेव । दूसमसुसमा य तहा दूसम अइदुस्समा चेव ॥८५॥
सुसमसुसमाएँ कालो चत्तारि हवंति कोडिकोडीउ । सुसमाए तिण्णि भवे सुसमदुसमाए दो होंति ॥८६॥
एक्का य कोडिकोडी बायालीसं भवे सहस्साइं । वासेहिं जेहि ऊणा दुसमइदुसमाएँ सो कालो ॥ ८७ ॥
एए चेव विभागा हवंति ओसप्पिणीए नायव्वा । पडिलोमा परिवाडी नवरि विभागेसु नायव्वा ॥ ८८ ॥
एसो उ असंखेज्जो [कालो] एयस्स विहाणगा असंखेज्जा । एत्तो होइ अणंतो कालो कालंतरगुणेण ॥८९॥
एए कालविभागा पडिवज्जंते जुगंमि खलु सव्वे । पत्तेयं पत्तियं जुगस्स अंते समप्पंति ॥ ९० ॥
एए कालविभागा नायव्वा होंति कालकुसलेणं ।

प्रथमः कालविभागः सुषमसुषमा द्वितीयः सुषमा तृतीयः सुषमदुष्षमा चतुर्थो दुष्षमसुषमा पंचमो दुष्षमा षष्ठः अतिदुष्षमा, दुष्षमदुष्षमा इत्यर्थः॥ ८५ ॥ उक्तानि कालसमानां नामानि, सम्प्रत्यासां परिमाणविधिमाह- सुषमसुषमायाः कालश्चतस्रः सागरो-

पमकोटीकोट्यो भवन्ति, तदा च मनुष्या युगलधर्माणः क्रोशत्रयप्रमाणशरीरोच्छ्रयाः पल्योपमत्रयायुषो वज्रर्षभनाराचसंहननाः समचतुरस्रसंस्थानास्तथा-सुप्रतिष्ठितकूर्मचारुचरणाः सुकुमारश्लक्ष्णप्रविरलरोमकुरुविंदवृत्तजंघायुगला निगूढसुबद्धसन्धिजानुप्रदेशाः करिकरसमवृत्तोरवः कण्ठीरवतुल्यकटिप्रदेशाश्चक्रायुधसममध्यभागाः प्रदक्षिणावर्त्तनाभिमण्डलाः श्रीवृक्षलांछितविशालमांसलवक्षः-स्थलाः पुरपरिघानुकारिदीर्घबाहवः सुश्लिष्टमणिबन्धा रक्तोत्पलपत्रानुकारिशोणिमपाणिपादतलाश्चतुरंगुलप्रमाणसमवृत्तकम्बुग्रीवाः शारदशशांकसमवदनाश्छत्राकारशिरसोऽस्फुटितस्निग्धकान्तिश्लक्ष्णमूर्द्धजाः कमण्डलुकलशयूपस्तूपवापीच्छत्रध्वजपताकासौवस्तिक-यवमत्स्यमकरकूर्मरथवरस्थालगुकाष्टापदांकुशसुप्रतिष्ठकमयूरश्रीदामाभिषेकतोरणमेदिनीजलधिवरभवनादर्शपर्वतगजवृषभसिंहचामररूप-प्रशस्तोत्तमद्वात्रिंशल्लक्षणधराः, स्त्रियोऽपि सुजातसर्वांगसुन्दर्यः समस्तमहिलागुणसमन्विताः संहतांगुलिदलपद्मसुकुमारकूर्म्मसंस्थान-मनोहारिचरणा रोमरहितप्रशस्तलक्षणोपेतजङ्घायुगला निगूढमांसलजानुप्रदेशाः कदलिस्तम्भनिभसुकुमारपीवरोरुकाः वदनायामप्रमाणद्विगुणमांसलविशालजघनधारिण्यः स्निग्धकांतिसुविभक्तिभक्तश्लक्ष्णरोमराजयः प्रदक्षिणावर्त्ततरङ्गभंगुरनाभिमण्डलाः प्रशस्तलक्षणोपेतकुक्षयः सुसङ्गतपार्श्वाः कनककलशोपमसमसंहिताभ्युन्नतवृत्ताकृतिपीवरपयोधराः सुकुमारबाहुलतिकाः सौवस्तिक-शंखचक्राद्याकृतिरेखालंकृतपाणिपादतला वदनत्रिभागोच्छ्रितमांसलकम्बुग्रीवाः प्रशस्तलक्षणोपेतमांसलहनुविभागा दाडिमपुष्पानुकारिशोणिमाधरोष्ठा रक्तोत्पलतालुजिह्वाः विकसितकुवलयपत्रायतकान्तलोचना आरोपितचापपृष्ठाकृतिसुसंगतभ्रूलतिकाः प्रमाणोपपन्नललाटफलकाः सुस्निग्धकान्तश्लक्ष्णशिरोरुहाः पुरुषेभ्यः किञ्चिदूनोच्छ्रयाः स्वभावशृंगारचारुवेषाः प्रकृत्यैव हसितभणितिविलासविषयपरमनैपुण्योपेताः, तथा मनुष्याश्च स्वभावत एव सुरभिवदनाः प्रतनुक्रोधमानमायालोभाः सन्तोषिणो निरौत्सुक्या

मार्दवार्जवसम्पन्नाः सत्यपि मनोहारिणि मणिकनकमौक्तिकादौ ममत्वकारणममत्वाभिनिवेशरहिताः सर्वत्रापगतवैरानुबन्धा हस्त्यश्वकरभगोमहिषादिसद्भावे तत्परिभोगपराङ्मुखाः पादविहारिणो ज्वरादिरोगयक्षभूतपिशाचादिग्रहमारिव्यसनोपनिपातविकलाः कङ्ककुक्षिपरिणामा अहमिन्द्रतया पुरुषाः परस्परं प्रेष्यप्रेषकभावरहिताः, आहारोऽपि च तदा मनुष्याणां न शाल्यादिधान्यनिष्पन्नः, किन्तु पृथिवीमृत्तिका कल्पद्रुमाणां पुष्पफलानि च, तथाहि-जायन्ते खलु तदाऽपि विश्रसात एव शालिगोधूममाषमुद्गादीनि धान्यानि, परं तानि न मनुष्याणामुपभोगं गच्छन्ति, या तु पृथिवी सा शर्करातोऽप्यनन्तगुणमाधुर्या, यश्च कल्पद्रुमपुष्पफलानामास्वादः स चक्रवर्त्तिभोजनादप्यधिकगुणः, उक्तंच " तीसे णं भंते ! पुप्फफलाणं केरिसे आसाए पन्नत्ते ? गोयमा ! से जहानामए रन्नो चाउरंतचक्कवट्टिस्स कल्लाणभोयणजाए सयसहस्सनिप्फन्ने वन्नोववेए गंधोववेए रसोववेए आसायणिज्जे संघायणिज्जे सव्विंदियगायपल्हायणिज्जे आसाए, इत्तो इट्ठतरागे चेव पन्नत्ते" ततः पृथिव्या मृत्तिका कल्पद्रुमपुष्पफलानि च तेषामाहारः, तथाभूतमाहारमाहार्य प्रासादादिसंस्थाना ये गृहाकाराभिधाः कल्पद्रुमास्तेषु यथासुखमभिरमन्ते, न च तदा दंशमशकयूकामत्कुणमक्षिकादयः शरीरोपद्रवकारिणो जन्तव उपजायन्ते, येऽपि जायन्ते भुजगव्याघ्रसिंहादयस्तेऽपि मनुष्याणां न बाधायै प्रभवन्ति, नापि ते परस्परं हिंस्यहिंसकभावे वर्त्तन्ते, कालानुभावतो रौद्रभावरहितत्वात्, अस्यां च सुषमसुषमायामादौ मनुष्याणां ( आयुः ) त्रीणि पल्योपमानि त्रीणि च गव्यूतान्युच्छ्रयः, ततः क्रमेण हानिस्तावदवसेया यावत्पर्यन्ते द्वे पल्योपमे आयुर्द्वे च गव्यूते उच्छ्रायः, ततः सुषमा प्रविशति, अस्यां च सुषमायां परिमाणं भवति तिस्रः सागरोपमकोटीकोट्यः; आदौ च तदा मनुष्याणामायुर्द्वे पल्योपमे द्वे च गव्यूते शरीरोच्छ्रायः, ततः क्रमेण परिहानिस्तावदवगन्तव्या यावत्पर्यन्ते पल्योपममायुर्गव्यूतं च शरीरोच्छ्रयः, ततः सुषमदुष्षमा

कल्पपुष्पफलरसः

प्रविशति, तस्याश्च परिमाणं द्वे सागरोपमकोटीकोट्यौ भवतः, तस्यां चादौ पुरुषाणामायुः पल्योपमं शरीरोच्छ्रयस्तु गव्यूतं, ततः क्रमेण परिहाणिमुपगच्छति तावत् यावत् पर्यन्ते पूर्वकोट्यायुः पंचधनुशतानि शरीरोच्छ्रयः, अस्याश्च स्तोके तिष्ठति शेषे भगवान् प्रथमतीर्थकरोऽभवत्,सुषमायामस्यां च सुष्मदुष्षमायां मनुष्याणामुपभोगपरिभोगसम्भवः कल्पद्रुमेभ्यः,तथा चोक्तं-'तिन्नी उ सागरोवम कोडीकोडीउ वीयरागेहिं। सुसमत्ति समक्खाया जिणेहिं जियरागदोसेहिं ॥१॥ तीए पुरिसाणमाऊ दुन्नि उ पलियाइं तह पमाणं च। दो चेव गाउयाइं आईएँ भणंति समयन्नू ॥२॥ उवभोगा परिभोगा तेसिंपि य कप्पपायवेहिंतो। होंति किलेसेण विणा ण य ऊणा तयणुभावेणं ॥३॥ तो सुसमदुस्समाए पवाहरूवेण कोडिकोडीओ। अयराण दोन्नि सिट्ठा जिणेहिं जियरागदोसेहिं ॥४॥ तीएँ पुरिसाणमाउं एगं पलियं तहा पमाणं च। एगं च गाउयंतिय आईएँ भणंति समयन्नू ॥५॥ उवभोगपरीभोगो, तेसिंपि य कप्पपायवेहिंतो। होंति किलेसेण विणा नवरं ऊणाऽणुभावेणं ॥६॥ सुसमदुसमाऽवसेसे पढमजिणो धम्मनायगो भयवं। उप्पन्नो सुहपुन्नो सिप्पकलादंसओ उगमो ॥७॥"इति ॥८३॥ दुष्षमसुषमायामेष परिमाणरूपः कालो यदुतैका सागरोपमाणां कोटीकोटी कतिपयवर्षैर्न्यूना, यैश्च वर्षैर्न्यूना तानि वर्षाणि भवन्ति ज्ञातव्यानि द्विचत्वारिंशत्सहस्राणि, तस्यां च मनुष्याणामायुः पूर्वपरिमाणेनैव शरीरोच्छ्रयो धनुःसंख्यया, उपभोगपरिभोगसंपत्तिश्च प्रवरशाल्याद्यौषध्यादिभ्यः, उक्तंच-"ता दुसमसुसमूणा बायालीसाएँ वरिससहसेहिं। सागरकोडाकोडी एगेव जिणेहिं पन्नत्ता ॥१॥ तीए पुरिसाणमाउं पुव्वपमाणेण तह पमाणं च। धणुसंखानिद्दिट्ठं विसेस सुत्ताउ नायव्वं ॥२॥उवभोगपरीभोगा पवरोसहिमाइएहिं विन्नेया। जिणचक्किवासुदेवा सव्वेऽवि इमीए वोलीणा ॥३॥ अह दूसमाए कालो वाससहस्साइ एक्कवीसं तु। तावइओ चेव भवे कालो अइदूसमाएवि ॥४॥"॥ अथैष दुष्षमायाः कालो यदुतैकविंशतिर्वर्षसहस्राणि,तावानेव-तावत्प्र-

माण एवातिदुष्पमाया अपि कालो भवति ॥ ८७ ॥ सम्प्रत्यतिदेशेनोत्सर्प्पिणीगतान् कालविभागान् प्रतिपादयति-य एव प्रागवसर्प्पिण्यां सुषमसुषमादयः कालविभागा उक्ता एत एवोत्सर्पिण्यामपि भवन्ति ज्ञातव्याः, नवरं विभागेषु परिपाटिः प्रतिलोमा ज्ञातव्या, तद्यथा-प्रथमः कालविभागो दुष्पमदुष्पमा द्वितीयो दुष्पमा तृतीयो दुष्पमसुष्पमा चतुर्थः सुषमदुष्पमा पंचमः सुषमा षष्ठः सुषमासुषमेति ॥८८॥ साम्प्रतमसंख्येयकालोपसंहारमनन्तं च कालं प्रतिपादयति–'एषः' प्रागुक्तोऽवसर्प्पिण्युत्सर्प्पिणीरूपः कालोऽसंख्येयो ज्ञातव्यः, येऽपि च तस्योत्सर्पिण्यवसर्पिणीरूपस्य कालस्य 'विधानकाः' भेदाः सुषमसुषमादयः सागरोपमप्रमितास्तेऽपि 'असंख्येयाः' असंख्येयकालरूपाः प्रतिपत्तव्याः। 'इतः' असंख्येयकालादूर्ध्वं 'कालान्तरगुणेन' भूयोऽवसर्प्पिण्युत्सर्पिणीरूपकालान्तरप्रवृत्तिलक्षणेन गुणेन, किमुक्तं भवति ?- सिद्धान्तभाषितोत्कृष्टासंख्यातासंख्यातकप्रमाणोत्सर्प्पिण्यवसर्पिण्यतिक्रमे भूयोऽप्यवसर्प्पिण्युत्सर्प्पिणीप्रवृत्तौ पाश्चात्यः कालः सर्वोऽपि विवक्षितकालादारभ्यानन्तो भवति, अयमत्र तात्पर्यार्थः- असंख्यातोत्सर्प्पिणीप्रमाणकालोऽसंख्येयः, अनन्तोत्सर्प्पिण्यवसर्प्पिण्यात्मकोऽनन्त इति ॥८९॥ 'एते' अनन्तरोदिता उत्सर्प्पिण्यवसर्प्पिणीगताः सुषमसुषमादयः कालविभागाः सर्वेऽपि प्रत्येकं युगे प्रतिपद्यमाने प्रतिपद्यन्ते, प्रत्येकं च युगस्य 'अन्ते' पर्यवसाने 'समाप्नुवन्ति' निष्ठामुपयान्ति, एतदुक्तं भवति-षडपि सुषमसुषमादय उत्सर्प्पिण्यवसर्प्पिणीविभागाः सर्वे प्रत्येकं युगस्य प्रारम्भे प्राथम्यं प्रतिपद्यन्ते, युगस्य पर्यवसाने च पर्यवसानं, तथा चास्यैव ज्योतिष्करण्डकस्य टीकाकारः पादलिप्तसूरिराह-"एए उ सुसमादयो अद्धाविसेसा जुगाइणा सह पवत्तंते, जुगंतेण सह समप्पंति"त्ति ॥९०॥ 'एते' अनन्तरोदिताः कालविभागाः संख्यातासंख्यातानन्तरूपाः कालकुशलेन भवितुमिति गम्यते, किमुक्तं भवति ?-काले परिज्ञानकुशलमात्मानं भावेतुमिच्छता भवन्ति ज्ञातव्याः ॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां मानाधिकारयुक्तं द्वितीयं प्राभृतं समाप्तम् २॥

उक्तं द्वितीयं प्राभृतं, साम्प्रतमेतदनन्तरोद्दिष्टतृतीयप्राभृतमणनार्थमुपक्षेपं करोति-

एत्तो उ अहिगमासगनिष्फत्तिं मे निसामेह ॥ ९१ ॥

चंदस्स जो विसेसो आइच्चस्स य हवेज्ज मासस्स । तीसइगुणिओ संतो हवइ अहिमासगो एक्को ॥ ९२ ॥

सट्ठीए अइयाए हवइ हु अहिमासगो जुगद्धंमि । बावीसे पव्वसए हवई बिइओ जुगंतंमि ॥ ९३ ॥

मासविसेसुप्पण्णा निप्फत्ती अहिगमासगस्सेसा ।

'इतः' मानार्थाधिकारयुक्तद्वितीयप्राभृतमणनादनन्तरमधिकमासनिष्पत्तिं यथागमं मे प्रतिपादयतो 'निशमय' आकर्णय ॥९१॥ इह प्राग् युगं चन्द्रचन्द्राभिवर्द्धितचन्द्राभिवर्धितरूपसंवत्सरपञ्चकात्मकं व्यावर्णितं, तत्र तृतीयेऽभिवर्द्धिताख्ये संवत्सरे पञ्चमे चाऽभिवर्द्धिताख्ये संवत्सरे प्रत्येकमधिकमासो भवति,यतो युगं सूर्यसंवत्सरापेक्षया परिभाव्यमानमन्यूनानतिरिक्तानि पञ्च वर्षाणि भवंति, सूर्यमासश्च सार्द्धत्रिंशदहोरात्रप्रमाणः, चन्द्रमास एकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागा दिनस्य, ततः सूर्यसंवत्सरसत्कात्रिंशन्मासातिक्रमे एकश्चन्द्रमासोऽधिको लभ्यते, स च यथा लभ्यते तथा प्रतिपादयति ॥८९ ॥ 'आदित्यस्य' आदित्यसंवत्सरसम्बन्धिनो मासस्य मध्यात् 'चन्द्रस्य' चन्द्रमासस्य यो भवति विश्लेषः, इह विश्लेषे कृते सति यदवशिष्यते तदप्युपचाराद्विश्लेषः, स त्रिंशता गुणितःसन् भवत्येकोऽधिकमासः, तत्र सूर्यमासपरिमाणात्सार्द्धत्रिंशदहोरात्ररूपाच्चन्द्रमासपरिमाणमेकोनत्रिंशद्दिनानि द्वात्रिंशच्च

द्वाषष्टिभागा इत्येवंरूपं शोध्यते, ततः स्थितं पश्चाद्दिनमेकमेकेन द्वाषष्टिभागेन न्यूनं, तत् दिनं त्रिंशता गुण्यते, जातानि त्रिंशद्दिनानि एकश्च द्वाषष्टिभागस्त्रिंशता गुणितो जातानि त्रिंशद् द्वाषष्टिभागाः, ते त्रिंशद्दिनेभ्यः शोध्यन्ते, स्थितानि शेषाण्येकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागा दिनस्य, एतावत्परिमाणश्च चान्द्रो मास इति भवति सूर्यसंवत्सरसत्कत्रिंशन्मासातिक्रमे एकोऽधिको मासः, द्वितीयोऽपि सूर्यसत्कत्रिंशन्मासातिक्रम इति ॥९२॥ प्रथमोऽधिकमासःतृतीये संवत्सरे पौषो भवति,द्वितीयः पञ्चमे आषाढः, ततो युगे द्वावभिवर्द्धितसंवत्सरौ भवतः, ह न प्रतियुगे चन्द्रमासापेक्षया यावत्सु पक्षेष्वतिक्रान्तेषु प्रथमोऽधिकमासो भवति तावत्सु द्वितीयस्तदेतत् प्ररूपयति–एकस्मिन् युगे प्राग्व्यावर्णितस्वरूपे पक्षाणां षष्टावतीतायां, षष्टिसङ्ख्येषु पक्षेष्वतिक्रान्तेष्वित्यर्थः, एतस्मिन्नवसरे युगार्द्धप्रमाणे एकोऽधिकमासो भवति, द्वितीयस्त्वधिकमासकश्चान्द्रे द्वाविंशत्याधिके 'पर्वशते' पक्षशतेऽतिक्रान्ते 'युगस्यान्ते' युगस्य पर्यवसाने भवति ॥ ९३ ॥ सम्प्रति अधिकृतवक्तव्यतोपसंहारमाह- 'एषा' अनन्तरोदिताऽधिकमासस्य निष्पत्तिः 'मासविशेषोत्पन्ना' मासविशेषं-चान्द्रमासरूपमधिकृत्योत्पन्ना-जातेति ॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायामधिकमासनिष्पत्तिनामकं तृतीयं प्राभृतं समाप्तम्

उक्तं तृतीयं प्राभृतं, सम्प्रत्यवमरात्रप्रतिपादकप्राभृतप्ररूपणावसरः, परं तदुपेक्ष्य अल्पवक्तव्यत्वात्प्रथमतस्तिथिसमाप्तिनामकं प्राभृतं वक्तुकाम आह—

**कम्मो निरंसयाए मासो ववहारको लोए ॥ ९४ ॥ (आइच्चं कम्मचन्दानक्खत्तभिवड्ढियाण मासाणं)**
**सेसा उ संसयाए ववहारे दुक्करा घित्तुं ॥ ९५ ॥**

आदित्यकर्मचन्द्रनक्षत्राभिवर्द्धितमासानां मध्ये ' कर्मा ' कर्मसंवत्सरसम्बन्धी मासो ' निरंशतया ' परिपूर्णत्रिंशदहोरात्रप्रमाणतया लोके सुखेन व्यवहारको भवति, तथाहि-हलधरादयोऽपि बालिशास्त्रिंशतमहोरात्रान् परिगणय्य मासं परिकल्पयन्ति, ' शेषास्तु मासाः ' सूर्यमासचन्द्रमासादयः ' सांशतया ' सावयवतया ' व्यवहारे ' लोकव्यवहारप्रवर्त्तनविषये लौकिकैर्ग्रहीतुं दुष्कराः, दुःखेन स्वयं ज्ञातुं शक्यन्त इत्यर्थः, तथाहि-सूर्यमासः सार्द्धानि त्रिंशद्दिनानि, चन्द्रमास एकोनत्रिंशद्दिनानि द्वात्रिंशच्च द्वाषष्टिभागा दिनस्य, नक्षत्रमासः सप्तविंशतिर्दिनानि एकविंशतिश्च सप्तषष्टिभागा दिनस्य, अभिवर्द्धितमास एकत्रिंशद्दिनानि, एकविंशत्युत्तरं च शतं चतुर्विंशत्युत्तरशतभागानां दिनस्य, न चैतद्बालिशा जानते, केवलं चान्द्रो ( कर्म ) मासस्तिथ्यपेक्षया चिन्त्यमानः परिपूर्णत्रिंशत्तिथ्यात्मकत्वेन निरंशत्वात् लोके व्यवहारपथेऽवतरतीति ( तत् ) परिमाणज्ञापनार्थमिदमुपक्रम्यते ॥ ९४-९५ ॥ तत्र तिथिस्वरूपज्ञानार्थं यन्निमित्ता अहोरात्रा यन्निमित्ताश्च तिथयस्तदेतत्प्ररूपयति—

सूरस्स गमणमंडलविभागनिप्फाइया अहोरत्ता । चंदस्स हाणिवुड्ढीकएण निप्फज्जए उ तिही ॥ ९६ ॥

' सूर्यस्य ' आदित्यस्य गमनयोग्यानि यानि मण्डलानि तेषां प्रत्येकं यो विभागो-विशिष्टसमभागतया, भागार्द्धमित्यर्थः, तेन निष्पादिता अहोरात्राः, किमुक्तं भवति ?-एकैकस्मिन् मण्डले यावता कालेन मण्डलार्द्धं गमनेन पूरयति तावत्कालप्रमाणेनाहोरात्राः, ' चन्द्रस्य ' चन्द्रमण्डलस्य पुनर्हानिवृद्धिकृतेन कालपरिमाणेन निष्पद्यते तिथिः, अत्रायं भावार्थः—चन्द्रमण्डलस्य कृष्णपक्षे यावता कालेनैकैकः षोडशभागो द्वाषष्टिभागसत्कभागचतुष्टयप्रमाणो हानिमुपपद्यते यावता कालेन शुक्लपक्षे एकैकः षोडशभागः प्रागुक्त-

प्रमाणः परिवर्द्धते तावत्कालप्रमाणप्रमितास्तिथयः, एतावांश्चाहोरात्राणां तिथीनां च परस्परं कालविशेषः, अहोरात्रो द्वाषष्टिभागपरिच्छिन्नो विधीयते, तस्य सत्का ये एकषष्टिभागास्तावत्प्रमाणा तिथिः ॥९६॥ इहेदमुक्तं-चन्द्रस्य वृद्धिहानिकृतेन निष्पद्यते तिथिः, तत्र शिष्याणामुदपादि सम्मोहः-कथं चन्द्रस्य शाश्वतिकतयोपवर्ण्यमानस्य वृद्धिहानी घटेते? इति, ततः शिष्याणां संमोहमपनेतुकामो यथा तद् घटते तथा तन्निरूपणार्थमाह—

चंदस्स नेव हाणी नावि वुड्डी वा अवट्ठिओ चंदो । सुकिलभावस्स पुणो दीसइ वुड्डी य हाणी य ॥ ९७ ॥
किण्हं राहुविमाणं हेट्ठा चउरंगुलं च चंदस्स । तेणोवट्टइ चंदो परिवड्ढइ वावि नायव्वो ॥ ९८ ॥
तं रययकुमुयसरिसप्पहस्स चंदस्स राहुसुभगस्स । लोए तिहित्ति नियमं भण्णइ वुड्ढीए हाणीए ॥ ९९ ॥
सोलसभागे काऊण उडुवई हायतेऽस्य पन्नरस । तत्तियमेत्ते भागे पुणोवि परिवड्ढई जुण्हे ॥ १०० ॥
कालेण जेण हायइ सोलसभागो उ सो तिही होइ । तह चेव य वुड्ढीए एवं तिहिणो समुप्पत्ती ॥ १०१ ॥
जावइए परिहायइ भागे वड्ढइ य आणुपुव्वीए । तावइया होंति तिही तेसिं नामाणि वोच्छामि ॥ १०२ ॥

'चन्द्रस्य' चन्द्रमण्डलस्य स्वरूपतो नैव हानिर्नापि वृद्धिः, किन्त्ववस्थित एव सदा चन्द्रः, चन्द्रादिविमानानां शाश्वतिकत्वात् , यद्येवं कथं साक्षात् प्रत्यक्षत उपलभ्येते वृद्धिहानी? तत आह—'सुकिले' त्यादि, शुक्लभावस्य-शुक्लताया दर्शनपथप्राप्तिकता दृश्यते वृद्धिर्हानिर्वा, न तु स्वरूपतश्चन्द्रमण्डलस्य ॥९७॥ किमत्र कारणम्?, अत आह- 'किण्ह' मित्यादि, इह द्विविधो राहुस्तद्यथा-

पर्वराहुर्ध्रुवराहुश्च, तत्र यः पर्वराहुस्तद्गता चिन्ता क्षेत्रसमासटीकायां कृता, यस्तु ध्रुवराहुस्तस्य विमानं कृष्णं, तच्च चन्द्रमण्डलस्याधस्ताच्चतुरंगुलमसम्प्राप्तं सत् चारं चरति, तच्च कृष्णपक्षे आत्मीयेन पंचदशेन भागेन प्रतिदिवसमेकैकं भागं द्वाषष्टिभागीकृतस्य चन्द्रमण्डलस्य सत्का ये चत्वारो भागास्तावत्प्रमाणमावृणोति, शुक्लपक्षे च प्रतिदिवसं तावन्तमेकैकं भागमात्मीयेन पंचदशेन पञ्चदशेन भागेनापसरन् प्रकटीकरोति, तेन कारणेन चन्द्रः कृष्णपक्षे 'अपवर्द्धते' हीयते शुक्लपक्षे परिवर्द्धते इति ज्ञातव्यः, किमुक्तं भवति?- तेन कारणेन चन्द्रमण्डलस्य वृद्धिहानी प्रतिभासेते, न तु ते तात्त्विक्यौ स्त इति॥ ९८ ॥ एतदेव स्पष्टयति-'त' मित्यादि, यत एवं चन्द्रमण्डलस्य राहुविमानकृतावरणानावरणजनिते वृद्धिहानी 'तत्' तस्मात्कारणाच्चन्द्रस्य रजतकुमुदसदृशप्रभस्य रूप्यकुमुदपुष्पतुल्यप्रभस्य [चन्द्रस्य] रात्रिसुभगस्य-रजन्यामतिमनोहारितया प्रतिभासनशीलस्य हानौ वृद्धौ यथोदितभागप्रमाणायां च लोके तिथिरिति 'नियतं' निश्चितं भण्यते ॥९९॥ सम्प्रति भागप्रमाणमेव निर्दिदिक्षुराह-'उडुपतिं' चन्द्रमण्डलमित्यर्थः षोडश भागान् राहुदेवः 'कृत्वा' बुद्ध्या परिकल्प्य तथाजगत्स्वाभाव्यात् कृष्णपक्षे 'अत्र' एषु षोडशसु भागेषु मध्ये प्रतिदिवसमेकैकभागहानिकरणेन सकले कृष्णपक्षे पंचदश भागान् ह्रापयति, ज्योत्स्ने-ज्योत्स्नासमन्विते, शुक्लपक्षे इत्यर्थः, प्रतिदिवसमेकैकभागपरिवर्द्धनेन परिपूर्णे पक्षे तावन्मात्रान्, पंचदशसंख्यानित्यर्थः, भागान् पुनरपि परिवर्द्धयति, इयमत्र भावना-इह चन्द्रविमानं द्वाषष्टिसंख्यैर्भागैः परिकल्प्यते, परिकल्प्य च तेषां भागानां पंचदशभिर्भागो ह्रियते, हृते च भागे लब्धाश्चत्वारो द्वाषष्टिभागाः, शेषौ द्वौ भागौ तिष्ठतः, तौ च सदाऽनावृत्तौ, एषा किल चन्द्रमसः षोडशी कलेति प्रसिद्धिः, तत्र कृष्णपक्षे प्रतिपदि ध्रुवराहुविमानं चन्द्रमण्डलस्याधोभागेन चतुरंगुलमसम्प्राप्तं चारं चरत् आत्मीयेनैकेन पंचदशेन भागेन द्वौ द्वाषष्टिभागौ सदाऽनावार्यस्वभावौ मुक्त्वा शेषद्वाषष्टिसत्कषष्टि-

भागात्मकस्य चन्द्रमण्डलस्य सत्कं चतुर्भागात्मकं पंचदशं भागमावृणोति, द्वितीयस्यामात्मीयाभ्यां द्वाभ्यां पंचदशभागाभ्यां द्वौ पंचदशभागावावृणोति (एवं) पञ्चदश पञ्चदशभागान् आवृणोति (यावदमावास्यायां) ततः शुक्लपक्षे प्रतिपदि एकं पंचदशभागं प्रकटीकरोति, द्वितीयस्यां द्वौ पञ्चदशभागौ तृतीयस्यां त्रीन् पञ्चदशभागान् एवं पौर्णिमायां पञ्चदश पंचदशभागाननावृतान् करोति, तदा च सर्वात्मना परिपूर्णं चन्द्रमण्डलं लोके प्रकटं भवति, उक्तंच-'कइविहे णं भंते! राहू पन्नत्ते?, गोयमा! दुविहे राहू पन्नत्ते, तंजहा-धुवराहू पव्वराहू य. तत्थ णं जे से धुवराहू से णं बहुलपक्खस्स पडिवए आरब्भ पन्नरसइभागेणं पन्नरसभागमावरेमाणे चिट्ठइ, तंजहा-पढमाए पढमं भागं विइयाए विइयं भागं जाव पन्नरसीए पन्नरसं भागं, तं चेव सुक्कपक्खे उवदंसेमाणे उव चिट्ठइ, तंजहा-पढमाए पढमं भागं विइयाए विइयं भागं जाव पन्नरसं भाग" मिति ॥१००॥ तत्र यावता कालेन कृष्णपक्षे षोडशो भागो द्वाषष्टिभागसत्कचतुर्भागात्मको 'हीयते' हानिमुपगच्छति स एव तावान् कालविशेषस्तिथिर्भवति, तथा चैवं वृद्ध्याऽपि तिथिर्भवति, किमुक्तं भवति?-यावता कालेन शुक्लपक्षे षोडशो भागः प्रागुक्तक्रमेण परिवर्द्धते तावत्प्रमाणः कालविशेषास्तिथिरिति, अहोरात्रस्य (एकषष्टिः) द्वाषष्टिभागास्तावत्प्रमाणा तिथिरित्यर्थः, एवं तिथेर्भगवद्भिस्तीर्थकरगणधरैः समुत्पत्तिराख्याता ॥१०१॥ कियत्संख्याकास्तास्तिथय इति तत्संख्यानिरूपणार्थमुपपत्तिमाह- इह यावता कालेनैकश्चन्द्रमण्डलस्य षोडशो भागो द्वाषष्टिभागसत्कचतुर्भागात्मकः परिहीयते वर्द्धते वा तावत्कालप्रमाणा एका तिथिरिति प्रागुपपादितं, ततो यावतो भागान् चन्द्रमसो राहुविमानं कृष्णपक्षे हापयति यावतश्च भागान् 'आनुपूर्व्या' क्रमेण शुक्लपक्षे परिवर्द्धयति तावत्यः-तावत्प्रमाणाः शुक्लपक्षे कृष्णपक्षे च तिथयो भवन्ति, तत्र पंचदश भागान् कृष्णपक्षे हापयति पंचदशैव, च भागान् शुक्लपक्षे परिवर्द्धयति, ततः पंचदश कृष्णपक्षे तिथयः, पंचदश शुक्लपक्षे, ॥ १०२ ॥ सम्प्रति तासां तिथीनां नामानि वक्ष्यामि, प्रतिज्ञातमेव निर्वाहयति-

॥५८॥

तिथि-विधानं मास नामानि

पाडविग विइय तइया य चउत्थी पंचमी य छट्ठी या। सत्तमि अट्ठमि नवमि दसमी एक्कारसी चेव ॥ १०३ ॥
बारसि तेरसि चाउद्दसी य निट्ठवणिगा य पन्नरसी। किण्हंमि य जोण्हंमि य एसेव विही मुणेयव्वो ॥१०४॥

कृष्णपक्षे प्रथमा तिथिः प्रतिपत् द्वितीया द्वितीया तृतीया तृतीया एवं यावन्निष्ठापनिका-पक्षपरिसमाप्तिकारिका पञ्चदशी, अ-
मावास्येत्यर्थः, ज्योत्स्नेऽपि पक्षे, शुक्लपक्ष इत्यर्थः, एष एव-अनन्तरोदितो नाम्नां विधिर्ज्ञातव्यस्तद्यथा-प्रथमा प्रतिपद् द्वितीया द्वितीया
तृतीया एवं यावत्परिसमाप्तिकारिका पंचदशी, पौर्णमासीत्यर्थः ॥ इह विचित्रो विधिर्नाम्नामागमे मासादितिथिपर्यतानामुक्तस्ततस्तिथि-
नाम्नां प्रस्तावात्सोऽपि विनेयजनानुग्रहार्थमुपवर्ण्यते-इह चैकैकस्मिन् संवत्सरे द्वादश मासास्तेषां च नामधेयानि द्विविधानि, तद्यथा-
लौकिकानि लोकोत्तराणि च, तत्र लौकिकान्यमूनि, तद्यथा-श्रावणो भाद्रपद आश्वयुजः कार्तिको मार्गशीर्षः पौषो माघः फाल्गुनश्चै-
त्रो वैशाखो ज्येष्ठ आषाढ इति, लोकोत्तराण्यमूनि, तद्यथा-प्रथमः श्रावणोऽभिनन्दितो द्वितीयः प्रतिष्ठस्तृतीयो विजयश्चतुर्थः प्रीति-
वर्द्धनः पञ्चमः श्रेयान् षष्ठः शिवः सप्तमः शिशिरोऽष्टमो हेमवान् नवमो वसन्तमासो दशमः कुसुमसम्भव एकादशो निदाघो द्वाद-
शो वनविरोहः, तथा चोक्तं जम्बूद्वीपप्रज्ञप्तौ-"एगमेगस्स णं भंते! संवच्छरस्स कति मासा पन्नत्ता?, गोयमा! दुवालस मासा पन्नत्ता,
तेसि णं दुविहा नामधिज्जा पन्नत्ता, तंजहा-लोइया लोउत्तरिया य, तत्थ लोइया नामा इमे-सावणे भद्दवए जाव आसाढे, लोउत्त-
रिया नामा इमे-अभिणंदिते पइट्ठे य, विजए पीइवद्धणे। सेयंसे य सिवे चेव, सिसिरे [य] तह हेमवं ॥१॥ नवमे वसंतमासे, दसमे कुसु-
मसंभवे। एक्कारसे निदाहे य, वणविरोहे य बारसे ॥२॥" एकैकस्मिंश्च मासे द्वौ पक्षौ, तयोश्च नामधेये गुणनिष्पन्ने इमे, तद्यथा- बहु-

लपक्षः शुक्लपक्षश्च, तत्र योऽन्धकारबहुलः पक्षः, स बहुलपक्षः, यस्तु ज्योत्स्नाधवलिततया शुक्लः पक्षः स शुक्लपक्षः, उक्तञ्च-' एगमेगस्स णं भंते ! मासस्स कइ पक्खा पन्नत्ता ?, गोयमा ! दुवे पक्खा पन्नत्ता, तंजहा-बहुलपक्खे सुक्कपक्खे य'' एकैकस्मिंश्च पक्षे पंचदश दिवसास्तद्यथा-प्रतिपद्दिवसो द्वितीयादिवसो यावत्पंचदशीदिवसः, तेषां च दिवसानां क्रमेणामूनि नामानि, तद्यथा-प्रथमः पूर्वांगो द्वितीयः सिद्धमनोरमस्तृतीयो मनोहरश्चतुर्थो यशोभद्रः पंचमो यशोधरः षष्ठः सर्वकर्मसमृद्धः सप्तम इंद्रमूर्द्धाभिषिक्तोऽष्टमः सौमनसो नवमो धनंजयो दशमोऽर्थसिद्ध एकादशोऽभिजातो द्वादशोऽत्यशयनस्त्रयोदशः शतंजयश्चतुर्दशोऽग्निवेश्यः पंचदश उपशमः, तथा चोक्तं जम्बूद्वीपप्रज्ञप्तौ "एगमेगस्स णं भंते ! पक्खस्स कइ दिवसा पन्नत्ता ?, गोयमा ! पन्नरस दिवसा पन्नत्ता, तंजहा-पडिवादिवसे बिइयादिवसे जाव पन्नरसिदिवसे। एएसि णं भंते ! पन्नरसण्हं दिवसाणं कइ नामधिज्जा पन्नत्ता ?, गोयमा ! पन्नरस नामधिज्जा पन्नत्ता, तंजहा-पुव्वंगे सिद्धमणोरमे य मणोहरे चेव। जसभद्दे य जसहरे सव्वकामसमिद्धए ॥१॥ इंदमुद्धाभिसित्ते य सोमणस धणंजए य बोद्धव्वे। अत्थसिद्धे अभिजाए अच्चसण सयंजए चेव ॥२॥ अग्गिवेसे उ उवसमे, दिवसाणं नामधिज्जाइं।'' एकैकस्मिंश्च पक्षे पंचदश रात्रयस्तद्यथा-प्रतिपद्रात्रिर्द्वितीयारात्रिर्यावत्पंचदशीरात्रिः, तासां च रात्रीणां क्रमेणामूनि नामानि, तद्यथा-प्रथमा उत्तमा द्वितीया सुनक्षत्रा तृतीया एलापत्या चतुर्थी यशोधरा पञ्चमी सौमनसी षष्ठी श्रीसम्भूता सप्तमी विजया अष्टमी वैजयन्ती नवमी जयन्ती दशमी अपराजिता एकादशी इच्छा द्वादशी समाहारा त्रयोदशी तेजाः चतुर्दशी अतितेजाः पञ्चदशी देवानन्दा, तथा चोक्तं-"एगमेगस्स णं भंते ! पक्खस्स कइ राईओ पन्नत्ताओ ?, गोयमा ! पन्नरस्स राईओ पन्नत्ताओ, तंजहा-पडिवा राई बिइया राई तइया राई जाव पन्नरसीराई । एएसि णं भंते ! पन्नरसण्हं राईणं कइ नामधेज्जा पण्णत्ता ? गोयमा ! पन्नरस नामधेज्जा पन्नत्ता, तंजहा-उत्तमा य

पक्षदिवसरात्रिनामानि

सुनक्खत्ता, एलावच्चा जसोधरा। सोमणसी चेव तहा, सिरिसंभूया य आहिया ॥१॥ विजया य वेजयंती, जयंती अपराइया। इच्छा य समाहारा, तेया तहचेव अइतेया ॥२॥ देवाणंदा राई रयणीणं नामधिज्जाइं ॥" एकैकस्मिश्च पक्षे पंचदश तिथयः, ताश्च द्विविधास्तद्यथा-दिवसतिथयो रात्रितिथयश्च, तत्र दिवसतिथीनाममूनि नामानि, तद्यथा-प्रथमा नन्दा द्वितीया भद्रा तृतीया जया चतुर्थी तुच्छा पञ्चमी पूर्णा, ततः पुनरपि षष्ठी नन्दा सप्तमी भद्रा अष्टमी जया नवमी तुच्छा दशमी पूर्णा, ततः पुनरप्येकादशी नन्दा द्वादशी भद्रा त्रयोदशी जया चतुर्दशी तुच्छा पञ्चदशी पूर्णा, तथा चोक्तं चन्द्रप्रज्ञप्तौ-"ता कहं ते तिहीओ आहियत्ति वएज्जा?, तत्थ खलु इमा दुविहा तिही पन्नत्ता, तंजहा-दिवसतिही य राइतिही य, ता कहं ते दिवसतिही पक्खस्स पन्नत्ता?, पक्खस्स पन्नरस दिवसतिही पन्नत्ता, तंजहा-नंदा भद्दा जया तुच्छा पुण्णा पक्खस्स पंचमी, पुणरवि नन्दा भद्दा जया तुच्छा पुण्णा पक्खस्स दसमी, पुणरवि नंदा भद्दा जया तुच्छा पुण्णा पक्खस्स पन्नरसी, एवं तिगुणा तिगुणा तिहीओ" यास्तु रात्रितिथयस्तासामेतानि नामानि, तद्यथा-प्रथमा उग्रवती द्वितीया भोगवती तृतीया यशोमती चतुर्थी सर्वसिद्धा पञ्चमी शुभनामा, पुनरपि षष्ठी उग्रवती सप्तमी भोगवती अष्टमी यशोमती नवमी सर्वसिद्धा दशमी शुभनामा, ततः पुनरप्येकादशी उग्रवती द्वादशी भोगवती त्रयोदशी यशोमती चतुर्दशी सर्वसिद्धा पंचदशी शुभनामेति, उक्तं च चन्द्रप्रज्ञप्तावेव-"ता कहं ते राइतिही आहियत्ति वएज्जा?, ता एगमेगस्स णं पक्खस्स पन्नरस राईतिही पण्णत्ता, तंजहा-उग्गवई भोगवई जसोमई सव्वासिद्धा सुहनामा, पुणरवि उग्गवई भोगवई जसवई सव्वासिद्धा सुहनामा, पुणरवि उग्गवई भोगवई जसवई सव्वसिद्धा सुहनामा, एवं तिगुणा एता तिहीओ सव्वासिं राईणं"मिति, तदेवमुक्तानि तिथीनां नामानि, प्रसंगतो मासदिवसरात्रीणामपि ॥१०३-१०४॥ सम्प्रति यावन्मुहूर्त्तप्रमाणा तिथिस्तावत्प्रमाणां तां प्रतिपादयन्ति—

दिवसरात्रितिथिनामानि

**अउणत्तीसं पुण्णा उ मुहुत्ता सोमतो तिही होइ । भागा य उ बत्तीसं बावट्ठिकएण छेएणं ॥ १०५ ॥**

'सोमतः' चन्द्रमस उपजायते तिथिः, सा च तत उपजायमाना एकोनत्रिंशत् परिपूर्णमुहूर्त्ता एकस्य च मुहूर्त्तस्य द्वाषष्टिकृतेन छेदेन प्रविभक्तस्य सत्का द्वात्रिंशद्भागाः,तथाहि-अहोरात्रस्य द्वाषष्टिभागीकृतस्य सत्का ये एकषष्टिभागास्तावत्प्रमाणा तिथिरित्युक्तं, तत्रैकषष्टिस्त्रिंशता गुण्यते जातान्यष्टादश शतानि त्रिंशदधिकानि १८३०, एते च किल द्वाषष्टिभागीकृतसकलतिथिगतमुहूर्त्तसत्का अंशास्ततो मुहूर्त्तानयनार्थं द्वाषष्ट्या भागो ह्रियते, हृते च भागे लब्धा एकोनत्रिंशन्मुहूर्त्ता द्वात्रिंशच्च द्वाषष्टिभागा मुहूर्त्तस्य, एतावन्मुहूर्त्तप्रमाणा तिथिः, एतावता हि कालेन चन्द्रमण्डलगतः पूर्वोदितप्रमाणः षोडशो भागो हानिं चोपगच्छति वर्द्धते च, तावानेव तिथेः परिमाणकालः ॥१०५॥ साम्प्रतमीप्सितदिने तिथिपरिमाणज्ञापनार्थं करणमाह—

**तिहिरासिमेव बावट्ठि भइय सेसमेगसट्ठिगुणं । बावट्ठीविभत्तीए सेसे अंसा तिहिसमत्ती ॥ १०६ ॥**

ईप्सितो तिथिराशिर्द्वाषष्ट्या हि तिथिभिः परिपूर्णा एकषष्टिरहोरात्रा भवन्ति अतः परिपूर्णाहोरात्रपातनार्थं द्वाषष्ट्या विभागीक्रियते, विभागे च कृते यच्छेषमुपलभ्यते तदेकषष्टिगुणं क्रियते, एकैकस्यास्तिथेर्द्वाषष्टिभागीकृताहोरात्रसत्कैकषष्टिभागप्रमाणत्वात्, कृत्वा चैकषष्टिगुणं द्वाषष्ट्या विभज्यते, द्वाषष्ट्या भागैः परिपूर्णस्याहोरात्रस्य पतनात्, द्वाषष्ट्या च भागे कृते येऽशाः पश्चादवतिष्ठन्ते सा तिथिपरिसमाप्तिः, तावदंशप्रमाणा तस्मिन् दिने तिथिरित्यर्थः, यथा कोऽपि पृच्छति-युगे प्रथमे चान्द्रे संवत्सरेऽश्वयुजमासे शुक्लपक्षे पञ्चमी कियत्प्रमाणा ? इति, तत्र किल तिथिराशिरादित आरभ्य पंचमीपर्यवसानोऽशीतिसंख्य इत्यशीतिर्ध्रियते, तस्या द्वाष-

ष्ट्या भागो ह्रियते, स्थिताः पश्चादष्टादश, ते एकषष्ट्या गुण्यन्ते, जातानि दश शतान्यष्टानवत्यधिकानि १०९८, तेषां द्वाषष्ट्या भागो ह्रियते, स्थिताः पश्चाच्चतुश्चत्वारिंशदंशाः, आगतमेतावदेकषष्टिभागप्रमाणा तस्मिन् दिने पञ्चमी, एवमन्यत्रापि भावनीयम् ॥१०६॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां तिथिसमाप्तिनामकं चतुर्थं प्राभृतं समाप्तम्

तदेवमुक्तं चतुर्थं प्राभृतं,साम्प्रतमवमरात्रप्रतिपादकं पञ्चमं प्राभृतमभिधित्सुराह—

एसा तिहिनिप्फत्ती भणिया मे वित्थरं पयहिऊणं । वोच्छामि ओमरत्तं उल्लिंगन्तो समासेणं ॥ १०७ ॥
कालस्स नेव हाणी नवि वुड्डी वा अवट्ठिओ कालो। जाइ य वुड्ढावुड्डी मासाणं एक्कमेक्काउ ॥ १०८ ॥
संवउडूमासाणं अंसा जे दिस्सए विसेसम्मि। ते ओमरत्तभागा भवंति मासस्स नायव्वा ॥ १०९ ॥
बावट्ठिभागमेगं दिवसे संजाइ ओमरत्तस्स । बावट्ठीए दिवसेहि ओमरत्तं तओ भवइ ॥ ११० ॥

'एसा' अनन्तरोदितस्वरूपा तिथिनिष्पत्तिर्मया विस्तरं 'प्रहाय' परिहृत्य 'भणिता' प्रतिपादिता, सम्प्रति 'समासेन' संक्षेपेण 'उल्लिंगन्' किंचिन्मात्रतया प्रतिपादयन् अवमरात्रान् वक्ष्यामि॥१०७॥ननु कालः सर्वदाऽनादिप्रवाहपतिततया प्रतिनियतस्वभाव एव परावर्त्तते न तस्य काऽपि हानिर्नापि कश्चिदपि स्वरूपोपचयः, ततः कथमवमरात्रतासम्भवः? इत्यत आह- 'कालस्य' सूर्यादिक्रियोपलक्षितस्यानादिप्रवाहपतितप्रतिनियतस्वभावस्य न स्वरूपतो हानिर्नापि कश्चिदपि स्वरूपोपचयः, किन्तु सदा तथा जगत्स्वाभाव्यादवस्थित एव तथा प्रतिनियतरूपतयाऽयं कालः, केवलं ने जायेते-जायमाने प्रतीयेते वृद्धापवृद्धी मासानां ते 'एकमेकस्मात्' एकस्य-अ- ॥ ६३ ॥

मास भेदापेक्षया तिथिहानिः

न्यतरस्य, सूत्रे द्वितीया प्राकृतत्वात्, भवति हि प्राकृतलक्षणवशाद् व्यत्ययः स्यादिविभक्तीनां, यदाह पाणिनिः स्वप्राकृतलक्षणे-
'व्यत्ययोऽप्यासा'मित्येकस्माद्-अन्यतरस्मान्मासाद् ; अत्र स्थानिषपः कर्माधारयोः इत्यनेन पंचमी, ततोऽयमर्थः-एकमपरं मासमधिकृ-
त्यैकस्यान्यतरस्य मासस्य वृद्ध्यपवृद्धी भवतः, किमुक्तं भवति ?- कर्ममासमपेक्ष्य चन्द्रमासचिन्तायां कालस्यापवृद्धिः सूर्यमासचि-
न्तायां वृद्धिः, स्वरूपापेक्षया तु त्रयोऽपि मासाः सदा प्रतिनियतस्वरूपभावाः परावर्तन्ते इति न तेन कश्चित्कालस्य वृद्धिहानिसम्भवः
॥१०८॥ सम्प्रति ते एव वृद्धिहानी दिदर्शयिषुः कर्ममासमपेक्ष्य चन्द्रमासाचिन्तायां कालस्य हानिं दर्शयति–इह कर्म्ममासः परिपू-
र्णस्त्रिंशदहोरात्रप्रमाणः, चन्द्रमास एकोनत्रिंशदहोरात्रा द्वात्रिंशच्च द्वाषष्टिभागा अहोरात्रस्य, ततश्चन्द्रमासपरिमाणस्य ऋतुमासस्य
च, कर्ममासपरिमाणस्य चेत्यर्थः, परस्परं विश्लेषः क्रियते, विश्लेषे च कृते सति येऽशा उद्धरिता दृश्यन्ते त्रिंशद् द्वाषष्टिरूपास्तेऽवमरा-
त्रस्य भागाः, तदवमरात्रं परिपूर्णं भवति मासद्वयपर्यन्ते, पूर्णाः तस्य सत्कास्ते भागा मासस्यावसाने द्रष्टव्याः, किमुक्तं भवति ?-ए-
कस्मिन् कर्ममासे परिपूर्णे सति त्रिंशद् द्वाषष्टिभागा अवमरात्रस्य सम्बन्धिनः प्राप्यन्त इति॥१०९॥यदि मासपर्यन्ते एतावन्तोऽवम-
रात्रभागाः प्राप्यन्ते ततः प्रतिदिवसं कति प्राप्यन्ते ? इति तन्निरूपणार्थमाह-एकस्मिन्-एकैकस्मिन् दिवसे कर्म्ममाससम्बन्धिन्यवमरा-
त्रसम्बन्धी द्वाषष्टिभाग एकः-एकैकः संजायते, सूत्रे च नपुंसकता प्राकृतत्वात्, कथमेतदवसीयते ? इति चेदुच्यते–त्रैरा-
शिकबलात्, तथाहि-यत एकैकस्मिन् दिवसे एकैको द्वाषष्टिभागोऽवमरात्रस्य सम्बन्धी प्राप्यते, ततो द्वाषष्ट्या दिवसैरेकम-
वमरात्रं भवति, राशित्रयस्य स्थापना ३०।३०।१ अत्रान्त्येन राशिना एकलक्षणेन मध्यमस्य राशेस्त्रिंशद्रूपस्य गुणनम्, एकेन गुणि-
तं तदेव भवतीति जातास्त्रिंशदेव, तस्या आदिराशिना त्रिंशता भागे हृते लब्ध एकः, आगतं प्रतिदिवसमेकैको द्वाषष्टिभागो लभ्यते,

॥ ६४ ॥

किमुक्तं भवति ?–दिवसे दिवसेऽवमरात्रस्यैकैकद्वाषष्टिभागवृद्ध्या द्वाषष्टितमे दिवसे त्रिषष्टितमा तिथिः प्रवर्त्तते इति, एवं च सति य एकषष्टितमोऽहोरात्रस्तस्मिन्नेकषष्टितमा द्वाषष्टितमा च तिथिर्निधनमुपगतेति द्वाषष्टितमा तिथिर्लोके पतितेति व्यवह्रियते, तथा चाह-

एगंमि अहोरत्ते दोवि तिही जत्थ निहणमेज्जासु । सोऽत्थ तिही परिहायइ सुहुमेण हविज्ज सो चरिमो ॥१११॥

एकैकस्मिन्नहोरात्रे तिथिसत्को द्वाषष्टिभागो हानिमुपगच्छन् यस्मिन्नेकषष्टितमेऽहोरात्रे द्वे अप्येकषष्टितमाद्वाषष्टितमारूपे तिथी निधनमायातः सा-द्वाषष्टितमा तिथिरत्र-एकषष्टितमेऽहोरात्रे परिहीयते, एवं च सति सूक्ष्मेण द्वाषष्टितमरूपतयाऽतिश्लक्ष्णेन एकैकेन भागेन परिहीयमानाया द्वाषष्टितमायास्तिथेः स एकषष्टितमो दिवसश्चरमपर्यवसानभूतः, तत्र सा सर्वात्मना निधनमुपगतेति भावः ॥१११॥ सम्प्रति वर्षाहिमग्रीष्मकालेषु चतुर्मासप्रमाणेषु प्रत्येकं कस्मिन् पक्षेऽवमरात्रं भवतीत्येतन्निरूपयति-

तइयंमि ओमरत्तं कायव्वं सत्तमंमि पक्खंमि । वासहिमगिम्हकाले चाउम्मासे विधीयंते ॥ ११२ ॥
पाडिवए ओमरत्ते कइया बिइया समप्पिहिइ तिही । बिइयावाए तइया तइयाए वा चउत्थीओ ॥ ११३ ॥
सेसासु चेव काहिइ तिहीसु ववहारगणियदिट्ठासु । सुहुमेण परिहतिही संजायइ कम्मि पक्खंमि ? ॥ ११४ ॥

इह कालत्रिधा, तद्यथा-वर्षाकालो हिमो-हिमसम्बन्धी, शीतकाल इत्यर्थः, ग्रीष्मकालश्च, एते च त्रयोऽपि चतुर्मासकप्रमाणाः, तत्र वर्षाकालस्य चतुर्मासप्रमाणस्य श्रावणादेस्तृतीये पर्वणि प्रथमोऽवमरात्रः, तस्यैव वर्षाकालस्य सम्बन्धिनि सप्तमे पर्वणि द्वितीयोऽवमरात्रः, तदनन्तरं शीतकालस्य तृतीये पर्वणि मूलापेक्षया एकादशे तृतीयोऽवमरात्रः, तस्यैव शीतकालस्य सप्तमे पर्वणि मूला-

स्पंचदशे चतुर्थः, तदनन्तरं ग्रीष्मकालस्य तृतीये पर्वणि मूलापेक्षयैकोनविंशतितमे पंचमः, तस्यैव ग्रीष्मकालस्य सप्तमे पर्वणि मूलापेक्षया त्रयोविंशतितमे षष्ठः । इहाषाढाद्या लोके ऋतवः प्रसिद्धिमैयरुः, ततो लौकिकव्यवहारमपेक्ष्याषाढादारभ्य प्रतिदिवसमेकैकद्वाषष्टिभागहान्या वर्षाकालादिगतेषु तृतीयादिपर्वसु यथोक्ता अवमरात्राः प्रतिपाद्यन्ते, परमार्थतः पुनः श्रावणबहुलप्रतिपल्लक्षणाद्युगादित आरभ्य चतुर्थचतुष्पर्वातिक्रमे वेदितव्याः, ॥११२॥ अथ युगादितः कतिपर्वातिक्रमे कस्यां तिथावयमरात्रीभूतायां तया सह का तिथिः परिसमाप्तिमुपैति ? इति शिष्यः प्रश्नं करिष्यति- इह प्रतिपद आरभ्य यावत्पंचदशी तावत्यस्तिथयः, तासां च मध्ये प्रतिपद्यवमरात्रीभूतायां सत्यां कस्मिन् 'पर्वणि' पक्षे द्वितीया तिथिः समास्यति ?-प्रतिपदा सहैकस्मिन्नहोरात्रे समाप्तिमुपयास्यति ?, द्वितीयायां वा तिथावयमरात्रीभूतायां कस्मिन् पर्वणि तृतीया समाप्तिमेष्यति, तृतीयायां वा तिथावयमरात्रीसम्पन्नायां कस्मिन् पर्वणि चतुर्थी तृतीयया सह निधनमुपयास्यति ?, एवं शेषास्वपि तिथिषु व्यवहारगणितदृष्टासु-लोकप्रसिद्धव्यवहारगणितपरिभावितासु पंचमीषष्ठीसप्तम्यष्टमीनवमीदशम्येकादशीद्वादशीत्रयोदशीचतुर्दशीपंचदशीरूपासु शिष्यः प्रश्नं करिष्यति, यथा 'सूक्ष्मेण' प्रतिदिवसमेकैकेन द्वाषष्टितमरूपेण श्लक्ष्णेन भागेन परिहीयमानायां तिथौ पूर्वस्याः अवमरात्रीभूतायास्तिथेरानन्तर्येण परा तिथिः कस्मिन् पर्वणि गते संजायते समाप्ता ?, एतदुक्तं भवति-चतुर्थ्यां तिथावयमरात्रीभूतायां कस्मिन् पर्वणि पंचमी समाप्तिमुपयाति, पंचम्यां वा षष्ठी, एवं यावत् पंचदश्यां तिथावयमरात्रीभूतायां कस्मिन् पर्वणि प्रतिपद्रूपा तिथिः समाप्नोति ? इति ॥११३–११४॥ एवं शिष्यस्य प्रश्नमवधार्य निर्वचनमाचार्य आह-

रूवाहिगा उ ओया बिगुणा पव्वा हवंति कायव्वा । एमेव हवइ जुम्मे एक्कतीसाजुया पव्वा ॥ ११५ ॥

इह याः शिष्येण प्रश्नं कुर्वता तिथय उद्दिष्टास्ता द्विविधास्तद्यथा-ओजोरूपा युग्मरूपाश्च, ओजो-विषमं समं-युग्मं, तत्र च या ओजोरूपास्ताः प्रथमतो रूपाधिकाः क्रियन्ते, ततो द्विगुणाः तथा च सति तस्यास्तस्यास्तिथेर्युग्मपर्वाणि निर्वचनरूपाणि समागतानि भवन्ति, 'एमेव हवइ जुम्मे' इति या अपि युग्मरूपास्तिथयस्तास्वपि 'एवमेव' पूर्वोक्तेनैव प्रकारेण करणं प्रवर्त्तनीयं, नवरं द्विगुणीकरणानन्तरमेकत्रिंशद्युताः सत्यः पर्वाणि निर्वचनरूपाणि भवन्ति, इयमत्र भावना-यदाऽयं प्रश्नः-कस्मिन् पर्वणि प्रतिपद्यवमरात्रीभूतायां द्वितीया समाप्यतीति, तदा प्रतिपत् किलोद्दिष्टा, सा च प्रथमा तिथिरित्येको ध्रियते, स रूपाधिकः क्रियते, जाते द्वे रूपे, ते अपि द्विगुणीक्रियेते जाताश्चत्वारः, आगतानि चत्वारि पर्वाणि, ततोऽयमर्थः- युगादितश्चतुर्थे पर्वणि गते प्रतिपद्यवमरात्रीभूतायां द्वितीया समाप्तिमुपयातीति, युक्तं चैतत्, तथाहि-प्रतिपद्युद्दिष्टायां चत्वारि पर्वाणि लब्धानि, पर्व च पंचदशतिथ्यात्मकं, ततः पंचदश चतुर्भिर्गुण्यन्ते, जाता षष्टिः, प्रतिपदि द्वितीया समापततीति द्वे रूपे तत्राधिके प्रक्षिप्ते जाता द्वाषष्टिः, सा च द्वाषष्ट्या भज्यमाना निरंशं भागं प्रयच्छन् लब्ध एक इत्यागतः प्रथमोऽवमरात्र इत्यविसंवादि करणं, यदा तु कस्मिन् पर्वणि द्वितीयायामवमरात्रीभूतायां तृतीया समाप्नोति ? इति प्रश्नस्तदा द्वितीया किल परेणोद्दिष्टेति द्विको ध्रियते, स रूपाधिकः क्रियते, जातानि त्रीणि रूपाणि, तानि द्विगुणीक्रियन्ते, जाताः षट्, द्वितीया तिथिः समेति षट् एकत्रिंशद्युताः क्रियन्ते, जाताः सप्तत्रिंशत्, आगतानि निर्वचनरूपाणि सप्तत्रिंशत्पर्वाणि, इदमुक्तं भवति-युगादितः सप्तत्रिंशत्तमे पर्वणि गते द्वितीयायामवमरात्रीभूतायां तृतीया समाप्नोतीति, इदमपि करणं समीचीनं, तथाहि-द्वितीयायामुद्दिष्टायां सप्तत्रिंशत्पर्वाणि समागतानि, ततः सप्तत्रिंशत् पंचदशभिर्गुण्यन्ते, जातानि पंच शतानि पंचपंचाशदधिकानि ५५५, द्वितीया नष्टा तृतीया जातेति त्रीणि रूपाणि तत्र प्रक्षिप्यन्ते, जातानि पच शतान्य-

ष्टापंचाशदधिकानि ५५८, एषोऽपि राशिर्द्वाषष्ट्या भज्यमानो निरंशं भागं प्रयच्छतीति लब्धा नवेत्यागतो नवमोऽवमरात्र इति समीचीनं करणम्, एवं सर्वास्वपि तिथिषु करणभावना अवमरात्रसंख्या च स्वयं भावनीया, पर्वनिर्देशमात्रं तु क्रियते, तत्र तृतीयायां च चतुर्थी समाप्ता अष्टमे च पर्वणि गते, एवं च चतुर्थ्यां पंचमी एकचत्वारिंशत्तमे पर्वणि, पंचम्यां षष्ठी द्वादशे पर्वणि, षष्ठ्यां सप्तमी पंचचत्वारिंशत्तमे पर्वणि सप्तम्यामष्टमी षोडशे अष्टम्यां नवमी एकोनपंचाशत्तमे नवम्यां दशमी विंशतितमे दशम्यामेकादशी त्रिपंचाशत्तमे एकादश्यां द्वादशी चतुर्विंशतितमे द्वादश्यां त्रयोदशी सप्तपंचाशत्तमे त्रयोदश्यां चतुर्दशी अष्टविंशतितमे चतुर्दश्यां पंचदशी एकषष्टितमे पंचदश्यां प्रतिपद् द्वात्रिंशत्तमे इति, एवमेता युगपूर्वार्द्धे, एवं युगोत्तरार्द्धेऽपि द्रष्टव्याः॥ ११५ ॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायामवमरात्रनामकं पंचमं प्राभृतं समाप्तम् ॥

तदेवमुक्तमवमरात्रनामकं पञ्चमं प्राभृतं, सम्प्रति नक्षत्राणां संस्थानतारापरिमाणनामाधिपतिदेवताचन्द्रयोगयोग्यसीमापरिमाणप्रतिपादकं षष्ठं नक्षत्रपरिमाणनामकं प्राभृतं वक्तुकामः प्रथमतो ज्योतिष्काणां भेदानाह—

चंदा सूरा तारागणा य नक्खत्त गहगणा चेव । पंचविहा जोइसिया ठिया विचारी य ते दुविहा ।' ११६ ॥

ज्योतिष्काः सामान्यतः पञ्चविधा भवन्ति, तद्यथा—चन्द्राः सूर्यास्ताराणां गणाः ' नक्खत्त गहगणा चेव ' त्ति गणशब्दः प्रत्येकमभिसम्बध्यते, नक्षत्रगणा ग्रहगणाश्च, एते च सर्वेऽपि प्रत्येकं द्विविधास्तद्यथा—स्थिता विचारिणश्च, किमुक्तं भवति ?-एके सदा स्थानशीला अपरे मेरोः प्रादक्षिण्येन सततगमनशीलाः, ॥ ११६ ॥ तत्र ये मनुष्यक्षेत्रे ज्योतिष्कास्ते सर्वेऽपि विचारिणोऽपरे स्थानशीलाः इत्येतत् प्रतिपादयितुकामः प्रथमतो मनुष्यक्षेत्रं प्ररूपयति—

जंबुद्दीवो लवणोदही य दीवो य धायईसंडे । कालोदही समुद्दो पुक्खरदीवस्स अद्धं च ॥ ११७ ॥

एए अड्ढाइज्जा दीवा दो उदहि माणुसं खेत्तं । एत्थ य समाविभागा देवारण्णं परं तत्तो ॥ ११८ ॥

एयं माणुसखित्तं एत्थ विचारीणि जोइसगणाणि । परतो दीवसमुद्दे अवट्ठियं जोइसं जाण ॥ ११९ ॥

सर्वद्वीपसमुद्राणामभ्यन्तरवर्त्ती प्रत्यक्षत उपलभ्यमानः प्रथमो जम्बूद्वीपः, ततः सर्वतस्तत्परिक्षेपी लवणोदधिः ततोऽपि परतः सामस्त्येन लवणोदधिपरिक्षेपी धातकीखण्डो द्वीपस्तस्यापि सर्वतः परिक्षेपी कालोदाभिसमुद्रः, ततोऽपि परतः सर्वतस्तत्परिक्षेपी पुष्करवरद्वीपस्यार्द्धं, एते जम्बूद्वीपधातकीखण्डपुष्करवरद्वीपार्द्धरूपा अर्धतृतीया द्वीपा द्वौ च लवणोदधिकालोदधिरूपौ समुद्रौ मानुषक्षेत्रं, मनुष्याणामुत्पत्तेर्मरणस्य च भावात्, अस्मिंश्च मानुषे क्षेत्रे 'समाविभागाः' कालविभागाः सुषमसुषमादयो भवन्ति, 'ततो' मनुष्यक्षेत्रात्परतः सर्वमपि देवारण्यं-देवानां क्रीडनस्थानं, न तत्र जन्मतो मनुष्या नापि तत्र कोऽपि कालविभाग इत्यर्थः ॥ ११७-११८ ॥ एतदेव स्पष्टमाह- 'एय' मित्यादि, एतावत्-अनन्तरोदितस्वरूपं मानुषं क्षेत्रम्, अस्मिंश्च मनुष्यक्षेत्रे 'विचारिणः' विचरणशीलाः 'ज्योतिष्कगणाः' चन्द्रसूर्यग्रहनक्षत्रतारागणाः, सूत्रे च नपुंसकता प्राकृतत्वात्, परतो-मनुष्यक्षेत्रस्य बहिः शेषेषु द्वीपसमुद्रेष्ववस्थितं-स्थानशीलं ज्योतिश्चक्रं जानीहि ॥११९॥ सम्प्रति प्रतिद्वीपं प्रतिसमुद्रं च चन्द्रादीनां परिमाणमाह-

दो चंदा इह दीवे चत्तारि य सागरे लवणतोए । धायइसंडे दीवे बारस चंदा य सूरा य ॥ १२० ॥ ॥ ६९ ॥

'इह' अस्मिन् प्रत्यक्षत उपलभ्यमाने द्वीपे जम्बूद्वीपे द्वौ चन्द्रौ 'अंते बारस चंदा य सूरा य' इति चन्द्रसमानसंख्यानां सूर्या-

ष्टपंचाशदधिकानि ५५८, एषोऽपि राशिर्द्वाषष्ट्या भज्यमानो निरंशं भागं प्रयच्छतीति लब्धा नवेत्यागतो नवमोऽवमरात्र इति समीचीनं करणम्, एवं सर्वास्वपि तिथिषु करणभावना अवमरात्रसंख्या च स्वयं भावनीया, पर्वनिर्देशमात्रं तु क्रियते, तत्र तृतीयायां च चतुर्थी समाप्ता अष्टमे च पर्वणि गते, एवं च चतुर्थ्यां पंचमी एकचत्वारिंशत्तमे पर्वणि, पंचम्यां षष्ठी द्वादशे पर्वणि, षष्ठ्यां सप्तमी पंचचत्वारिंशत्तमे पर्वणि सप्तम्यामष्टमी षोडशे अष्टम्यां नवमी एकोनपंचाशत्तमे नवम्यां दशमी विंशतितमे दशम्यामेकादशी त्रिपंचाशत्तमे एकादश्यां द्वादशी चतुर्विंशतितमे द्वादश्यां त्रयोदशी सप्तपंचाशत्तमे त्रयोदश्यां चतुर्दशी अष्टविंशतितमे चतुर्दश्यां पंचदशी एकषष्टितमे पंचदश्यां प्रतिपद् द्वात्रिंशत्तमे इति, एवमेता युगपूर्वार्द्धे, एवं युगोत्तरार्द्धेऽपि द्रष्टव्याः॥ ११५ ॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायामवमरात्रनामकं पंचमं प्राभृतं समाप्तम् ॥

तदेवमुक्तमवमरात्रनामकं पञ्चमं प्राभृतं, सम्प्रति नक्षत्राणां संस्थानतारापरिमाणनामाधिपतिदेवताचन्द्रयोगयोग्यसीमापरिमाणप्रतिपादकं षष्ठं नक्षत्रपरिमाणनामकं प्राभृतं वक्तुकामः प्रथमतो ज्योतिष्काणां भेदानाह—

चंदा सूरा तारागणा य नक्खत्त गहगणा चेव । पंचविहा जोइसिया ठिया विचारी य ते दुविहा ।' ११६ ॥

ज्योतिष्काः सामान्यतः पञ्चविधा भवन्ति, तद्यथा—चन्द्राः सूर्यास्ताराणां गणाः ' नक्खत्त गहगणा चेव ' त्ति गणशब्दः प्रत्येकमभिसम्बध्यते, नक्षत्रगणा ग्रहगणाश्च, एते च सर्वेऽपि प्रत्येकं द्विविधास्तद्यथा—स्थिता विचारिणश्च, किमुक्तं भवति ?-एके सदा स्थानशीला अपरे मेरोः प्रादक्षिण्येन सततगमनशीलाः, ॥ ११६ ॥ तत्र ये मनुष्यक्षेत्रे ज्योतिष्कास्ते सर्वेऽपि विचारिणोऽपरे स्थानशीलाः इत्येतत् प्रतिपादयितुकामः प्रथमतो मनुष्यक्षेत्रं प्ररूपयति—

॥ ६८ ॥

जंबुद्दीवो लवणोदही य दीवो य धायईसंडे । कालोदही समुद्दो पुक्खरदीवस्स अद्धं च ॥ ११७ ॥
एए अड्ढाइज्जा दीवा दो उदहि माणुसं खेत्तं । एत्थ य समाविभागा देवारण्णं परं तत्तो ॥ ११८ ॥
एवं माणुसखित्तं एत्थ विचारीणि जोइसगणाणि । परतो दीवसमुद्दे अवट्ठियं जोइसं जाण ॥ ११९ ॥

सर्वद्वीपसमुद्राणामभ्यन्तरवर्ती प्रत्यक्षत उपलभ्यमानः प्रथमो जम्बूद्वीपः, ततः सर्वतस्तत्परिक्षेपी लवणोदधिः ततोऽपि परतः सामस्त्येन लवणोदधिपरिक्षेपी धातकीखण्डो द्वीपस्तस्यापि सर्वतः परिक्षेपी कालोदगिसमुद्रः, ततोऽपि परतः सर्वतस्तत्परिक्षेपी पुष्करवरद्वीपस्यार्द्धं, एते जम्बूद्वीपधातकीखण्डपुष्करवरद्वीपार्द्धरूपा अर्धतृतीया द्वीपा द्वौ च लवणोदधिकालोदधिरूपौ समुद्रौ मानुषक्षेत्रं, मनुष्याणामुत्पत्तेर्मरणस्य च भावात्, अस्मिंश्च मानुषे क्षेत्रे 'समाविभागाः' कालविभागाः सुषमसुषमादयो भवन्ति, 'ततो' मनुष्यक्षेत्रात्परतः सर्वमपि देवारण्यं-देवानां क्रीडनस्थानं, न तत्र जन्मतो मनुष्या नापि तत्र कोऽपि कालविभाग इत्यर्थः ॥ ११७-११८ ॥ एतदेव स्पष्टमाह- 'एव' मित्यादि, एतावत्-अनन्तरोदितस्वरूपं मानुषं क्षेत्रम्, अस्मिंश्च मनुष्यक्षेत्रे 'विचारिणः' विचरणशीलाः 'ज्योतिष्कगणाः' चन्द्रसूर्यग्रहनक्षत्रतारागणाः, सूत्रे च नपुंसकता प्राकृतत्वात्, परतो-मनुष्यक्षेत्रस्य बहिः शेषेषु द्वीपसमुद्रेष्ववस्थितं-स्थानशीलं ज्योतिष्कं जानीहि ॥११९॥ सम्प्रति प्रतिद्वीपं प्रतिसमुद्रं च चन्द्रादीनां परिमाणमाह-

दो चंदा इह दीवे चत्तारि य सागरे लवणतोए । धायइसंडे दीवे बारस चंदा य सूरा य ॥ १२० ॥

'इह' अस्मिन् प्रत्यक्षत उपलभ्यमाने द्वीपे जम्बूद्वीपे द्वौ चन्द्रौ 'अंते बारस चंदा य सूरा य' इति चन्द्रसमानसंख्यानां सूर्या-

णामभिधानात् सर्वत्राप्यनुक्ता अपि चन्द्रतुल्याः सूर्याः प्रतिपत्तव्याः, ततो न केवलमस्मिन् जम्बूद्वीपे चन्द्रौ द्वौ, किन्तु सूर्यावपि द्वौ च, तथा चत्वारश्चन्द्रमसश्चत्वारः सूर्याश्च 'सागरे' समुद्रे 'लवणतोये' लवणोदे, धातकीखण्डे द्वीपे द्वादश चन्द्रा द्वादश सूर्याश्च ॥ १२० ॥ अधुना कालोदसमुद्रादिषु चन्द्रादित्यप्रमाणानयनाय करणमाह—

धायइसंडप्पभिइ उद्दिट्ठा तिगुणिया भवे चंदा । आइल्लचंदसहिया तइ होंति अणंतरे परतो ॥१२१॥
आइच्चाणंपि भवे एसेव विही अणूणगो सव्वो । दीवेसु समुद्देसु य धायइसंडेहिं जे परतो ॥१२२॥

धातकीखण्डप्रभृतयः-तेषु धातकीखण्डप्रभृतिषु द्वीपसमुद्रेषु ये उद्दिष्टाश्चन्द्रास्ते त्रिगुणाः-त्रिगुणीकृताः सन्तः 'आइल्लचंदसाहिय'त्ति जम्बूद्वीपमादिं कृत्वा ये उद्दिष्टेभ्यः प्राक्तनाश्चन्द्रास्तैः सहिता यति भवन्ति तति-तावत्प्रमाणास्तस्माद् द्वीपात्समुद्राद्वा परतोऽनन्तरे द्वीपे समुद्रे वा भवन्ति, तत्र धातकीखण्डे द्वीपे उद्दिष्टाश्चन्द्रा द्वादश ते त्रिगुणाः क्रियन्ते जाताः षट्त्रिंशत्, आदिमाश्चन्द्राः षट्, तद्यथा-द्वौ जम्बूद्वीपे चत्वारो लवणसमुद्रे, एतैरादिमचन्द्रैः सहिता जाता द्विचत्वारिंशत्, एतावन्तः कालोदसमुद्रे चन्द्राः, तथा कालोदसमुद्रे द्विचत्वारिंशच्चन्द्रमस उद्दिष्टास्ते त्रिगुणाः क्रियन्ते, जातं षड्विंशं शतं, आदिमचन्द्रा अष्टादश, तद्यथा-द्वौ जम्बूद्वीपे चत्वारो लवणसमुद्रे द्वादश धातकीखण्डे, एतैरादिमचन्द्रैः षड्विंशं शतं जातं चतुश्चत्वारिंशं शतं, तथा चोक्तं जीवाभिगमादौ-'पुक्खरवरे णं भंते! दीवे केवइया चंदा पभासिंसु वा पभासंति वा पभासिस्संति वा?, गोयमा! चोयालं चंदसयं पभासिंसु वा पभासंति वा पभासिस्संति वा, चोयालं सूरियाण सयं तविंसु वा तविंति वा तविस्संति वा, चत्तारि सहस्साइं बत्तीसं च नक्खत्ता जोगं जोइंसु वा जोइंति वा जोइस्संति

शशि- परिवारः अन्यत्र तत्करणं

ना, बारस सहस्साइं छच्च बावत्तरा महग्गहसया चारं चरिंसु वा चरंति वा चरिस्संति वा, छन्नउइं सयसहस्साइं चत्तालीसं सहस्साइं चत्तारि
य सयाइं नाव तारागणकोडिकोडीणं सोभिंसु वा सोभंति वा सोभिस्संति वा" इति, एवं शेषेष्वपि द्वीपसमुद्रेष्वेतत्करणवशाच्चन्द्रसंख्या
प्रतिपत्तव्या ॥ १२१ ॥ धातकीखण्डात्परतो ये द्वीपाः समुद्रा वा तेषु द्वीपेषु समुद्रेषु चैष एव-अनन्तरोदितचन्द्रसंख्यानयनवि-
धयो विधिरन्यूनः सर्वः-समस्त आदित्यानामपि भवति, ततो यत्र द्वीपे समुद्रे वा यावन्तः प्रागुक्तकरणवशाच्चन्द्रमस उपलब्धास्ता-
वन्तस्तत्र सूर्या अप्यन्यूनातिरिक्तास्तत्करणवशादवसेयाः ॥ १२२ ॥ सम्प्रति यावन्ति नक्षत्राणि यावन्तश्च महाग्रहा यावांश्च तारा-
गण एकस्य शशिनः परिवारस्तदेतत् प्रतिपादयति-

नक्खत्तट्ठावीसं अट्ठासीई महग्गहा भणिया । एगससीपरिवारो एत्तो तारावि मे सुणसु ॥ १२३ ॥
छावट्ठि च सहस्सा नव य सया पंचसत्तरा होंति । एगससीपरिवारो तारागणकोडिकोडीणं ॥ १२४ ॥

एकस्य शशिनः परिवारो नक्षत्राण्यभिजित्प्रभृतीन्यष्टाविंशतिः-अष्टाविंशतिसंख्यानि, अष्टाशीतिः-अष्टाशीतिसंख्या महाग्रहा-
मंगलादयो भणितास्तीर्थकरगणधरैः, अत ऊर्ध्वं तारा अप्येकस्य शशिनः परिवारभूता यावत्यस्तीर्थकरगणधरैः प्रतिपादितास्तावत्यो
मे प्रतिपादयतः शृणुत ॥ १२३ ॥ एकस्य शशिनस्तारापरिवारः तारागणकोटिकोटीनां षट्षष्टिः सहस्राणि नव शतानि पंचसप्तत्य-
धिकानि ६६९७५०००००००० ॥ १२४ ॥ तदेवमुक्तः एकस्य शशिनो नक्षत्रादिकः परिवारः, सम्प्रत्येतन्मूलं द्वीपेषु समुद्रेषु
नक्षत्रादिपरिमाणानयनाय करणमाह—

॥ ७१ ॥

जइ चंदा तइगुणिओ खेत्ते खेत्तम्मि एस परिवारो। चंदेसु समा सूरा नायव्वा सव्वखेत्तेसु ॥ १२५ ॥

'एषः' अन्तरोदितो नक्षत्रादिक एकस्य शशिनः परिवारः क्षेत्रे २-द्वीपे समुद्रे वा यति-यावत्परिमाणाश्चन्द्राः ततिभिः- तावत्प्रमाणैश्चन्द्रैर्गुणितः सन् यावद्भवति तावत्प्रमाणानि नक्षत्रादीनि तस्मिन् तस्मिन् क्षेत्रे-द्वीपे समुद्रे वा ज्ञातव्यानि, तत्र जम्बूद्वीपे किल नक्षत्रादिपरिमाणं ज्ञातुमिष्टं, जम्बूद्वीपे च द्वौ शशिनौ, तत एकशशिनः परिवारभूतानि यानि अष्टाविंशतिः नक्षत्राणि तानि द्वाभ्यां गुणितानि, जातं षट्पंचाशत् ५६, तथाऽष्टाशीतिर्ग्रहा एकस्य शशिनः परिवारस्ते द्वाभ्यां गुणिता जातं षट्सप्तत्यधिकशतम् १७६, एतावन्तो जम्बूद्वीपे ग्रहाः, तथैकस्य शशिनः परिवारभूतानि तारागणकोटिकोटीनां षट्षष्टिः सहस्राणि नव शतानि पंचसप्तत्यधिकानि, तानि द्वाभ्यां गुण्यन्ते, जातं तारागणकोटिकोटीनामेकं शतसहस्रं त्रयस्त्रिंशत्सहस्राणि नव शतानि पंचाशदधिकानि १३३९-५०००००००, एतावत्यस्तारा जम्बूद्वीपे, तथा चोक्तं-"दो चंदा दो सूरा नक्खत्ता खलु हवंति छप्पन्ना। छावत्तरं गहसयं जंबुद्दीवे वियारीणं ॥ १ ॥ एगं च सयसहस्सं तेत्तीसं खलु भवे सहस्साइं। नव य सया पन्नासा तारागणकोडिकोडीणं ॥ २ ॥" तथा लवणसमुद्रे चत्वारः शशिनस्तत एकस्य शशिनः परिवारभूतानि यान्यष्टाविंशतिनक्षत्राणि तानि चतुर्भिर्गुण्यन्ते, जातं द्वादशोत्तरं शतं, एतावन्ति लवणसमुद्रे नक्षत्राणि, तथाऽष्टाशीतिर्ग्रहा एकस्य शशिनः परिवारस्ते चतुर्भिर्गुण्यन्ते, जातानि त्रीणि शतानि द्विपंचाशदधिकानि ३५२, एतावन्तो लवणसमुद्रे ग्रहाः, तथैकस्य शशिनः परिवारभूतानि यानि तारागणकोटिकोटीनां षट्षष्टिः सहस्राणि नव शतानि पंचसप्तत्यधिकानि तानि चतुर्भिर्गुण्यन्ते, जाते कोटिकोटीनां द्वे लक्षे सप्तषष्टिः सहस्राणि नव शतानि २६७९००००००-००००, उक्तं च-"चत्तारि चेव चंदा चत्तारि य सूरिया लवणतोए। बारं नक्खत्तसयं गहाण तिण्णेव बावण्णा ॥१॥ दो चेव सय-

महस्सा सयद्वी खलु भवे महस्सा य । नव य सया लवणजले तारागणकोडिकोडीणं ॥२॥" एवं सर्वेष्वपि द्वीपसमुद्रेषु परिभावनीयं, सूर्याः पुनः सर्वेष्वपि क्षेत्रेषु द्वीपसमुद्ररूपेषु चन्द्रैः 'समाः' समसङ्ख्या ज्ञातव्याः, किमुक्तं भवति?-यावन्तो यत्र द्वीपे समुद्रे वा चन्द्रास्तावन्तस्तत्र सूर्या अप्यन्यूनातिरिक्ता वेदितव्याः, 'आइच्चाणंपि भवे एसेव विही अणूणगो सव्वो' इति प्रागुक्तवचनप्रामाण्यात्, 'चंदेसु' इत्यत्र सप्तमी 'व्यत्ययोऽप्यासा' मिति वचनात् तृतीयार्थे द्रष्टव्या, यथा 'तिसु तेसु अलंकिया पुहवी' इत्यत्र॥१२५॥ सम्प्रति नक्षत्राणां संस्थानादिकं वक्तुकामस्तदुपक्षेपमाह

तेसिं नक्खत्ताणं संठाणमहक्कमेण वोच्छामि । माणं च तारगाण य जह दिट्ठं सव्वदंसीहिं ॥ १२६ ॥ गोसीसावलि १ काहार २ सउणि ३ पुप्फोवयार ४ वावी ५-६ य । नावा ७ आसक्खंधे ८ भग ९ छुरधारा १० य सगडुद्धी ११ ॥१२७॥ मिगसीसावलि १२ रुहिरबिंदु १३ तुल १४ वद्धमाणग १५ पडागा १६ । पागारे १७ पलियंके १८-१९ हत्थे २० मुहपुप्फए २१ चेव ॥ १२८ ॥ कीलग २२ दामणि २३ एगावली २४ य गयदंत २५ विच्छुयअली य २६ । गयविक्कमे २७ य तत्तो सीहनिसाई २८ य संठाणा ॥ १२९ ॥ तिग १ तिग २ पंचे ३ गसयं ४ दुग ५ दुग ६ बत्तीस ७ तिगं ८ तह तिगं ९ च । छ १० प्पंचग ११ तिग १२ एक्कग १३ पंचग १४ तिग १५ छक्कगं १६ चेव ॥ १३० ॥ सत्तग १७ दुग १८ दुग १९ पंचग २० एक्के २१ क्कग २२ पंच २३ चउ २४ तिगं २५ चेव । एक्कारसग २६ चउक्कं २७ चउ-

नक्षत्राणामाकाराः तारकमानं च

छक्कं २८ चेव तारग्गं ॥ १३१ ॥ एयं नक्खत्ताणं संठाणा तारगाण य पमाणं । भणियं एत्तो वोच्छं नामाणि य देवयाओ य ॥ १३२ ॥

तेषां नक्षत्राणां अनन्तरोद्दिष्टानां यथाक्रममेव-प्रागुद्देशक्रमेणैव संस्थानं वक्ष्यामि, तथा 'मानं' प्रमाणं नक्षत्रेषु तारकाणां वक्ष्ये, कथं वक्ष्ये? इत्याह-यथा दृष्टं सर्वदर्शिभिः-तीर्थकरैः ॥१२६॥ तत्र 'यथोद्देशं निर्देश' इति प्रथमतः संस्थानं विवक्षुर्जम्बूद्वीपप्रज्ञप्तिसत्कं गाथात्रयं पठति-इह नक्षत्राण्यभिजिदादीनि ततस्तमादिं कृत्वा संस्थाननिर्देशक्रमो वेदितव्यः, तद्यथा-अभिजिन्नक्षत्रं गोशीर्षसंस्थानसंस्थितं,श्रवणनक्षत्रं कासारसंस्थानसंस्थितं,धनिष्ठानक्षत्रं शकुनिपञ्जरसंस्थानं,शतभिषग्नक्षत्रं पुष्पोपचारसंस्थानं, पूर्वभाद्रपदानक्षत्रमर्द्धवापीसंस्थानं, रेवतीनक्षत्रं नौसंस्थानम्, अश्विनीनक्षत्रमश्वस्कन्धसंस्थानं, भरणीनक्षत्रं भगसंस्थानं, कृत्तिकानक्षत्रं क्षुरधारसंस्थानं, रोहिणीनक्षत्रं शकटोद्धिसंस्थानं, मृगशिरोनक्षत्रं मृगशीर्षसंस्थानम्, आर्द्रानक्षत्रं रुधिरबिन्दुसंस्थानं, पुनर्वसुनक्षत्रं तुलासंस्थानं, पुष्यनक्षत्रं सुप्रतिष्ठितवर्द्धमानकसंस्थानं, अश्लेषानक्षत्रं पताकासंस्थानं, मघानक्षत्रं प्राकारसंस्थानं,पूर्वफाल्गुनीनक्षत्रमर्द्धपल्यङ्कसंस्थानं, उत्तराफाल्गुनीनक्षत्रमर्द्धपल्यङ्कसंस्थानं, हस्तनक्षत्रं हस्तसंस्थानं, चित्रानक्षत्रं मुखमण्डनसुवर्णपुष्पसंस्थानं, स्वातिनक्षत्रं कीलकसंस्थानं, विशाखानक्षत्रं दामनीसंस्थानं, अनुराधानक्षत्रमेकावलिसंस्थानं, ज्येष्ठानक्षत्रं गजदन्तसंस्थानं, मूलनक्षत्रं वृश्चिकलांगुलसंस्थानं, पूर्वाषाढानक्षत्रं गजविक्रमसंस्थानम्, उत्तराषाढानक्षत्रं सिंहनिषीदनसंस्थानम्॥१२७-१२९॥ सम्प्रति ताराप्रमाणं प्रतिनक्षत्रं विवक्षुर्जम्बूद्वीपप्रज्ञप्तिसत्कं गाथाद्वयं पठति-'तिगे' त्यादि, अभिजिन्नक्षत्रं त्रितारं श्रवणनक्षत्रं त्रितारं धनिष्ठानक्षत्रं

पञ्चतारं शतभिषग्नक्षत्रं शततारं पूर्वभद्रपदानक्षत्रं द्वितारं उत्तरभद्रपदानक्षत्रं द्वितारं रेवतीनक्षत्रं द्वात्रिंशत्तारं अश्विनीनक्षत्रं त्रितारं भरणीनक्षत्रं त्रितारं कृत्तिकानक्षत्रं षट्तारं रोहिणीनक्षत्रं पञ्चतारं मृगशिरोनक्षत्रं त्रितारम् आर्द्रानक्षत्रमेकतारं पुनर्वसुनक्षत्रं पञ्चतारं पुष्यनक्षत्रं त्रितारं अश्लेषानक्षत्रं षट्तारं मघानक्षत्रं सप्ततारं. पूर्वफाल्गुनीनक्षत्रं द्वितारं उत्तरफाल्गुनीनक्षत्रं द्वितारं हस्तनक्षत्रं पञ्चतारं चित्रानक्षत्रमेकतारं स्वातिनक्षत्रमेकतारं विशाखानक्षत्रं पञ्चतारम् अनुराधानक्षत्रं चतुस्तारं ज्येष्ठानक्षत्रं त्रितारं मूलनक्षत्रमेकादशतारं पूर्वाषाढानक्षत्रं चतुस्तारं उत्तराषाढानक्षत्रं चतुस्तारं इदं नक्षत्राणां यथाक्रमं तारापरिमाणं, ॥१३०-१३१॥ सम्प्रति प्रस्तुतवक्तव्यतोपसंहारं वक्ष्यमाणवक्तव्यतोपक्षेपं च कुर्वन्नाह-'एवम्' उक्तेन प्रकारेण नक्षत्राणाम्-अभिजिदादीनां संस्थानानि तारकाणां च प्रमाणं भणितमत ऊर्ध्वं तेषामेव नक्षत्राणां यथाक्रमं नामानि देवताश्च वक्ष्यामि ॥ १३२ ॥ तत्र प्रथमतो नामान्याह

अभिई सवण धणिट्ठा सयभिसया दो य होंति भद्दवया । रेवइ अस्सिणि भरणी य कत्तिया रोहिणी चेव ॥१३३॥
मिगसिर अद्दा य पुणव्वसू य पूसो य तहऽसिलेसा य । मघ पुव्वफग्गुणी उत्तरा य हत्थो य चित्ता य ॥१३४॥
साइ विसाहा अणुराह चेव जेट्ठा तहेव मूलो य । पुव्वुत्तरा असाढा य जाण नक्खत्तनामाणि ॥ १३५ ॥

इदं गाथात्रयमपि प्रकटार्थम् ॥ १३३-१३५ ॥ सम्प्रति देवतानां नामानि विवक्षुराह-

बम्हा विण्हू य वसू वरुणो तह ऽजो अणंतरो होइ । अभिवुड्ढि पूस गंधव्वमेव परतो जमो होइ ॥ १३६ ॥
अग्गि पयावइ सोमे रुद्दे अदिई विहस्सई चेव । नागे पिइ भग अज्जम सविया तट्ठा य वाऊ य ॥ १३७ ॥

इंदग्गी मित्तोऽविय इंदे निरई य वा(आ)उ विस्सा य। नामाणि य देवाणं एत्तो सीमंपि मे सुणसु ॥ १३८ ॥
एगं च सयसहस्सं अट्ठाणउई सया य पडिपुण्णा। एसो मंडलछेओ सीमाणं होइ नायव्वो ॥ १३९ ॥

अभिजिदादीनां नक्षत्राणामधिपतयो-देवता यास्तासां यथाक्रममभूनि नामानि, तद्यथा-अभिजिन्नक्षत्रस्याधिपतिर्देवता ब्रह्मा श्रवणस्य विष्णुर्धनिष्ठाया वसुः शतभिषजो वरुणः पूर्वभद्रपदानक्षत्रस्याज उत्तरभद्रपदानक्षत्रस्याभिवृद्धिः रेवतीनक्षत्रस्य पूषा अश्विनीनक्षत्रस्य 'गन्धर्वः' गन्धर्वो नामाश्वः भरणीनक्षत्रस्य यमः कृत्तिकानक्षस्याग्निः रोहिणीनक्षत्रस्य प्रजापतिः मृगशिरोनक्षत्रस्य सोमः आर्द्रानक्षत्रस्य रुद्रः-भवः पुनर्वसुनक्षत्रस्यादितिः पुष्यनक्षत्रस्य बृहस्पतिः अश्लेपानक्षत्रस्य सर्पः मघानक्षत्रस्य पितृनामकः पूर्वफाल्गुनीनक्षत्रस्य भगनामकः उत्तराफाल्गुनीनक्षत्रस्यार्यमा हस्तनक्षत्रस्य सविता चित्रानक्षत्रस्य त्वष्टा स्वातिनक्षत्रस्य वायुः विशाखानक्षत्रस्य इन्द्राग्निः अनुराधानक्षत्रस्य मित्रः ज्येष्ठानक्षत्रस्येन्द्रः मूलनक्षत्रस्य नैर्ऋतः पूर्वाषाढानक्षत्रस्य वायुः उत्तराषाढानक्षत्रस्य विश्वरू, न चैतदनार्षं, यत उक्तं सूर्यप्रज्ञप्तौ- 'ता एएसि णं अट्ठावीसाए नक्खत्ताणं अभिई नक्खत्ते किंदेवयाए पण्णत्ते?, ता बम्हदेवयाए पन्नत्ते। सवणनक्खत्ते किंदेवयाए पन्नत्ते?, ता विण्हुदेवयाए पन्नत्ते, धणिट्ठानक्खत्ते किंदेवयाए पन्नत्ते?, ता वसुदेवयाए पन्नत्ते, सयभिसाए नक्खत्ते किंदेवयाए पन्नत्ते?, ता वरुणदेवयाए पन्नत्ते, पुव्वपोट्ठवयानक्खत्ते किंदेवयाए पन्नत्ते?, ता अजदेवयाए पन्नत्ते, उत्तरापोट्ठवयानक्खत्ते किंदेवयाए पन्नत्ते?, ता अभिवड्ढिदेवयाए पन्नत्ते, एवं सव्वेविय पुच्छिज्जंति, रेवई पुस्सदेवयाए अस्सिणी अस्सदेवयाए भरणी जमदेवयाए कत्तिया अग्गिदेवयाए रोहिणी पयावइदेवयाए मिगसिरे सोमदेवयाए अद्दा रुद्ददेवयाए पुणव्वसू अदि-

इंदेवयाए पुस्सो विहस्सइदेवयाए अस्सेसा सप्पदेवयाए पुव्वफागुणी भगदेवयाए उत्तराफग्गुणी अय्यमदेवयाए हत्थे सवियादेवयाए चित्ता तट्ठदेवयाए साई वाउदेवयाए विसाहा इंदग्गिदेवयाए अणुराहा मित्तदेवयाए जेट्ठा इंददेवयाए मूले नेरइदेवयाए पुव्वासाढा आउदेवयाए उत्तरासाढानक्खत्ते विस्सदेवयाए पन्नत्ते" इति ॥ १३६-१३८ ॥ तदेवमुक्तानि नक्षत्राधिपतिदेवानां नामानि, सम्प्रति सीमानं विवक्षुराह—

इत ऊर्ध्वं नक्षत्राणां मण्डलेषु योगमधिकृत्य सीमानमपि यथागमं मे प्रतिपादयतः शृणुत॥ तमेवाह-सीमानां योगमधिकृत्य वक्ष्यमाणस्वरूपाणां परिज्ञानार्थमेकमण्डलस्येहाष्टाविंशत्या नक्षत्रैः स्वभावगत्या स्वस्वकालपरिमाणेन क्रमशो यावत्क्षेत्रं बुद्ध्या व्याप्यमानं संभाव्यते तावदेकमर्द्धमण्डलमुपकल्प्यते, एतावत्प्रमाणमेव च द्वितीयमर्द्धमण्डलमित्येवंप्रमाणं बुद्धिपरिकल्पितमेकं मण्डलं छेदो ज्ञातव्यः, एकं शतसहस्रं परिपूर्णानि चाष्टानवतिः शतानि, कथमेतस्योत्पत्तिः ? इति चेदुच्यते-इह त्रिविधानि नक्षत्राणि, तद्यथा-समक्षेत्राणि अर्द्धक्षेत्राणि द्व्यर्द्धक्षेत्राणि च, इह यावत्प्रमाणं क्षेत्रमहोरात्रेण गम्यते सूर्येण तावत्प्रमाणं चन्द्रेण सह योगं यानि गच्छंति तानि समक्षेत्राणि, समं-अहोरात्रप्रमितं क्षेत्रं येषां तानि समक्षेत्राणीतिव्युत्पत्तेः, तानि च पंचदश, तद्यथा-श्रवणं धनिष्ठा पूर्वभाद्रपदा रेवती अश्विनी ५ कृत्तिका मृगशिरः पुष्यो मघा पूर्वाफाल्गुनी १० हस्तश्चित्रा अनुराधा मूलः पूर्वाषाढा १५ इति, तथा यान्यर्द्धमहोरात्रप्रमितस्य क्षेत्रस्य चन्द्रेण सह योगमश्नुवते तान्यर्द्धक्षेत्राणि, अर्द्धं-अर्द्धप्रमाणं क्षेत्रं येषां तान्यर्द्धक्षेत्राणीति व्युत्पत्तिभावात्, तानि च षट्, तद्यथा-शतभिषक् भरणी आर्द्रा अश्लेषा स्वातिर्ज्येष्ठेति, तथा द्वितीयमर्धं यस्य तत् द्व्यर्धं सार्धमित्यर्थः, द्व्यर्धं-अर्धेन अधिकं क्षेत्रं अहोरात्रप्रमितं चन्द्रयोग्यं येषां तानि द्व्यर्धक्षेत्राणि, तान्यपि षट्, तद्यथा-उत्तरभद्रपदा उत्तरफाल्गुनी उत्तराषाढा

रोहिणी पुनर्वसु विशाखा चेति, तत्रेह सीमापरिमाणचिन्तायामहोरात्रः सप्तषष्टिभागीकृतः परिकल्प्यते इति समक्षेत्राणां प्रत्येकं सप्तषष्टिभागाः परिकल्प्यन्ते, अर्द्धक्षेत्राणां त्रयस्त्रिंशत् अर्द्धं च, द्व्यर्द्धक्षेत्राणामेकं च शतमर्द्धं, च अभिजिन्नक्षत्रस्यैकविंशतिः सप्तषष्टिभागाः, समक्षेत्राणि नक्षत्राणि पंचदशेति सप्तषष्टिः पंचदशभिर्गुण्यते, जातं सहस्रं पंचोत्तरं १००५, अर्द्धक्षेत्राणि षडिति सार्द्धा त्रयस्त्रिंशत् षड्भिर्गुण्यन्ते, जाते द्वे शते एकोत्तरे २०१, द्व्यर्द्धक्षेत्राण्यपि षट्, ततः शतमेकमर्द्धं च षड्भिर्गुणितं, जातानि शतानि षट् त्र्युत्तराणि ६०३, अभिजिन्नक्षत्रस्यैकविंशतिः, सर्वसंख्यया जातान्यष्टादश शतानि त्रिंशदधिकानि १८३०, एतावद्भागपरिमाणमेकमर्द्धमण्डलं, एतावदेव द्वितीयमपीति त्रिंशदधिकान्यष्टादश शतानि द्वाभ्यां गुण्यन्ते, जातानि षट्त्रिंशच्छतानि षष्ट्यधिकानि ३६६०, एकैकस्मिन्नहोरात्रे किल त्रिंशन्मुहूर्त्ता इति प्रत्येकमेतेषु षष्ट्यधिकषट्त्रिंशच्छतसंख्येषु भागेषु त्रिंशद्भागकल्पनायां त्रिंशता गुणने जातमेकं शतसहस्रमष्टानवतिः शतानि १०९८०० ॥ १३८-१३९ ॥ तदेवं मण्डलच्छेदपरिमाणमभिधाय सम्प्रति नक्षत्रसीमापरिमाणमाह-



छच्चेव सया तीसा भागाणं अभिइसीमविक्खंभे । दिट्ठो सव्वडहरगो सव्वेहिं अणंतनाणीहिं ॥ १४० ॥
सयभिसया भरणीए अद्दा अस्सेस साइ जेट्ठाए । पंचुत्तरं सहस्सं भागाणं सीमविक्खंभो ॥ १४१ ॥
एवं चेव य तिगुणं पुणव्वसूरोहिणीविसाहाणं । तिण्हं च उत्तराणं अवसेसाणं भवे दुगुणं ॥ १४२ ॥
विक्खम्भसीम भणिया नक्खत्ताणं च अपरिसेसाणं ।

सर्वैरप्यनन्तज्ञानीभिः-उत्पन्नकेवलज्ञानैस्तीर्थकरैरभिजिन्नक्षत्रस्य दृष्टः सीमाविष्कम्भश्चन्द्रयोगयोग्य इत्यर्थः, पूर्वापरसीमापरिच्छिन्नं क्षेत्रपरिमाणमष्टानवतिशताधिकशतसहस्रसंख्यानां भागानां षट् शतानि त्रिंशदधिकानि ६३०, कथमेतदवसीयते? इति चेदुच्यते इहाभिजितः सप्तषष्टिखण्डीकृतस्याहोरात्रगम्यस्य क्षेत्रस्य सत्का एकविंशतिर्भागाश्चन्द्रयोगयोग्याः, एकैकस्मिंश्च भागे त्रिंशद्भागपरिकल्पनादेकविंशतिस्त्रिंशता गुण्यते, जातानि षट् शतानि त्रिंशदधिकानि, एष चाभिजिन्नक्षत्रस्य सीमाविकम्भः सर्वडहरकः- शेषनक्षत्रापेक्षया सर्वलघुः॥ १४०॥ शतभिषजो भरण्या आर्द्राया अश्लेषायाः स्वातेर्ज्येष्ठायाश्च सर्वसंख्यया षण्णां नक्षत्राणां प्रत्येकं सीमाविष्कम्भश्चन्द्रयोगयोग्यं पूर्वापरसीमापरिच्छिन्नं क्षेत्रपरिमाणमष्टानवतिशताधिकशतसहस्रभागानां सम्बन्धि पंचोत्तरं सहस्रं १००५, तथाहि-एतेषां प्रत्येकं सप्तषष्टिखण्डीकृतस्याहोरात्रगम्यस्य क्षेत्रस्य सत्काः सार्द्धास्त्रयस्त्रिंशद्भागाश्चन्द्रयोगयोग्याः, ततः त्रयस्त्रिंशत् त्रिंशता गुण्यते जातानि नव शतानि नवत्यधिकानि ९९०, अर्द्धस्यापि त्रिंशता गुणयित्वा द्वाभ्यां भागे हृते लब्धाः पंचदश, सर्वसंख्यया जातं पंचोत्तरं सहस्रम् १००५॥ १४१॥ पुनर्वसुरोहिणीविशाखानां तिसृणां चोत्तराणां-उत्तराषाढोत्तरभद्रपदोत्तरफाल्गुनीनां सर्वसंख्यया षण्णां नक्षत्राणां प्रत्येकमेतदेवानन्तरोक्तं भागपरिमाणं पंचोत्तरसहस्ररूपं त्रिगुणं वेदितव्यं, त्रीणि सहस्राणि पंचदशोत्तराणि भागानां सीमापरिमाणमवसेयमित्यर्थः, तथाहि-एतानि नक्षत्राणि द्व्यर्द्धक्षेत्राणि, ततः सप्तषष्टिखण्डीकृतस्याहोरात्रगम्यस्य क्षेत्रस्य सत्का भागाश्चन्द्रयोगयोग्याः शतमेकमर्द्धं च प्रत्येकमवगन्तव्यं, तत्र शतं त्रिंशता गुण्यते, जातानि त्रीणि सहस्राणि, अर्द्धमपि त्रिंशता गुणयित्वा द्वाभ्यां विभज्यते लब्धाः पंचदशेति, अवशेषाणां श्रवणधनिष्ठाप्रभृतीनां पंचदशनक्षत्राणां तदेव पूर्वोक्तं पंचोत्तरसहस्रपरिमाणं द्विगुणं सद् भवति सीमापरिमाणं, द्वे सहस्रे दशोत्तरे भागानां प्रत्येकं तेषां सीमापरिमाणमित्यर्थः, तानि हि समक्षेत्राणि, ततस्तेषां सप्तषष्टिखण्डीकृत-

स्याहोरात्रस्य क्षेत्रस्य सत्काः परिपूर्णा अपि सप्तषष्टिभागाः प्रत्येकमाविर्भवन्ति, ततः सप्तषष्टिस्त्रिंशता गुण्यते जाते द्वे सहस्रे दशोत्तरे इति ॥ १४२ ॥ सम्प्रत्युपसंहारमाह-'विक्खंभे' त्यादि 'अपरिशेषाणामपि' समस्तानामपि, चशब्दोऽपिशब्दार्थः, स च भिन्नक्रमोऽत्र एवं योजितः, नक्षत्राणां विष्कम्भसीमा-चन्द्रयोगयोग्यसीमा पूर्वापरपरिच्छिन्नभागपरिमाणरूपा भणिता, सूत्रे च नपुंसकता प्राकृतत्वात् ॥

इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां नक्षत्रपरिमाणं नाम षष्ठं प्राभृतं समाप्तम् ॥ ६ ॥

तदेवमुक्तं नक्षत्रपरिमाणनामकं षष्ठं प्राभृतं, सम्प्रति चन्द्रसूर्यमण्डलविष्कम्भप्रतिपादकं चन्द्रसूर्यपरिमाणनामकं सप्तमं प्राभृतं विवक्षुराह-

एत्तो परं तु वोच्छं विक्खंभं चंदसूराणं ॥ १४३ ॥

एगट्ठिभागे छेत्तूण जोयणं तस्स होंति जे भागा । ते चंदा छप्पन्नं अडयालीसं भवे सूरा ॥ १४४ ॥

अतः-सीमापरिमाणप्रतिपादनात् परम्-ऊर्ध्वं चंद्रसूर्याणां चन्द्रसूर्यमण्डलानां विष्कम्भं वक्ष्ये ॥१४३॥ तमेवाह-एकषष्ट्या योजनं प्रमाणांगुलनिष्पन्नं छित्त्वा तस्य भवन्ति ये भागा एकषष्टिसंख्यास्ते च चंद्राः-चन्द्रमण्डलं षट्पंचाशद् भवन्ति, सूर्याः-सूर्यमण्डलं भवन्त्यष्टाचत्वारिंशद्भागाः, किमुक्तं भवति ?- योजनस्यैकषष्टिभागाः षट्पंचाशत् चन्द्रमण्डलस्य विष्कम्भपरिमाणं, सूर्यमण्डलस्याष्टाचत्वारिंशत्, एतदेव गव्यूतपरिमाणेन चिन्त्यते, तत्र चतुर्गव्यूतं योजनमिति षट्पंचाशच्चतुर्भिर्गुण्यते, जाते द्वे शते चतुर्विंशत्यधिके २२४, तयोरेकषष्ट्या भागे हृते लब्धास्त्रयः क्रोशाः, एकस्य च क्रोशस्यैकचत्वारिंशदेकषष्टिभागाः, विष्कम्भा-

द्वे चोत्सेधस्ततोऽष्टाविंशतिरेकषष्टिभागा योजनस्योत्सेधपरिमाणं चन्द्रमण्डलस्य, सार्द्धगव्यूतमेकचत्वारिंशद् द्वाविंशत्यधिकशतभागा गव्यूतस्य, तथा सूर्यमण्डलस्याष्टाचत्वारिंशद्भागा योजनस्य चतुर्भिर्गुण्यन्ते, जातं द्विनवत्यधिकं शतं १९२, तस्यैकषष्ट्या भागो ह्रियते, लब्धास्त्रयः क्रोशाः, क्रोशस्य च नवैकषष्टिभागाः, विष्कम्भार्धं चोत्सेध इत्युत्सेधपरिमाणं चतुर्विंशतिरेकषष्टिभागा योजनस्य, यदिवा द्व्यर्द्धं गव्यूतं नव च द्वाविंशत्यधिकशतभागा गव्यूतस्य, तथा चन्द्रमण्डलपरिधेः परिमाणं द्वे योजने त्रयः क्रोशा एकस्य च क्रोशस्य सप्तत्रिंशदेकषष्टिभागा विशेषाधिकाः, सूर्यमण्डलस्य द्वे योजने एकः क्रोशोऽष्टापञ्चाशच्च सप्तषष्टिभागाः क्रोशस्य विशेषाधिकाः, नक्षत्रादिमण्डलानां तु विष्कम्भादिपरिमाणं संग्रहणिटीकायां तत्त्वार्थटीकायां चाभिहितमस्माभिरिति ततोऽवधार्यम् ॥ १४४ ॥ सम्प्रति प्रस्तुतप्राभृतवक्तव्यतोपसंहारमाह—

एवं चंदिमसूराण पमाणं वण्णियं समासेणं ।

'एव' मित्यादि, 'एवम्' उक्तेन प्रकारेण चन्द्रमसां सूर्याणां च मनुष्यक्षेत्रवर्त्तिनां 'प्रमाणं' विष्कम्भप्रमाणं 'समासेन' सङ्क्षेपेण वर्णितम् ॥

इति श्रीमलगिरिविरचितायां जोतिष्करण्डकटीकायां चन्द्रसूर्यमण्डविष्कम्भप्रतिपादकं चन्द्रसूर्यपरिमाणनामकं सप्तमं प्राभृतं समाप्तम्.

तदेवमुक्तं सप्तमं प्राभृतं, सम्प्रति सूर्यनक्षत्रगतिप्रतिपादकमष्टमं प्राभृतं विवक्षुराह—

नक्खत्तचंदसूराण गई च वोच्छं समासेणं ॥ १४५ ॥

चंदेहिं सिग्घयरा सूरा सूरेहिं होंति नक्खत्ता। अणिययगइपत्थाणा हवंति सेसा गहा सव्वे ॥ १४६ ॥
अट्ठारस भागसए पणतीसे गच्छई मुहुत्तेणं। नक्खत्तं चंदो पुण सत्तरससए उ अट्ठट्ठे ॥ १४७ ॥
अट्ठारस भागसए तीसे गच्छइ रवी मुहुत्तेणं। नक्खत्तसीमछेदो सो चेव इहंपि नायव्वो ॥ १४८ ॥

अत ऊर्ध्वं नक्षत्रचन्द्रसूर्याणां 'समासेन' सङ्क्षेपेण परिस्थूलप्रकारेणेत्यर्थः गतिं वक्ष्ये ॥१४५॥ प्रतिज्ञातमेव निर्वाहयति-चंद्रेभ्यः सूर्याः 'शीघ्रतराः' शीघ्रतरगतयः, सूर्येभ्यो नक्षत्राणि शीघ्रतराणि, ये तु ग्रहाः- अङ्गारकादयस्ते सर्वेऽपि वक्रानुवक्रगतिभावतोऽनियतगतिप्रस्थाना भवन्ति ज्ञातव्याः ॥१४६॥ अथ कथं चन्द्रेभ्यः शीघ्रतराः सूर्याः सूर्येभ्योऽपि शीघ्रतराणि नक्षत्राणि इत्यत आह—इह य एव प्राग् नक्षत्रसीमापरिज्ञाननिमित्तं मण्डलच्छेदोऽभिहितः, यथा मण्डलमेकेन शतसहस्रेणाष्टानवतिशतैश्च प्रविभज्यत इति, स एवाष्टानवतिशताधिकशतसहस्रप्रविभागो मण्डलच्छेद इहापि परस्परं गतिविशेषचिन्तायां ज्ञातव्यः, तत्र नक्षत्रमेकेन मुहूर्त्तेनाष्टानवतिशताधिकशतसहस्रप्रविभक्तस्य मण्डलस्य सत्कान्यष्टादशभागशतानि पञ्चत्रिंशानि–पञ्चत्रिंशदधिकानि गच्छति १८३५, कथमेतदवसीयते ? इति चेदुच्यते—इह प्रथमतो मण्डलकालो निरूपणीयः, ततस्तदनुसारेण मुहूर्त्तगतिपरिभावना कार्या, तत्र मण्डलकालप्रमाणचिन्तायामिदं त्रैराशिकं-अष्टादशभिः शतैः पञ्चत्रिंशदधिकैः सकलयुगभाविभिरर्द्धमण्डलैरष्टादशशतानि त्रिंशदधिकानि रात्रिन्दिवानां लभ्यन्ते, ततो द्वाभ्यामर्द्धमण्डलाभ्यामेकेन परिपूर्णेन मण्डलेनेति भावः, किं लभामहे?, राशित्रयस्थापना १८३५, १८३०,२, अत्रान्त्येन राशिना मध्यराशेर्गुणनाज्जातानि षट्त्रिंशच्छतानि षष्ट्याऽधिकानि ३६६०, तत्राद्येन राशिना १८३५

ज्योतिष्करण्डे श्रीमलयगिरीयायां ८ चन्द्रप्रयादिगतिः ॥ ८३ ॥

नक्षत्रगतिमानं ॥ ८३ ॥

भागहरणं, लब्धमेकं रात्रिंदिवं, शेषाणि तिष्ठन्त्यष्टादश शतानि पञ्चविंशत्यधिकानि १८२५, ततो मुहूर्त्तानयनार्थमेतानि त्रिंशता
गुण्यन्ते, जातानि चतुष्पञ्चाशत्सहस्राणि सप्त शतानि पञ्चाशदधिकानि ५४७५०, तेषामष्टादशभिः शतैः पञ्चत्रिंशदधिकैर्भागे
हृते लब्धा एकोनत्रिंशन्मुहूर्त्ताः २९, ततः शेषच्छेद्यच्छेदकराश्योः पञ्चकेनापवर्त्तनाज्जातमुपरितनो राशिस्त्रीणि शतानि सप्तोत्तराणि
३०७, छेदकराशिस्त्रीणि शतानि सप्तषष्ट्यधिकानि ३६७, अत आगतमेकं रात्रिन्दिवं, एकस्य च रात्रिन्दिवस्यैकोनत्रिंशन्मुहूर्त्ताः
एकमुहूर्त्तस्य च सप्तषष्ट्यधिकत्रिशतभागानां त्रीणि शतानि सप्तोत्तराणि १,२९,३०७।३६७ । इदानीमेतदनुसारेण मुहूर्त्तगतिपरि-
माणं चिन्त्यते, तत्र रात्रिन्दिवे त्रिंशन्मुहूर्त्ताः ३०, तेषूपरितना एकोनत्रिंशन्मुहूर्त्ताः प्रक्षिप्यन्ते, जाता एकोनषष्टिर्मुहूर्त्तानां, ततः सा
सवर्णनार्थं त्रिभिः शतैः सप्तषष्ट्यधिकैर्गुण्यते, गुणयित्वा चोपरितनानि त्रीणि शतानि सप्तोत्तराणि प्रक्षिप्यन्ते, जातान्येकविंशतिः सह-
स्राणि नव शतानि षष्ट्यधिकानि २१९६०, ततस्त्रैराशिकं-यदि मुहूर्त्तगतसप्तषष्ट्यधिकत्रिशतभागानामेकविंशत्या सहस्रैर्नवभिः
शतैः षष्ट्यधिकैरेकं शतसहस्रमष्टानवतिः शतानि मण्डलभागानां लभ्यन्ते तत एकेन मुहूर्त्तेन किं लभामहे ?, राशित्रयस्थापना
२१९६०-१०९८००-१, तत्राद्यो राशिर्मुहूर्त्तगतसप्तषष्ट्यधिकत्रिशतभागरूपस्ततोऽन्त्योऽपि राशिस्त्रिभिः शतैः सप्तषष्ट्यधिकैर्गुण्यते,
जातानि त्रीण्येव शतानि सप्तषष्ट्यधिकानि ३६७, तैर्मध्यराशिर्गुण्यते, जाताश्चतस्रः कोट्यो द्वे लक्षे षण्णवतिसहस्राणि षट् शतानि
४०२९६६००, तेषामाद्येन राशिनैकविंशतिसहस्राणि नव शतानि षष्ट्यधिकानीत्येवंरूपेण भागो ह्रियते, लब्धान्यष्टादश शतानि
पञ्चत्रिंशदधिकानि १८३५, एतावतो भागान् नक्षत्रं प्रतिमुहूर्त्तं गच्छति ॥ चन्द्रः पुनरेकेन मुहूर्त्तेन तथाप्रविभक्तस्य मण्डलस्य सत्का-
नि सप्तदश शतान्यष्टषष्टानि-अष्टषष्ट्यधिकानि गच्छति, तथाहि-इहापि प्रथमतश्चन्द्रमसो मण्डलकालो निरूपणीयः, तदनन्तरं तदनु-

मारेण मुहूर्त्तगतिपरिमाणं परिभावनीयं, तत्र मण्डलनिरूपणार्थमिदं त्रैराशिकं-यदि सप्तदशभिः शतैरष्टषष्ट्यधिकैः सकलयुगवर्त्तिभिरर्द्धमण्डलैरष्टादश शतानि त्रिंशदधिकानि रात्रिन्दिवानां लभ्यन्ते ततो द्वाभ्यामर्धमण्डलाभ्यामेकेन मण्डलेनेति भावः कति रात्रिन्दिवानि लभ्यन्ते ?, राशित्रयस्थापना १७६८, १८३०, २, अत्रान्त्येन राशिना द्विकलक्षणेन मध्यस्य राशेर्गुणनाज्जातानि षट्त्रिंशच्छतानि षष्ट्यधिकानि३६६०, तेषामाद्येन राशिना१७६८ भागहरणं, लब्धे द्वे रात्रिन्दिवे२, शेषं तिष्ठति चतुर्विंशत्यधिकं शतं १२४, तत्रैकैकस्मिन् रात्रिन्दिवे त्रिंशन्मुहूर्त्ता इति त्रिंशता गुणने जातानि सप्तत्रिंशच्छतानि विंशत्यधिकानि३७२०, तेषां सप्तदशभिः शतैरष्टषष्ट्यधिकैर्भागे हृते लब्धौ द्वौ मुहूर्तौ२, ततः शेषच्छेदच्छेदकराश्योरष्टकेनापवर्तनाज्जातश्छेद्यो राशिस्त्रयोविंशतिः, छेदकराशिर्द्वे शते एकविंशत्यधिके, आगतं मुहूर्त्तस्यैकविंशत्यधिकशतद्वयभागास्त्रयोविंशतिः २३।२२१, एतावता कालेन द्वे अर्द्धमण्डले परिपूर्णे चरति, किमुक्तं भवति?- एतावता कालेन परिपूर्णमेकं मण्डलं चंद्रश्चरति, तदेवं मण्डलकालपरिज्ञानं कृतं, साम्प्रतमेतदनुसारेण प्रतिमुहूर्त्तं गतिपरिमाणं चिन्त्यते, तत्र ये द्वे रात्रिन्दिवे ते मुहूर्त्तकरणार्थं त्रिंशता गुण्येते, जाताः षष्टिर्मुहूर्त्ताः ६०, तत उपरितनौ द्वौ मुहूर्त्तौ प्रक्षिप्तौ, जाता द्वाषष्टिः ६२, एषा सवर्णनार्थं द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यते, गुणयित्वा चोपरितनाः त्रयोविंशतिः प्रक्षिप्यन्ते, जातानि त्रयोदश सहस्राणि सप्त शतानि पञ्चविंशत्यधिकानि १३७२५, एतदेकमण्डलकालगतमुहूर्त्तसत्कैकविंशत्यधिकशतद्वयभागानां परिमाणं, ततस्त्रैराशिककर्मावतारो, यदि त्रयोदशभिः सहस्रैः सप्तभिः शतैः पञ्चविंशत्यधिकैरेकविंशत्यधिकशतद्वयभागानां मण्डलभागा एकं शतसहस्रमष्टानवतिशतानि लभ्यन्ते, तत एकेन मुहूर्त्तेन किं लभामहे?, राशित्रयस्थापना १३७२५-१०९८००-१, इहाद्यो राशिर्मुहूर्त्तगतैकविंशत्यधिकशतद्वयभागरूपस्ततः सवर्णनार्थमन्त्योऽपि राशिरेककलक्षणो द्वाभ्यां श-

सूर्यगति मानं

ताभ्यामेकविंशत्यधिकाभ्यां गुण्यते, जाते द्वे शते एकविंशत्यधिके, ताभ्यां मध्यो राशिर्गुण्यते, जातं द्वे कोट्यौ द्विचत्वारिंशल्लक्षाः पञ्चषष्टिः सहस्राणि अष्टौ शतानि २४२६५८००, तेषां त्रयोदशभिः सहस्रैः सप्तभिः शतैः पञ्चविंशत्यधिकैर्भागो ह्रियते, लब्धानि सप्तदश शतान्यष्टापष्ट्यधिकानि १७६८, एतावतो भागान् यत्र तत्र वा मण्डले चन्द्रो मुहूर्त्तेन गच्छति ॥ रविः-सूर्यः पुनस्तथाप्रविशत्कस्य मण्डलस्य सत्कानि अष्टादशभागशतानि त्रिंशानि-त्रिंशदधिकानि एकेन मुहूर्त्तेन गच्छति, एतदप्यवसीयते त्रैराशिकबलात्, तथाहि-षष्टया मुहूर्त्तैरेकं शतसहस्रमष्टानवतिः शतानि मण्डलभागानां लभ्यन्ते, तत एकेन मुहूर्त्तेन कति भागान् लभामहे ?, राशित्रयस्थापना ६०-१०९८००-१, अत्रान्त्येन राशिना एककलक्षणेन मध्यस्य राशेर्गुणनं, जातः स तावानेव, एकेन गुणितं तदेव भवतीति वचनात्, ततस्तस्याद्येन राशिना षष्टिलक्षणेन भागो ह्रियते, लब्धान्यष्टादश शतानि त्रिंशदधिकानि १८३०, एतावतो भागान् मण्डलस्य सूर्य एकेन मुहूर्त्तेन गच्छति, तथा चोक्तं सूर्यप्रज्ञप्तौ-"ता एगमेगेणं मुहुत्तेणं चंदे केवइयाइं भागसयाइं गच्छइ?, जं जं मंडलं उवसंकमित्ता चारं चरइ तस्स मण्डलपरिक्खेवस्स सत्तरस अट्ठट्ठे भागसए गच्छइ, मंडलं सयसहस्सेणं अट्ठाणउतीए सएहिं छेत्ता । ता एगमेगेणं मुहुत्तेणं सूरे केवइयाइं भागसयाइं गच्छइ ?, ता जं जं मंडलं उवसंकमित्ता चारं चरइ तस्स मंडलपरिक्खेवस्स अट्ठारसतीसे भागसए गच्छइ, मंडलं सयसहस्सेण अट्ठाणउइए सएहिं छेत्ता। ता एगमेगेणं मुहुत्तेणं नक्खत्ते केवइयाइं भागसयाइं गच्छइ?, ता जं जं मंडलं उवसंकमित्ता चारं चरइ तस्स तस्स मंडलपरिक्खेवस्स अट्ठारसपणतीसे भागसए गच्छइ, मंडलं सयसहसहस्सेणं अट्ठाणउइए य सएहिं छेत्ता" इति ॥ ततश्चन्द्रेभ्यः शीघ्रतराः सूर्यास्तेभ्योऽपि शीघ्रतराणि नक्षत्राणि इति । ग्रहा अपि यदा वक्रानुवक्रगतिव्यतिरेकेण सामान्यतो गच्छन्तः चन्द्राद्यपेक्षया गत्या परिभाव्यन्ते तदा ते नक्षत्रेभ्यो मन्दगतयः सूर्येभ्यः

॥ ८५ ॥

शीघ्रगतयो वेदितव्याः, तारास्तु नक्षत्रेभ्योऽपि शीघ्रतराः, तथा चोक्तं सूर्यप्रज्ञप्ताविव-"ता कहं ते सिग्घगई वत्थू आहियात्ति वएज्जा ?, ता एएसि णं चंदिमसूरियगहगणनक्खत्ततारारूवाणं चंदेहिंतो सूरा सिग्घगई सूरेहिंतो गहा सिग्घगई गहेहिंतो नक्खत्ता सिग्घगई नक्खत्तेहिंतो तारा सिग्घगई, सव्वप्पगई चंदा सव्वसिग्घगई तारा" इति ॥१४७-१४८॥ सम्प्रति प्रस्तुतप्राभृतवक्तव्यतोपसंहारमाह—

जोयणगणणारहिया एस गई वण्णिया अहाथूरा।

'एषा' अनन्तरोदितस्वरूपा योजनगणनारहिता गतिः यथा स्थूला चन्द्रनक्षत्रसूर्याणां वर्णिता ॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायामष्टमं प्राभृतं समाप्तम् ॥

तदेवमुक्तमष्टमं प्राभृतं, सम्प्रति नक्षत्रयोगप्रतिपादकं प्राभृतं विवक्षुराह—

नक्खत्तचंदजोगे एत्तो वोच्छं समासेणं ॥ १४९ ॥

अभिइस्स चंदजोगो सत्तट्ठीखंडिओ अहोरत्तो। भागा य एक्कवीसं ते पुण अहिगा नव मुहुत्ता ॥ १५० ॥

सयभिसय भरणी अद्दा अस्सेसा साइ तह य जेट्ठा य। एते छन्नक्खत्ता पनरसमुहुत्तसंजोगा ॥ १५१ ॥

तिन्नेव उत्तराओ पुणव्वसू रोहिणी विसाहा य। एते छन्नक्खत्ता पणयालमुहुत्तसंजोगा ॥ १५२ ॥

अवसेसा नक्खत्ता पणरसवि होंति तीसइमुहुत्ता। चंदंमि एस जोगो नक्खत्ताणं समक्खाओ ॥ १५३ ॥

'इतः' अष्टमप्राभृताभिधानादनन्तरं नक्षत्राणां चन्द्रेण सह योगान् वक्ष्ये ॥१४९॥ प्रतिज्ञातमेव निर्वाहयति– 'अभिजितः' अभिजिन्नक्षत्रस्य चन्द्रेण सह योगः सप्तषष्टिखण्डितः-सप्तषष्टिप्रविभागीकृतो योऽहोरात्रस्तस्य सत्का ये एकविंशतिर्भागास्तावन्तं कालं भवति, ते चैकविंशतिः सप्तषष्टिभागाः परिभाव्यमाना नव मुहूर्त्ता अधिकाः-सप्तविंशतिसप्तषष्टिभागाधिका भवन्ति, तथाहि-सप्तषष्टिखण्डीकृतस्याहोरात्रस्य सत्का ये एकविंशतिर्भागास्ते मुहूर्त्तगतभागकरणार्थं त्रिंशता गुण्यन्ते, जातानि षट् शतानि त्रिंशदधिकानि६३०, तेषां सप्तषष्ट्या भागे हृते लब्धा नव मुहूर्त्ताः, एकस्य च मुहूर्त्तस्य सप्तविंशतिः सप्तषष्टिभागा इति॥१५०॥ शतभिषग्भरणीआर्द्राअश्लेषास्वातिज्येष्ठानक्षत्राणां प्रत्येकं चन्द्रेण सह योगः पञ्चदश मुहूर्त्तान् यावदिति, तथाहि-एतेषां प्रत्येकं सप्तषष्टिखण्डीकृतस्याहोरात्रस्य सत्कान् त्रयस्त्रिंशद्भागानेकस्य सप्तषष्टिभागस्यार्द्धं च यावच्चन्द्रेण सह योगः, तत्र त्रिंशद्भागकरणार्थं त्रयस्त्रिंशत् त्रिंशता गुण्यते, जातानि नव शतानि नवत्यधिकानि ९९०, यदपि चार्द्धं तदपि त्रिंशता गुणयित्वा द्विकेन भज्यते, लब्धाः पञ्चदश भागाः १५, सर्वसङ्कलनया जातं भागानां पञ्चोत्तरं सहस्रं१००५, एतस्य सप्तषष्ट्या भागे हृते लब्धाः पञ्चदश मुहूर्त्ता इति ॥१५१॥ त्रिस्र उत्तराः, तद्यथा-उत्तरभद्रपदा उत्तरफाल्गुनी उत्तराषाढा, तथा पुनर्वसुः रोहिणी विशाखा, एतानि षड् नक्षत्राणि चन्द्रेण सह पंचचत्वारिंशन्मुहूर्त्तसंयोगानि भवन्ति, षण्णामप्येतेषां नक्षत्राणां प्रत्येकं चन्द्रेण सह योगः पंचचत्वारिंशन्मुहूर्त्तान् यावद् भवतीत्यर्थः, तथाहि-एतेषां प्रत्येकं सप्तषष्टिखण्डीकृतस्याहोरात्रस्य सत्कानां भागानां शतमेकमेकस्य च भागस्यार्द्धं यावच्चन्द्रेण सह योगः, तत्रैषां भागानां मुहूर्त्तगतभागकरणार्थं शतं प्रथमतस्त्रिंशता गुण्यते, जातानि त्रीणि सहस्राणि ३०००, यदप्येकमर्द्धं तदपि त्रिंशता गुणयित्वा द्वाभ्यां विभज्यते लब्धाः पंचदश भागाः, ते पूर्वराशौ प्रक्षिप्यन्ते, जातः पूर्वराशिस्त्रीणि सहस्राणि पंचदशोत्तराणि ३०१५, एतेषां

सप्तषष्ट्या भागो ह्रियते, लब्धाः पंचचत्वारिंशन्मुहूर्त्ताः ॥ १५२ ॥ 'अवशेषाणि' उक्तव्यतिरिक्तानि श्रवणधनिष्ठापूर्वभद्रपदारेवती-अश्विनीकृत्तिकामृगशिरःपुष्यमघापूर्वफाल्गुनीहस्तचित्रामूलानुराधापूर्वाषाढारूपाणि पंचदशापि नक्षत्राणि प्रत्येकं चन्द्रेण सह योगमधिकृत्य त्रिंशन्मुहूर्त्तानि, त्रिंशन्मुहूर्त्तान् यावदेतेषां प्रत्येकं चन्द्रेण सह योगो भवतीत्यर्थः, एवमेष 'चन्द्रे' चन्द्रविषये योगो नक्षत्राणां तीर्थंकरगणधरैराख्यातः ॥ १५३ ॥ सम्प्रति वक्ष्यमाणवक्तव्यतोपक्षेपं कुर्वन्नाह—

एएसिं रिक्खाणं आयाणविसग्गजाणणाकरणं । चंदंमि य सूरंमि य वोच्छामि अहाणुपुव्वीए ॥ १५४ ॥

'एतेषाम्' अनन्तरोदितानां नक्षत्राणामष्टाविंशतिसङ्ख्यानाम् 'आदानविसर्गज्ञानकरणम्' आदानविसर्गपरिज्ञाननिमित्तं, तत्र विवक्षिते दिने चन्द्रेण सूर्येण वा सह वर्त्तते यन्नक्षत्रं तस्य किल चन्द्रेण सूर्येण वा कृतः परिग्रह इत्यादानं, पाश्चात्यानि नक्षत्राणि गतानि तानि किल भुक्त्वा परित्यक्तानि तेषां परित्यागो-विसर्गस्तयोः परिज्ञानं, केन नक्षत्रेण सह चन्द्रस्य सूर्यस्य वा योगो वर्त्तते? कानि च मागतीतानीति सम्यग्ज्ञानं तन्निमित्तं करणं, चन्द्रे सूर्ये च प्रत्येकं 'यथानुपूर्व्या' क्रमेण वक्ष्यामि, ॥१५४ ॥ तत्र 'यथोद्देशं निर्देश' इति न्यायात्प्रथमतश्चन्द्रविषयं करणमाह—

पव्वं पन्नरसगुणं तिहिसहियं ओमरत्तपरिहीणं । बासीइए विभत्ते लद्धे अंसे वियाणाहि ॥ १५५ ॥
जं हवइ भागलद्धं कायव्वं तं चउग्गुणं नियमा । अभिइस्स एक्कवीसा भागे सोहेहि लद्धंमि ॥ १५६ ॥
सेसाणं रासिणं सत्तावीसं तु मंडला सोज्झा । अभिइस्स सोहणासंभवे उ इणमो विही होइ ॥ १५७ ॥

सेसाओ रासीओ रूवं घेत्तूण सत्तसट्ठिकका। पक्खिव लद्धेसु पुणो अभिजि सोहेउ पुव्वकमा ॥ १५८ ॥
पंच दस तेरसट्ठारसेव बावीस सत्तवीसा य। सोज्झा दिवड्ढखेत्तंत भद्दवाई असाढंता ॥ १५९ ॥
एयाणि सोहइत्ता जं सेसं तं हविज्ज नक्खत्तं। सोज्झा तीसगुणाओ सत्तट्ठिहिते मुहुत्ताओ ॥ १६० ॥

यस्मिन् दिने चन्द्रेण सह युक्तं नक्षत्रं ज्ञातुमिष्यते तस्माद्दिनात् प्राग् यानि पर्वाणि युगमध्येऽतीतानि तानि संख्यया परिभाव्य तत्संख्या ध्रियते, सूत्रे च पर्वसंख्याऽप्युपचारात्पर्वेत्यभिहिता, पर्व-पंचदशतिथ्यात्मकमतस्तत् पंचदशभिर्गुण्यते, गुणयित्वा च तेषां पर्वणामुपरि विवक्षितायास्तिथेर्याः प्रागतीतास्तिथयस्ताभिः सहितं-युक्तं तत्पर्व [पंचदशगुणीकृतं] क्रियते, किमुक्तं भवति?-पंचदशगुणनानन्तरं पर्वोपरिवर्त्तिन्योऽतीतास्तिथयस्तन्मध्ये प्रक्षिप्यन्त इति, ततो येऽवमरात्रा अतिक्रान्तेषु पर्वसु गताः तैः परिहीनं क्रियते, ततोऽपनीयत इत्यर्थः, ततो द्व्यशीत्या भागो ह्रियते, तत्र भागे यल्लब्धं ये चांशा अवतिष्ठमानाः तदेतत्सर्वं 'जानीहि' बुद्ध्या सम्यगवधारयेति भावः, लब्धं चोपरि स्थापय, अंशास्त्वधस्तात्, लब्धं च राशिरिति व्यवह्रियते, अंशाश्च शेषो राशिरिति, तत्र यद् 'भवति' वर्त्तते भागलब्धं तन्नियमाच्चतुर्गुणं कर्त्तव्यं, कृते च सति लब्धरूपाद्राशेरभिजितो नक्षत्रस्य सम्बन्धिन एकविंशतिं भागान् शोधय, शेषाणां तु राशीनां-अधस्तनवर्त्तिनां मध्यात्सप्तविंशतिसंख्यं नक्षत्रमण्डलं शोध्यं, सप्तविंशतिः शोध्या इत्यर्थः। अथोपरितनो राशिः स्तोकतयैकविंशतिरूपं शोधनं न सहते तत आह-'सेसाउ' इत्यादि, 'शेषात्' अधस्तनरूपाद्राशेरेकं रूपं गृहीत्वा सप्तषष्टिभागीक्रियते, कृत्वा च पुनस्ते सप्तषष्टिभागा लब्धेषु-लब्धराशिमध्ये प्रक्षिप, प्रक्षिप्य च ततोऽभिजितं-अभिजिन्नक्षत्रसम्बन्धिन एकविं-

शतिभागान् 'पूर्वक्रमात्' पूर्वक्रमानुसारेण शोधय, शोधयित्वा च पंचदशत्रयोदशाष्टादशद्वाविंशतिसप्तविंशतिरूपान् शोध्यान् 'द्व्यर्द्धक्षेत्रान्' द्व्यर्द्धक्षेत्रपर्यन्तसूचकानेतानपि शोधय, एतदेव व्यक्तमाचष्टे-भद्रपदादीन् आषाढान्तान्-उत्तरभद्रपदान्युत्तराषाढापर्यन्तरूपान्, द्व्यर्द्धक्षेत्रपर्यन्तभावसूचकानित्यर्थः, तथाहि-पंचकं श्रवणादारभ्योत्तरभद्रपदारूपद्व्यर्द्धक्षेत्रपर्यन्तसूचकः, दशको रोहिणीरूपद्व्यर्द्धक्षेत्रसीमासूचकः, त्रयोदशकः पुनर्वसुरूपद्व्यर्द्धक्षेत्रपर्यन्तव्यापकः, अष्टादशक उत्तरफाल्गुनीरूपद्व्यर्द्धक्षेत्रसीमापरिज्ञापको, द्वाविंशतिः विशाखारूपद्व्यर्धक्षेत्रावधिसूचिका, सप्तविंशतिः समस्तनक्षत्रमण्डलसमाप्तिसूचिका, उत्तराषाढारूपद्व्यर्धक्षेत्रसीमासूचिकेत्यर्थः, शोधितेषु चामूषु तदुपरितनेषु च नक्षत्रेषु यच्छेषमवतिष्ठते तदादानं नक्षत्रं ज्ञातव्यं, यच्चोपरिष्टाच्छेषमस्ति तत् त्रिंशता गुणयित्वा तस्य सप्तषष्ट्या भागे हृते ये लब्धास्ते मुहूर्त्ता ज्ञातव्याः, तत्राप्यवशेषांशा मुहूर्त्तस्य सप्तषष्टिभागा अवसेया इति करणगाथाक्षरार्थः। सम्प्रति भावना क्रियते-युगस्य प्रथमे संवत्सरे दशसु पर्वसु गतेषु पंचम्यां केन नक्षत्रेण सह यु(यो)क्तव्यमिति जिज्ञासायां पर्वसंख्या दशको ध्रियते, ते च दश पंचदशभिर्गुण्यन्ते, जातं पंचाशदधिकं शतं १५०, पंचम्यां च नक्षत्रेण सह चन्द्रस्य योगो ज्ञातुमिष्ट इति दशानां पर्वणामुपरि चतस्रस्तिथयोऽतिक्रान्तास्ताः प्रक्षिप्यन्ते, जातं चतुष्पंचाशदधिकं शतं १५४, दशसु पर्वसु द्वाववमरात्रौ, ततस्तौ

---

१ बहुषु पुस्तकेषु अवमरात्रपातनमत्र न कृतं, ततः पुरतः सर्वत्राङ्कद्वयवृद्धिः यावत् चत्वारि नक्षत्राणि शुध्यन्ति-पुष्योऽश्लेषा मघा पूर्वाफाल्गुनी चेति नक्षत्रचतुष्कशुद्धिः उत्तराफाल्गुन्या अष्टादशमुहूर्त्तादिषु सूर्योदय इति संपन्नं, परं तन्न युक्तिसहं न च सूत्रानुकूलमिति तदुपेक्ष्य काचित्कोऽप्ययं पाठोऽत्र धृतः-

तस्मात्पात्येते, जातं द्विपंचाशदधिकं शतं १५२, तस्य द्व्यशीत्या भागो ह्रियते, लब्धमेकं रूपं, तत् उपरि न्यस्यते, न्यस्य च चतुर्भिर्गुण्यते, जाताश्चत्वारः ४, शेषं चाधस्तादुद्धरति सप्ततिः, तत्रोपरितनो राशिः स्तोकत्वादेकविंशतिरूपं शोधनं न सहते, ततः सप्ततेरेकं रूपं गृहीत्वा सप्तषष्टिखण्डीक्रियते, ते च सप्तषष्टिभागा उपरितनराशिमध्ये प्रक्षिप्यन्ते, जात उपरितनो राशिरेकसप्ततिः, अधस्तार्चैकोनसप्ततिः, तत उपरितनराशेरभिजिदेकविंशतिः शोध्यते, अधस्तनराशेश्च नक्षत्रमण्डलं सप्तविंशतिः, तत उपरि पंचाशज्जाताः ५०, अधस्ताद् द्विचत्वारिंशज्जाताः, ततः पुनरप्युपरितनराशेरेकविंशतिः शुद्धा, अधस्ताच्च सप्तविंशतिः, तत उपर्येकोनत्रिंशत् २९ जाता अधस्तात् पंचदश १५, ततो भूयोऽप्युपरितनराशेरभिजिदेकत्रिंशतिः शोध्यते, अधस्ताच्च पंचदशतः त्रयोदशकमंकस्थानं पुनर्वसुनक्षत्रपर्यन्तसूचकमतः पुनर्वसुपर्यन्तानि नक्षत्राणि शुद्धानि, शेषौ द्वौ तिष्ठतः, ताभ्यां द्वे नक्षत्रे शुद्धे, तद्यथा-पुष्योऽश्लेषा च, उपरि च तिष्ठन्त्यष्टौ, ते त्रिंशता गुण्यन्ते, जाते द्वे शते चत्वारिंशदधिके२४०, तयोः सप्तषष्ट्या भागे हृते लब्धास्त्रयो मुहूर्त्ताः, एकस्य च मुहूर्त्तस्यैकोनचत्वारिंशत्सप्तषष्टिभागाः, तत आगतं मघानक्षत्रस्य त्रिषु मुहूर्त्तेष्वेकस्य च मुहूर्त्तस्य सत्केष्वेकोनचत्वारिंशत्संख्येषु सप्तषष्टिभागेषु चन्द्रेण भुक्तेषु पर्वदशकानन्तरं पंचम्यां सूर्य उदित इति, तथा युगे प्रथमदिवसे प्रतिपदि केन नक्षत्रेण सह युक्तश्चन्द्र इति चिन्तायां पाश्चात्ययुगपर्वसंख्या ध्रियते चतुर्विंशं शतं १२४, तत् पंचदशभिर्गुण्यते, जातानि षष्ट्यधिकान्यष्टादश शतानि १८६०, युगे च त्रिंशदवमरात्रा इति तेभ्यस्त्रिंशत् पात्यते, जातान्यष्टादश शतानि त्रिंशदधिकानि, तेषां द्व्यशीत्या भागो ह्रियते, लब्धा द्वाविंशतिः उपरि न्यस्यते, सा च चतुर्भिर्गुण्यते, जाताऽष्टाशीतिः, शेषमधस्तादुद्धरति षड्विंशतिः२६, तत्रोपरितनराशेरेकविंशतिरभिजितः शोध्यते, स्थिता पश्चात्सप्तषष्टिः, तया च किलैकं नक्षत्रं लभ्यते,

॥ ९१ ॥

ज्योतिष्करण्डे श्रीमलयगिरीयायां ८ नक्षत्र चन्द्र योगः ॥ ९२ ॥

सूर्येण नक्षत्राणां योगकालः

अधस्ताच्च षड्विंशतिरिति सर्वसङ्कलनया सप्तविंशतिरपि नक्षत्राण्युत्तराषाढापर्यन्तानि शुद्धानि, तत आगतमुदयसमय एव अभिजिन्नक्षत्रं चन्द्रेण सह योगमुपयातीति, तथा युगे द्वितीयेऽहोरात्रे द्वितीयायां केन नक्षत्रेण सह युक्तश्चन्द्रः? इति चिन्तायां पाश्चात्या तिथिरतिक्रान्ता प्रतिपल्लक्षणा तत्सङ्ख्या एकको ध्रियते, स द्व्यशीत्या भागं न सहते, ततः सप्तषष्टिभागीक्रियते, तस्मादेकविंशतिरभिजितः शोध्यते, स्थिता पश्चात् षट्चत्वारिंशत् ४६, सा मुहूर्त्तकरणार्थं त्रिंशता गुण्यते, जातानि त्रयोदश शतान्यशीत्यधिकानि १३८०, तेषां सप्तषष्ट्या भागो ह्रियते, लब्धा मुहूर्ता विंशतिः२०, स्थिता पश्चाच्चत्वारिंशत् ४०, आगतं श्रवणनक्षत्रस्य विंशतिमुहूर्त्तेषु एकस्य च मुहूर्त्तस्य चत्वारिंशति सप्तषष्टिभागेषु चन्द्रेण युक्तेषु युगे द्वितीयेऽहोरात्रे द्वितीयायां सूर्य उदयते, एवं सर्वत्रापि भावनीयम् ॥१५५-१६०॥ सम्प्रति यावान् सूर्यस्य नक्षत्रेण योगस्तावन्तमभिधित्सुराह—

अभिई छच्च मुहुत्ते चत्तारि य केवले अहोरत्ते । सूरेण समं वच्चइ एत्तो सेसाण वोच्छामि ॥ १६१ ॥
जं रिक्खं जावइए वच्चइ चंदेण भाग सत्तट्ठी । तं पणभागे राइंदियस्स सूरेण तावइए ॥ १६२ ॥
सयभिसया भरणिए अद्दा अस्सेस साइ जेट्ठा य । वच्चंति मुहुत्ते एक्कवीस छच्चेवऽहोरत्ते ॥ १६३ ॥
तिन्नेव उत्तराइं पुणव्वसू रोहिणी विसाहा य । वच्चंति मुहुत्ते तिण्णि चेव वीसं अहोरत्ते ॥ १६४ ॥
अवसेसा नक्खत्ता पन्नरसावि सूरसहगया जंति । बारस चेव मुहुत्ते तेरस य समे अहोरत्ते ॥ १६५ ॥

अभिजिन्नक्षत्रं सूर्येण समं व्रजति चतुरः 'केवलान्' परिपूर्णान् अहोरात्रान्, षट् च मुहूर्त्तान् यावत् कथमेतदवसीयते ?

॥ ९२ ॥

इति चेदुच्यते–इह पूर्वाचार्यप्रदर्शितमेतद्विषयमिदं करणम्–'जं रिक्खं' मित्यादि, यन्नक्षत्रं यावतः सप्तषष्टि–भागान् चन्द्रेण समं व्रजति तन्नक्षत्रमहोरात्रस्य सत्कान् तावतः पञ्च भागान् सूर्येण समं व्रजति, तत्राभिजिदेकविंशतिं सप्तषष्टि-भागान् चन्द्रेण समं वर्त्तते, तत एतावतः पञ्च भागानहोरात्रस्य सूर्येण समं वर्त्तनमवसेयम्, एकविंशतेश्च पञ्चाभिर्भागे हृते लब्धाश्चत्वारोऽहोरात्राः, एकः पञ्चभागोऽवतिष्ठते, स त्रिंशता गुण्यते, जाता त्रिंशत्, तस्याः पञ्चभिर्भागे हृते लब्धाः षड् मुहूर्त्ता इति, उत ऊर्ध्वं शेषाणामपि नक्षत्राणां सूर्येण समं योगान् कालपरिमाणमधिकृत्य वक्ष्यामि ॥१६१–१६२॥ प्रतिज्ञातमेव निर्वाहयति–शतभिषग् भरण्यार्द्रा अश्लेषा स्वातिः जेष्ठा चेत्येतानि षड् नक्षत्राणि प्रत्येकं सूर्येण समं व्रजन्ति षडेवाहोरात्रानेकविंशतिं च मुहूर्त्तान्। तथाहि-एतानि नक्षत्राणि चन्द्रेण समं सार्द्धान् त्रयस्त्रिंशत्सङ्ख्यान् सप्तषष्टिभागान् व्रजंति, तत एतावतः पञ्चभागान् अहोरात्रस्य सूर्येण समं व्रजंतीति प्रत्येकं, (सार्धं) त्रयस्त्रिंशतश्च पञ्चाभिर्भागे लब्धाः षडहोरात्राः, पश्चादवतिष्ठन्ते सार्द्धास्त्रयः पञ्चभागाः, ते सवर्णनायां जाताः सप्त, ते त्रिंशता गुण्यन्ते, जाते द्वे शते दशोत्तरे २१०, तेषां परिपूर्णमुहूर्त्तानयनाय दशभिर्भागे हृते लब्धा एकविंशतिर्मुहूर्त्ताः ॥ १६३ ॥ तिस्र उत्तराः, तद्यथा-उत्तरभद्रपदा उत्तराफाल्गुनी उत्तराषाढा च, तथा पुनर्वसुः रोहिणी विशाखा च, प्रत्येकमेतानि षड् नक्षत्राणि सूर्येण समं व्रजन्ति त्रीनेव मुहूर्त्तान् विंशतिं चाहोरात्रान्, एतानि हि षडपि नक्षत्राणि चन्द्रेण समं सप्तषष्टिभागानां शतमेकस्य च भागस्यार्द्धं प्रत्येकं व्रजन्ति, तत एतावतः पञ्चभागानहोरात्रस्य सूर्येण समं व्रजनमवगन्तव्यं, शतस्य च पञ्चभिर्भागे हृते लब्धा विंशतिरहोरात्राः, यदप्येकैकस्य पञ्चभागस्यार्द्धमुद्धरति तदपि त्रिंशता गुण्यते, जाता त्रिंशत्, तस्या दशभिर्भागे हृते लब्धास्त्रयो मुहूर्त्ता इति ॥ १६४ ॥ 'अवशेषाणि' श्रवणधनिष्ठाप्रभृतीनि नक्षत्राणि पञ्चदशापि सूर्येण सह-

॥ ९३ ॥

गतानि यान्ति त्रयोदश समान्-परिपूर्णानहोरात्रान् द्वादश च मुहूर्त्तान् यावत्, तथाहि-अमूनि परिपूर्णान् सप्तषष्टिभागान् चंद्रेण समं व्रजन्ति, ततः सूर्येण सहैतानि पञ्चभागानप्यहोरात्रस्य सप्तषष्टिसङ्ख्यान् गच्छन्ति, सप्तषष्टेश्च पञ्चभिर्भागे हृते लब्धास्त्रयोदशाहोरात्राः, शेषौ च द्वौ भागौ तिष्ठतस्तौ त्रिंशता गुण्येते, जाता षष्टिः, तस्याः पञ्चभिर्भागे हृते लब्धा द्वादश मुहूर्त्ता इति ॥ १६५ ॥ सम्प्रत्यादानविसर्गपरिज्ञाननिमित्तं सूर्यविषयं करणमाह—

पव्वं पन्नरसगुणं तिहिसहियं ओमरत्तपरिहीणं। तीहिं छावट्ठेहिं सहिए सेसंमि सोहणगं ॥ १६६ ॥
चउवीसं च मुहुत्ता अट्ठेव य केवला अहोरत्ता। एए पुस्से सेसा एत्तो सेसाण वोच्छामि ॥ १६७ ॥
राइंदिया विसट्ठी य, मुहुत्ता बारसुत्तरा। सोलस सयं विसाहा वीसदेवा य तेसीयं ॥ १६८ ॥
दो चउप्पण्णा छच्चेव मुहुत्ता उत्तरा उ पोट्ठवया। तिण्णेव एक्कवीसा छच्च मुहुत्ता उ रोहिणिया ॥१६९॥

[जोगो] तिन्नेगट्ठा बारस य मुहुत्ता सोहणं पुणव्वसुणो। जं सोहणं न गच्छइ तं नक्खत्तं तु सूरगयं ॥१७०॥

युगमध्ये विवक्षितादिनात्प्राग् यानि पर्वाण्यतीतानि तत्सङ्ख्या स्थाप्यते, स्थापयित्वा च पञ्चदशभिर्गुण्यते, ततो विवक्षिताद् दिनात् प्राक् पर्वणामुपरि यास्तिथयोऽतिक्रान्तास्तत्सहिताः क्रियन्ते, ततस्तदनन्तरमधिकृतादिनादर्वाग् ये गता अवमरात्रास्तैःपरिहीनः क्रियते, ते ततः पात्यन्त इत्यर्थः, ततः शेषस्य त्रिभिः शतैः षट्षष्टैः—षट्षष्ट्यधिकैर्विभजेत्-भागं हरेत्, भागे च हृते यच्छेषं तस्मिन् शेषे 'शोधनकं' वक्ष्यमाणस्वरूपं कुर्यात् ॥१६६॥ तत्र यस्मिन् शोधनके शुद्धे यन्नक्षत्रं शुद्धं भवति तदेतन्निरूपयन्नाह- 'चउवी'त्यादि, चतुर्विंशति-

मुहूर्त्ता अष्टौ च केवलाः- परिपूर्णा अहोरात्राः, एते एतावन्तो मुहूर्त्ता अहोरात्राश्च 'पुष्ये' पुष्यनक्षत्रे शोध्याः, किमुक्तं भवति ?-एतेषु शोधितेषु पुष्यनक्षत्रं शोधितं भवतीति ॥ १६७ ॥ अत ऊर्ध्वं शेषाणां नक्षत्राणां शोधनकानि वक्ष्ये, तान्येव क्रमेणाह- 'द्वाषष्टिः' द्वाषष्टिसंख्यानि रात्रिन्दिवानि द्वादश च मुहूर्त्ताः, एतावति शोधिते उत्तराफाल्गुनीनक्षत्रं शुद्धं भवति, तथा 'षोडशं' षोडशाधिकं शतं विशाखा विशाखापर्यंतसूचकं, ततस्तस्मिन् शोधिते विशाखान्तानि नक्षत्राणि शोधितानि भवन्तीति भावः, तथा 'त्र्यशीतं' त्र्यशीत्यधिकं शतं 'विष्वग्देवाः' विष्वग्देवाधिपतिरुत्तराषाढा इत्यर्थः, अत्राप्ययं भावार्थः-त्र्यशीत्यधिकं शतमुत्तराषाढापर्यंतसूचकमिति॥१६८॥द्वे शते चतुष्पंचाशे-चतुष्पंचाशदधिके षट् च मुहूर्त्ता उत्तराप्रोष्ठपदा-उत्तराभाद्रपदा उत्तरभद्रपदपर्यन्तसूचक इत्यर्थः, ततस्त्रीणि शतान्येकविंशतानि-एकविंशत्यधिकानि षड् मुहूर्त्ताः 'रोहिणी' रोहिणीसूचकाः॥१६९॥त्रीणि शतान्येकषष्टानि-एकषष्ट्यधिकानि द्वादश मुहूर्त्ताः, एतावच्छोधनकं 'पुनर्वसोः' पुनर्वसुनक्षत्रस्य, एतानि च शोधनकानि पुष्यं मुक्त्वा शेषाणि द्व्यर्द्धक्षेत्रपर्यन्तानामुक्तानि, तदेतेषामपान्तराले यानि नक्षत्राणि तान्यात्मीयेन प्रमाणेन शोध्यन्ते. तद्यथा- अर्द्धक्षेत्राणि षड्भिरहोरात्रैरेकविंशत्या च मुहूर्त्तैः, समक्षेत्राणि त्रयोदशभिर्दिनैर्द्वादशभिश्च मुहूर्त्तैः, द्व्यर्द्धक्षेत्राणि विंशत्या दिनैस्त्रिभिश्च मुहूर्त्तैरिति, यत्पुनरुद्धरितं शोधनं न गच्छति तन्नक्षत्रं सूर्यगतमवसेयं, योऽपि च राशिः स्तोकतया षट्षष्ट्यधिकशतत्रयभागं न सहते तत्रापि यथायोगं शोधनं कर्त्तव्यम् । उक्तं करणं, सम्प्रत्येतद्विषया भावना क्रियते-युगस्य प्रथमे संवत्सरे चान्द्रे दशसु पर्वस्वतिक्रान्तेषु पंचम्यां केन नक्षत्रेण सह योगो दिवसाधिपतेः ? इति चिन्तायां पर्वसंख्या दश ध्रियन्तेते पंचदशभिर्गुण्यन्ते, जातं पंचाशदधिकं शतं १५०, दशानां च पर्वणामुपरि पंचम्याः प्राक् तिथयोऽतिक्रान्ताश्चतस्रः, ततस्तास्तत्र प्रक्षिप्यन्ते, जातं चतुष्पंचाशदधिकं शतं १५४, दशसु च पर्वसु द्वाववमरात्रौ, ततस्तौ तस्मात्पात्येते, जातं द्विपंचा-

शदधिकं शतम् १५२, अयं च राशिः षट्षष्ट्यधिकशतत्रयभागं न सहते ततो यथासम्भवं शोधनकं कर्त्तव्यं, तत्र षोडशाधिकेन शतेन विशाखान्तानि नक्षत्राणि शुद्धानि, शेषास्तिष्ठन्ति षट्त्रिंशत्, ततोऽनुराधा त्रयोदशभिरहोरात्रैर्द्वादशभिर्मुहूर्त्तैः शुद्धा, शेषाः तिष्ठन्ति द्वाविंशतिर्दिवसाः अष्टादश च मुहूर्त्ताः, पुनः षड्भिर्दिवसैरेकविंशत्या च मुहूर्त्तैर्ज्येष्ठा शुद्धा, शेषाः पंचदश दिवसाः सप्तविंशतिर्मुहूर्त्ता अवतिष्ठन्ते, तेभ्यस्त्रयोदशभिर्दिवसैर्द्वादशभिश्च मुहूर्त्तैर्मूलनक्षत्रं शुद्धं, शेषौ द्वौ दिवसौ पंच मुहूर्त्तास्तिष्ठन्ति, एतावान् कालः पर्वदशकातिक्रमे पंचम्यां पूर्वाषाढाप्रविष्टस्य सूर्यस्याभूत् ॥ तथा युगस्य प्रथमसंवत्सरपर्यन्ते केन नक्षत्रेण सह समेतो भास्करः? इति चिन्तायां प्रथमसंवत्सरे पर्वाणि चतुर्विंशतिः, तानि पंचदशभिर्गुण्यन्ते, जातानि त्रीणि शतानि षष्ट्यधिकानि ३६०, संवत्सरे च षड् अवमरात्रा इति षट् तेभ्यः पात्यन्ते, जातानि त्रीणि शतानि चतुष्पंचाशदधिकानि ३५४, अत्रापि त्रिभिः शतैः षट्षष्ट्यधिकैर्भागो न पूर्यते ततो यथासंभवं शोधनं कर्त्तव्यं, तत्र त्रिभिः शतैरेकविंशत्यधिकैः षड्भिश्च मुहूर्त्तैः रोहिण्यन्तानि नक्षत्राणि शुद्धानि, शेषास्तिष्ठन्ति द्वात्रिंशदहोरात्राश्चतुर्विंशतिश्च मुहूर्त्ताः, तेभ्योऽपि त्रयोदशभिर्दिवसैर्द्वादशभिश्च मुहूर्त्तैर्मृगशिरोनक्षत्रं शुद्धं, शेषमवतिष्ठते एकोनविंशतिरहोरात्रा द्वादश च मुहूर्त्ताः; तेभ्योऽपि षड्भिर्दिवसैरेकविंशत्या च मुहूर्त्तैरार्द्रानक्षत्रं शुद्धं, शेषास्तिष्ठन्ति द्वादश दिवसा एकविंशतिर्मुहूर्त्ताः, एतावान् कालस्तदानीं पुनर्वसुनक्षत्रं प्रविष्टस्य सूर्यस्याभवत्, इह यन्नक्षत्रमहोरात्रं कालं यावच्चन्द्रेण सह योगमुपारूढं वर्त्तते तस्य सूर्येण सह यावन्तं कालं योगस्तस्य त्रिंशत्तमभागप्रमाण एकः सूर्यमुहूर्त्तः, स च त्रयोदश मुहूर्त्ताः एकस्य च मुहूर्त्तस्य चतुर्विंशतिर्द्वाषष्टिभागाः एकस्य च द्वाषष्टिभागस्य सप्तषष्टिच्छिन्नस्य किंचित्समाधिकाः सार्द्धास्त्रिपंचाशद्भागाः, एवंप्रमाणाश्च मुहूर्त्ता अर्द्धक्षेत्राणां पंचदश समक्षेत्राणां त्रिंशत् द्व्यर्द्धक्षेत्राणां पंचचत्वारिंशत्, तत्र द्वादशभिर्दिनैरेकविंशत्या च मुहूर्त्तैर्ये

ज्योतिष्करण्डे श्रीमलयगिरीयायां ८ नक्षत्रचन्द्रयोगः ॥ ९७ ॥

चतुष्पंचाशदधिकशतत्रयस्योपरि द्वादश द्वाषष्टिभागाश्चन्द्रसंवत्सरसत्कास्ते चाष्टाविंशतिसंख्याः किंचित्समधिकाः सूर्यमुहूर्त्ता भवन्ति, शेषास्तु किंचित्समधिकाः एवंप्रमाणाः सूर्यमुहूर्त्ताः षोडश तिष्ठन्ति तेन, यदुच्यते सूर्यप्रज्ञप्तौ-'जे णं दोचस्स संवच्छरस्स आई से णं पढमस्स चंदसंवच्छरस्स पज्जवसाणे अणंतरपच्छाकडे समए, तं समयं च णं चंदे केणं नक्खत्तेणं जोएइ ?, ता उत्तराहिं आसाढाहिं, उत्तराणं आसाढाणं छव्वीसं मुहुत्ता छव्वीसं च बावट्ठीभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठीहा छेत्ता चउपण्णं चुण्णिया भागा सेसा, तंसमयं च णं सूरे केणं नक्खत्तेणं जोएइ ? ता पुणव्वसुणा, पुणव्वसुस्स सोलस मुहुत्ता अट्ठ य बावट्ठिभागं च सत्तट्ठिहा छित्ता वीसं चुण्णिया भागा सेसा" इति ॥१७०॥ संप्रत्यर्द्धक्षेत्रसमक्षेत्रद्व्यर्द्धक्षेत्राणां नक्षत्राणां सूर्ययोगविषयकालपरिमाणज्ञापनार्थं करणमाह—

चन्द्रात् सूर्ययोगज्ञाने करणं

नक्खत्तचंदजोगे नियमा सत्तट्ठिए पडुप्पन्ने । पण्णेण सएण भए लद्धं सूरस्स सो जोगो ॥१७१॥

नक्षत्राणां-अर्धक्षेत्रादीनां यावत्प्रमाणो योगः स सप्तषष्ठ्या 'नियमात्' निश्चयेन प्रत्युत्पद्यत इत्यर्थः, तस्मिंश्चन्द्रनक्षत्रयोगे सप्तषष्ठ्या प्रत्युत्पन्ने 'पंचाशेन' पंचाशदधिकेन शतेन 'भजेत्' भागहारं कुर्यात्, भागे हृते यल्लब्धं स तावत्कालप्रमाणः सूर्यस्य योगः। इयमत्र भावना-कोऽपि पृच्छति-यस्मिन् नक्षत्रे पंचदश मुहूर्त्तानवतिष्ठते चन्द्रस्तत्र सूर्यः कियन्तं कालमवस्थानं करोति ?, तत्र पंचदश सप्तषष्ठ्या गुण्यन्ते, जातं पंचोत्तरं सहस्रं १००५, तस्य पंचाशदधिकेन शतेन भागो ह्रियते, लब्धाः षड् अहोरात्राः, शेषं तिष्ठति पंचोत्तरं शतं, ततो मुहूर्त्तानयनाय छेदराशेः पंचाशदधिकशतरूपस्य त्रिंशता भागहरणं, लब्धाः पंच, तैः पंचोत्तरशतस्य भागे हृते लब्धा एकविंशतिर्मुहूर्त्ताः, एतावानर्द्धक्षेत्राणां प्रत्येकं सूर्येण समं योगः, तथा समक्षेत्राणां त्रिंशन्मुहूर्त्ताश्चन्द्रयोगप्रमाणं, ततस्त्रिंशत्

सप्तषष्ठ्या गुण्यते, जाते द्वे सहस्रे दशोत्तरे २०१०, तेषां पंचाशदधिकेन शतेन भागो ह्रियते, लब्धास्त्रयोदशाहोरात्राः, शेषास्तिष्ठन्ति षष्टिः, ततो मुहूर्त्तानयनाय छेदराशेस्त्रिंशता भागहरणं, स्थिताः पंच, तैः षष्टेर्भागो ह्रियते, लब्धा द्वादश मुहूर्त्ताः, एतावान् समक्षेत्राणां प्रत्येकं सूर्येण सह योगः, तथा द्व्यर्द्धक्षेत्राणां पंचचत्वारिंशन्मुहूर्त्ताश्चन्द्रयोगः, पंचचत्वारिंशत् सप्तषष्ठ्या गुण्यते, जातानि त्रीणि सहस्राणि पंचदशोत्तराणि ३०१५, तेषां पंचाशदधिकेन शतेन भागो ह्रियते, लब्धा विंशतिरहोरात्राः, शेषास्तिष्ठन्ति पंचदश, ततो मुहूर्त्तानयनाय छेदराशेस्त्रिंशता भागहरणं, स्थिताः पंच, तैः पंचदशानां भागे हृते लब्धास्त्रयो मुहूर्त्ताः, एतावानेव द्व्यर्द्धक्षेत्राणां प्रत्येकं सूर्येण समं योगः ॥१७१॥ साम्प्रतं यथा सूर्ययोगपरिमाणदर्शनतश्चन्द्रयोगपरिमाणं ज्ञातं भवति तथा प्रतिपादयति-

नक्खत्तसूरजोगो मुहुत्तरासीकओ उ पंचगुणो । सत्तट्ठीए विभत्तो लद्धो चंदस्स सो जोगो ॥ १७२ ॥

नक्षत्राणां-अर्द्धक्षेत्रादीनां यः सूर्येण सह योगः स मुहूर्त्तराशीक्रियते, कृत्वा च पंचभिर्गुण्यते, ततः सप्तषष्ठ्या भागे हृते यल्लब्धं स चन्द्रस्य योगः, अत्रापीयं भावना-कोऽपि शिष्यः पृच्छति-यत्र सूर्यः षड् दिवसानेकविंशतिं च मुहूर्त्तानवतिष्ठते तत्र चन्द्रः कियन्तं कालं तिष्ठति ? इति, तत्र मुहूर्त्तराशिकरणार्थं षड् दिवसास्त्रिंशता गुण्यन्ते, गुणयित्वा चोपर्येकविंशतिर्मुहूर्त्ताः प्रक्षिप्यन्ते, जाते द्वे शते एकोत्तरे २०१, ते पंचभिर्गुण्यन्ते, जातं पंचोत्तरं सहस्रं १००५, तस्य सप्तषष्ठ्या भागे हृते लब्धाः पंचदश मुहूर्त्ताः, एतावानर्द्धक्षेत्राणां प्रत्येकं चन्द्रेण समं योगः, तथा समक्षेत्राणां सूर्ययोगस्त्रयोदश दिवसा द्वादश मुहूर्त्ताः, तत्र दिवससंख्या मुहूर्त्तकरणार्थं त्रिंशता गुण्यते, जातानि त्रीणि शतानि नवत्यधिकानि ३९०, उपरितनाश्च द्वादश मुहूर्त्तास्तत्र प्रक्षिप्यन्ते, जातानि चत्वारि

शतानि द्व्युत्तराणि ४०२, तानि पंचभिर्गुण्यन्ते, जाते द्वे सहस्रे दशोत्तरे २०१०, तेषां सप्तषष्ट्या भागे हृते लब्धास्त्रिंशन्मुहूर्त्ताः ३०, एतावान् समक्षेत्राणां प्रत्येकं चन्द्रयोगः, तथा द्व्यर्द्धक्षेत्राणां सूर्ययोगो विंशतिरहोरात्रास्त्रयो मुहूर्त्ताः, तत्राहोरात्रसंख्या मुहूर्त्तकरणार्थं त्रिंशता गुण्यते, जातानि षट् शतानि, उपरितनाश्च त्रयो मुहूर्त्तास्तत्र प्रक्षिप्यन्ते, जातानि षट् शतानि त्र्युत्तराणि ६०३, तानि पंचभिर्गुण्यन्ते, जातानि त्रीणि सहस्राणि पंचदशोत्तराणि ३०१५, तेषां सप्तषष्ट्या भागे हृते लब्धाः पंचचत्वारिंशन्मुहूर्त्ताः ४५, एतावान् द्व्यर्द्धक्षेत्राणां प्रत्येकं चन्द्रेण सह योगः ॥ १७२ ॥ सम्प्रत्युपसंहारमाह-

नक्खत्ताणं जोगा चंदाइच्चेसु करणसंजुत्ता । भणिया

नक्षत्राणां चन्द्रादित्येषु-चन्द्रविषये आदित्यविषये च योगाः-करणसंयुक्ता भणिताः-प्रतिपादिताः ॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां नक्षत्रयोगप्रतिपादकं नवमं प्राभृतं समाप्तम् ॥

तदेवमुक्तं नवमं प्राभृतं, सम्प्रति मण्डलविभागप्रतिपादकं दशमं प्राभृतं वक्तुकाम आह-

सुणाहि एत्तो पविभागं मंडलाणं तु ॥ १७३

अत ऊर्ध्वं चन्द्रमण्डलानां प्रविभागं च मे यथाऽऽगमं प्रतिपादयतः शृणु ॥ तत्र मण्डलप्रविभागोऽस्मिन् शास्त्रे जम्बूद्वीपगतः प्रतिपाद्य इति प्रथमतो जम्बूद्वीपवक्तव्यतामाह-

इणमो उ समुद्दिट्ठो जंबुद्दीवो रहंगसंठाणो । विक्खंभ सयसहस्सं जोयणाणं भवे एक्कं ॥१७४॥

सप्तषष्ट्या गुण्यते, जाते द्वे सहस्रे दशोत्तरे २०१०, तेषां पंचाशदधिकेन शतेन भागो ह्रियते, लब्धास्त्रयोदशाहोरात्राः, शेषास्तिष्ठन्ति षष्टिः, ततो मुहूर्त्तानयनाय छेदराशेस्त्रिंशता भागहरणं, स्थिताः पंच, तैः षष्टेर्भागो ह्रियते, लब्धा द्वादश मुहूर्त्ताः, एतावान् समक्षेत्राणां प्रत्येकं सूर्येण सह योगः, तथा द्व्यर्द्धक्षेत्राणां पंचचत्वारिंशन्मुहूर्त्ताश्चन्द्रयोगः, पंचचत्वारिंशत् सप्तषष्ट्या गुण्यते, जातानि त्रीणि सहस्राणि पंचदशोत्तराणि ३०१५, तेषां पंचाशदधिकेन शतेन भागो ह्रियते, लब्धा विंशतिरहोरात्राः, शेषास्तिष्ठन्ति पंचदश, ततो मुहूर्त्तानयनाय छेदराशेस्त्रिंशता भागहरणं, स्थिताः पंच, तैः पंचदशानां भागे हृते लब्धास्त्रयो मुहूर्त्ताः, एतावानेव द्व्यर्द्धक्षेत्राणां प्रत्येकं सूर्येण समं योगः ॥१७१॥ साम्प्रतं यथा सूर्ययोगपरिमाणदर्शनतश्चन्द्रयोगपरिमाणं ज्ञातं भवति तथा प्रतिपादयति-

नक्खत्तसूरजोगो मुहुत्तरासीकओ उ पंचगुणो । सत्तट्ठीए विभत्तो लद्धो चंदस्स सो जोगो ॥ १७२ ॥

नक्षत्राणां-अर्द्धक्षेत्रादीनां यः सूर्येण सह योगः स मुहूर्त्तराशीक्रियते, कृत्वा च पंचभिर्गुण्यते, ततः सप्तषष्ट्या भागे हृते यल्लब्धं स चन्द्रस्य योगः, अत्रापीयं भावना-कोऽपि शिष्यः पृच्छति-यत्र सूर्यः षड् दिवसानेकविंशतिं च मुहूर्त्तानवतिष्ठते तत्र चन्द्रः कियन्तं कालं तिष्ठति ? इति, तत्र मुहूर्त्तराशिकरणार्थं षड् दिवसास्त्रिंशता गुण्यन्ते, गुणयित्वा चोपर्येकविंशतिर्मुहूर्त्ताः प्रक्षिप्यन्ते, जाते द्वे शते एकोत्तरे २०१, ते पंचभिर्गुण्यन्ते, जातं पंचोत्तरं सहस्रं १००५, तस्य सप्तषष्ट्या भागे हृते लब्धाः पंचदश मुहूर्त्ताः, एतावानर्द्धक्षेत्राणां प्रत्येकं चन्द्रेण समं योगः, तथा समक्षेत्राणां सूर्ययोगस्त्रयोदश दिवसा द्वादश मुहूर्त्ताः, तत्र दिवससंख्या मुहूर्त्तकरणार्थं त्रिंशता गुण्यते, जातानि त्रीणि शतानि नवत्यधिकानि ३९०, उपरितनाश्च द्वादश मुहूर्त्तास्तत्र प्रक्षिप्यन्ते, जातानि चत्वारि

वासा वासहरावि य हवंति पुव्वावरायता सव्वे । भरहं दक्खिणपासे उत्तरतो होइ एरवयं ॥ १७७ ॥

यानि वर्षाणि भरतादीनि ये च वर्षधराः क्षुल्लहिमवदादयः एतानि सर्वाण्यपि भवन्ति 'पूर्वापरायतानि' पूर्वापरतया दीर्घाणि, सामर्थ्यात्तु दक्षिणोत्तरतो विस्तीर्णानि, तत्र 'भरतं' भरतक्षेत्रं जम्बूद्वीपस्य दक्षिणपार्श्वे भवति 'उत्तरतः' उत्तरपार्श्वे ऐरवतम्, अमीषां च वर्षाणां वर्षधराणां च नामार्थो यथा क्षेत्रसमासटीकायामभिहितस्तथा द्रष्टव्यः ॥ १७७ ॥ सम्प्रति वर्षवर्षधराणां विस्तारप्रतिपादनार्थमाह-

भरहेरवयप्पभिई दुगुणादुगुणो उ होइ विक्खंभो । वासावासहराणं जावइ(य) वासं विदेहित्ति ॥ १७८ ॥

भरतैरावतप्रभृतीनां, किमुक्तं भवति ?-जम्बूद्वीपस्य दक्षिणपार्श्वे भरतादीनामुत्तराभिमुखानां उत्तरपार्श्वे ऐरवतादीनां दक्षिणाभिमुखानां वर्षाणां वर्षधराणां च विष्कम्भः पूर्वस्माद् द्विगुणो द्विगुणस्तावदवसेयो यावदुभयेषां वर्षं विदेहा इति, इयमत्र भावना-भरतैरावतापेक्षया द्विगुणविष्कम्भौ क्षुल्लहिमवच्छिखरिणौ, ताभ्यामपि द्विगुणविष्कम्भे हैमवतैरण्यवतवर्षे, ताभ्यामपि द्विगुणविष्कम्भौ महाहिमवद्रुक्मिपर्वतौ, ताभ्यामपि हरिवर्षरम्यकवर्षे द्विगुणविष्कम्भे, ततो निषधनीलवन्तौ द्विगुणविष्कम्भौ, ताभ्यामपि द्विगुणविष्कम्भं महाविदेहाभिधं वर्षमिति ॥ १७८ ॥ सम्प्रति नियतभरतादिविष्कम्भप्रतिपादनार्थमुपक्रम्यते-इह भरतक्षेत्रं प्रथममित्येकको भागहारः, क्षुल्लहिमवान् ततो द्विगुणविष्कम्भ इति द्वौ भागहारौ, एवं हैमवतवर्षे चत्वारो महाहिमवत्यष्टौ हरिवर्षे षोडश निषधे द्वात्रिंशत्, एते च सर्वेऽप्येकत्र मिलिता जातास्त्रिषष्टिः ६३, एवमुत्तरत ऐरवतादारभ्य भागहाराणां त्रिषष्टिः, उभयमीलने च जातं षड्विंशं शतं १२६, महा-

अयं प्रत्यक्षत उपलभ्यमानो जम्बूद्वीपस्तीर्थकरगणधरैः समुद्दिष्टः- कथितो 'रथाङ्गसंस्थानो' रथाङ्ग-चक्रं तस्येव संस्थानं-आकारो यस्य स तथा, परिपूर्णशशाङ्कमण्डलमिव वृत्त इत्यर्थः, तस्य विष्कम्भो योजनानां प्रमाणांगुलनिष्पन्नानामेकं शतसहस्रं भवति, उपलक्षणमेतत् तेनायामोऽपि तस्य शतसहस्रं भवतीत्यवसेयं, वृत्तत्वात्, अस्मिंश्च जम्बूद्वीपे भरतादीनि क्षेत्राणि वर्त्तन्ते ततस्तानि प्रतिपादयन्नाह-

भरहं तह हेमवयं हरिवासं तह विदेहवासं च । रम्मग हेरण्णवतं एरवयं सत्तमं वासं ॥ १७५ ॥

अमूनि क्षेत्राण्यत्रत्यं प्रज्ञापकमपेक्ष्यानेन क्रमेण व्यवस्थितानि, तद्यथा-प्रथमं भरतं-भरतक्षेत्रं, तच्च प्रत्यक्षत उपलभ्यमानं, तत एतदनन्तरमुत्तरतो द्वितीयं हैमवतं क्षेत्रं, तस्याप्युत्तरतोऽनन्तरं तृतीयं हरिवर्षक्षेत्रं, तस्याप्युत्तरतश्चतुर्थं महाविदेहवर्षं, पंचमं अतोऽपि परतोऽनन्तरं रम्यकनामकं, तदनन्तरं तस्योत्तरतः षष्ठं हैरण्यवतं, तस्यापि परत उत्तरेण सप्तममैरवतामिति ॥ १७५ ॥ सम्प्रति वर्षधरप्रतिपादनार्थमाह-

चुल्लमहाहिमवंतो निसढो तह नीलवंत रुप्पी य । सिहरी य नाम सेलो छव्वासहरा भवंतेए ॥ १७६ ॥

जम्बूद्वीपे एते षड् 'वर्षधराः' वर्षधरपर्वता भवन्ति,तद्यथा-प्रथमो भरतक्षेत्रस्यानन्तरतः क्षुल्लहिमवान्, तस्यापि परत उत्तरतो द्वितीयो महाहिमवान्, तस्यापि परतो निषधस्तृतीयः, तस्यापि परत उत्तरेण चतुर्थो नीलवान्,ततोऽपि परत उत्तरेण पंचमो रुक्मी, तस्यापि परतः षष्ठः शिखरीति ॥ १७६ ॥ सम्प्रति वर्षाणां वर्षधराणां च स्वरूपं प्रतिपादयति-

वासा वासहराविय हवंति पुव्वावरायता सव्वे । भरहं दक्खिणपासे उत्तरतो होइ एरवयं ॥ १७७ ॥

यानि वर्षाणि भरतादीनि ये च वर्षधराः क्षुल्लहिमवदादयः एतानि सर्वाण्यपि भवन्ति 'पूर्वापरायतानि' पूर्वापरतया दीर्घाणि, सामर्थ्यात्तु दक्षिणोत्तरतो विस्तीर्णानि, तत्र 'भरतं' भरतक्षेत्रं जम्बूद्वीपस्य दक्षिणपार्श्वे भवति 'उत्तरतः' उत्तरपार्श्वे ऐरवतम्, अमीषां च वर्षाणां वर्षधराणां च नामान्वर्थो यथा क्षेत्रसमासटीकायामभिहितस्तथा द्रष्टव्यः ॥ १७७ ॥ सम्प्रति वर्षवर्षधराणां विस्तारप्रतिपादनार्थमाह-

भरहेरवयप्पभिई दुगुणादुगुणो उ होइ विक्खंभो । वासावासहराणं जाव(य) वासं विदेहित्ति ॥ १७८ ॥

भरतैरवतप्रभृतीनां, किमुक्तं भवति ?-जम्बूद्वीपस्य दक्षिणपार्श्वे भरतादीनामुत्तराभिमुखानां उत्तरपार्श्वे ऐरवतादीनां दक्षिणाभिमुखानां वर्षाणां वर्षधराणां च विष्कम्भः पूर्वस्माद् द्विगुणो द्विगुणस्तावदवसेयो यावदुभयेषां वर्षं विदेहा इति, इयमत्र भावना-भरतैरावतापेक्षया द्विगुणविष्कम्भौ क्षुल्लहिमवच्छिखरिणौ, ताभ्यामपि द्विगुणविष्कम्भे हैमवतैरण्यवतवर्षे, ताभ्यामपि द्विगुणविष्कम्भौ महाहिमवद्रुक्मिपर्वतौ, ताभ्यामपि हरिवर्षरम्यकवर्षे द्विगुणविष्कम्भे, ततो निषधनीलवन्तौ द्विगुणविष्कम्भौ, ताभ्यामपि द्विगुणविष्कम्भं महाविदेहाभिधं वर्षमिति ॥१७८॥ सम्प्रति नियतभरतादिविष्कम्भप्रतिपादनार्थमुपक्रम्यते-इह भरतक्षेत्रं प्रथममित्येकको भागहारः, क्षुल्लहिमवान् ततो द्विगुणविष्कम्भ इति द्वौ भागहारौ, एवं हैमवतवर्षे चत्वारो महाहिमवत्यष्टौ हरिवर्षे षोडश निषधे द्वात्रिंशत्, एते च सर्वेऽप्येकत्र मिलिता जातास्त्रिषष्टिः ६३, एवमुत्तरत ऐरवतादारभ्य भागहाराणां त्रिषष्टिः, उभयमीलने च जातं षड्विंशं शतं १२६, महा-

विदेहक्षेत्रे भागहारश्चतुःषष्टिः, तन्मीलने जातं नवत्यधिकं शतम् १९०, एवं भागहारस्य निष्पत्तिः, ततो यस्मिन् क्षेत्रे विष्कम्भो ज्ञातुमिष्यते तस्मिन् क्षेत्रे यावान् भागहार उपदर्शितस्तावत्प्रमाणेन राशिना जम्बूद्वीपविष्कम्भो गुण्यते, गुणयित्वा च नवत्यधिकेन शतेन भागहारकरणं, तत आगच्छति तस्मिन् क्षेत्रे प्रतिनियतं विष्कम्भपरिमाणमिति, तत्र जम्बूद्वीपस्य विष्कम्भो योजनमेकं लक्षं, तदेकेन गुण्यते, एकेन च गुणितं तदेव भवतीति जातमेकं लक्षं, तस्य नवत्यधिकेन शतेन भागो ह्रियते, लब्धानि योजनानां पंच शतानि षड्विंशत्यधिकानि, शेषस्य राशेश्छेदराशिगतेन शून्येन सहापवर्त्तना क्रियते, लब्धा एकोनविंशतिभागरूपाः षड् कलाः, एतावत्परिमाणो भरतक्षेत्रस्य विष्कम्भः,तथाचाह—

पंचेव जोयणसया छव्वीसा होंति भरहविक्खंभो । छच्चेव य होंति कला एगूणवीसेण छेएणं ॥ १७९ ॥

सुगमा ॥ तथा जम्बूद्वीपविष्कम्भो योजनलक्षप्रमाणः क्षुल्लहिमवद्विष्कम्भानयनाय द्विकेन गुण्यते, जाते द्वे लक्षे, तयोर्नवत्यधिकेन शतेन भागो ह्रियते, लब्धानि दश योजनशतानि द्विपंचाशदधिकानि, कलाश्चैकोनविंशतिरूपा द्वादश, एतावान् हिमवद्वर्षधरपर्वतस्य विष्कम्भः,तथाचोक्तं-"दस सय बावन्नहिया बारस य कलाउ हिमवन्ते।" एवं सर्वेष्वपि क्षेत्रेषु यथोक्तं विष्कम्भपरिमाणमानेतव्यं, तत्र हैमवते वर्षे विष्कम्भपरिमाणमेकविंशतिः शतानि पंचाधिकानि पंच कलाः २१०५-५।१९ दशाधिकानि द्विचत्वारिंशच्छतानि दश च कला महाहिमवति ४२१०-१०।१९ एकविंशत्यधिकानि चतुरशीतिशतानि एका च कला हरिवर्षे ८४२१-१।१९, षोडश सहस्राणि अष्टौ शतानि द्विचत्वारिंशदधिकानि योजनानि द्वे च कले निषधपर्वते १६८४२-२।१९, त्रयस्त्रिंशत्सहस्राणि षड् शतानि

चतुरशीत्यधिकानि योजनानां चतस्रः कला इति विदेहविष्कम्भः ३३६८४-४।१९, एवं ऐरावतादीनामपि विष्कम्भो भावनीयः-, तद्यथा-पंच योजनशतानि षड्विंशत्यधिकानि षट् कला इत्यैरावतविष्कम्भः ५२६-६।१९ दश शतानि द्विपंचाशदधिकानि योजनानां द्वादश च कला इति शिखरिणि १०५२-१२।१९, पंचाधिकानि योजनानामेकविंशतिः शतानि पंच कलाश्च हैरण्यवतवर्षे २१०५-५।१९ दशाधिकानि द्विचत्वारिंशच्छतानि योजनानां दश च कला इति रुक्मिपर्वते ४२१०-१०।१९, एकविंशत्यधिकानि चतुरशीतिः शतानि योजनानामेकश्चैकोनविंशतिभाग इति विष्कम्भो रम्यकक्षेत्रे ८४२१-१।१९, षोडश सहस्राण्यष्टौ शतानि द्विचत्वारिंशदधिकानि द्वौ चैकोनविंशतिभागौ नीलवति वर्षधरपर्वते १६८४२-२।१९ ॥१७९॥ एतानि भरतादीनि क्षेत्राण्यारोपितचापाकाराणि ततः सम्प्रति जीवानयनार्थं करणमाह—

ओगाहूणं विक्खंभो उ उग्गाहसंगुणं कुज्जा । चउहिं गुणियस्स मूलं मंडलखेत्तस्स अवगाहो ॥१८०॥

अवगाहेन-विवक्षितभरतादिक्षेत्रसम्बन्धिना विस्तारेण ऊनं 'विष्कम्भं' जम्बूद्वीपविष्कम्भं कलारूपमेकोनविंशतिलक्षप्रमाणं 'मो य' इति पादपूरणे 'अवगाहसंगुणम्' अवगाहो-विवक्षितभरतादिक्षेत्रसम्बन्धी विस्तारो यथोक्तस्वरूपः सम्यग् गुणो-गुणकारो यस्य स तथा तं कुर्यात्, किमुक्तं भवति ?- येनावगाहेन ऊनः कृतस्तेन गुणितं कुर्यात् , तस्य विवक्षितावगाहगुणितस्य भूयोऽपि चतुर्भिर्गुणितस्य यन्मूलं स 'मण्डलक्षेत्रस्य' वृत्तक्षेत्रस्य प्रस्तावादिह जम्बूद्वीपस्य सम्बन्धिनो विवक्षितस्यैकदेशस्य भरतादेरारोपितधनुराकारस्य जीवा-प्रत्यंचा भवति, तत्र भरतजीवायामिदं करणं भाव्यते-तत्र- भरतस्य विस्तारः पंच योजनशतानि षड्विंशत्यधिकानि षट् कला-एकोन-

विंशतिभागरूपाः, तत्र पंच शतानि षड्विंशत्यधिकानि कलाकरणार्थमेकोनविंशत्या गुण्यन्ते, गुणयित्वा चोपरितन्यः षट् कलाः प्रक्षिप्यन्ते, जातानि दश सहस्राणि, तैर्जम्बूद्वीपविष्कम्भः कलारूप एकोनविंशतिलक्षप्रमाण ऊनः क्रियते, जातं शेषमष्टादश लक्षा नवतिः सहस्राणि १८९००००, एतद् यथोक्तपरिमाणेन विस्तारेण १०००० गुण्यते, गुणिते च सति जात एककोऽष्टको नवकः अष्टौ शून्यानि १८९००००००००, एष राशिर्भूयश्चतुर्भिर्गुण्यते, जाताः सप्तकः पंचकः षट्कोऽष्टौ च शून्यानि ७५६००००००००, अस्य वर्गमूलानयने लब्धो द्विकः सप्तकश्चतुष्को नवकः पंचकश्चतुष्कः २७४९५४, शेषमुद्धरति-द्विको नवकः सप्तकोऽष्टकोऽष्टकश्चतुष्कः २९७८८४, छेदराशिस्तु पंचकश्चतुष्को नवको नवकः शून्यमष्टौ ५४९९०८, वर्गमूललब्धस्य तु कलाराशेर्योजनानयनार्थमेकोनविंशत्या भागो ह्रियते, लब्धानि योजनानां चतुर्दश सहस्राणि चत्वारि शतान्येकसप्तत्याधिकानि कलाश्च पंच, उद्धरितकलाराश्यपेक्षया किंचिदूनैवकला लभ्यत इति षट् कलाः किंचिदूना द्रष्टव्याः, एतावती भरतक्षेत्रस्य जीवा, उक्तं च- 'चोद्दस य सहस्साइं चत्तारि सयाइं एगसयराइं । भरहुत्तरद्धजीवा छच्च कला ऊणिया किंचि ॥१॥" एवं शेषाणामपि क्षेत्राणां जीवा आनेतव्याः ॥१८०॥ सम्प्रति धनुःपृष्ठानयनाय करणमाह—

उसुवग्गं छग्गुणियं जीवावग्गंमि पक्खिवित्ताणं । जं तस्स वग्गमूलं तं धणुपट्ठं वियाणाहि ॥ १८१ ॥

इषुः-भरतादीनां सम्बन्धी बाणस्तस्य वर्गस्तमिषुवर्गं 'षड्गुणितं' षड्भिस्ताडितं जीवावर्गे 'प्रक्षिप्य' संयोज्य तस्य राशेर्यद् वर्गमूलं लभ्यते तद् विवक्षितस्य भरतादेर्धनुःपृष्ठं-धनुःपृष्ठपरिमाणं जानीहि, तदेतद् भरतक्षेत्रे भाव्यते-भरतस्य कलारूप इषुः सहस्रदश- ॥१०४॥

रूपो वर्ग्यते, वर्गितश्च सन् जात एककोऽष्टौ च शून्यानि १०००००००, एष भूयः षड्भिर्गुण्यते, जातः षट्कोऽष्टौ च शून्यानि ६००००००००, एष राशिर्भरतसत्के जीवावर्गे सप्तकः पंचकः षट्कोऽष्टौ च शून्यानि ७५६०००००००० इत्येवंरूपे प्रक्षिप्यते, ततो जातो राशिरेवंरूपः-सप्तकः षट्को द्विकोऽष्टौ च शून्यानि ७६२००००००००, अस्य वर्गमूलानयने लब्धो द्विकः सप्तकः षट्कः शून्यं चतुष्कस्त्रिकः २७६०४३, शेषस्तु राशिरुद्धरति-द्विकः षट्को द्विक एककः पंचक एककः २६२१५१, छेदराशिः पंचकः पंचको द्विकः शून्यमष्टकः षट्कः ५५२०८६, वर्गमूललब्धस्तु कलाराशिर्योजनकरणार्थमेकोनविंशत्या विभज्यते, लब्धानि योजनानां चतुर्दश सहस्राणि पंचशतान्यष्टाविंशत्यधिकानि कलाश्चैकादश १४५२८ क. ११ एतावद् भरतक्षेत्रस्य धनुःपृष्ठं, तथा चोक्तं-"चउदस य सहस्साइं सयाइं पंचेव अट्ठवीसाइं । एक्कारस य कलाओ धणुपट्ठं भरहखित्तस्स ॥१॥" एवं शेषाणामपि क्षेत्राणां धनुःपृष्ठान्यानेतव्यानि ॥१८१॥ इहेषुवर्गः षड्गुणित इत्युक्तं तत इषोरानयनाय करणमाह-

धणुवग्गाओ नियमा जीवावग्गं विसोहइत्ताणं । सेसस्स य छब्भागे जं मूलं तं उसू होइ ॥ १८२ ॥

'नियमात्' अवश्यन्तया धनुःपृष्ठवर्गाज्जीवावर्गं 'विशोध्य' अपनीय शेषस्य षड्भिर्भागे हृते यन्मूलमागच्छति तत् 'इषुः' इषुपरिमाणं भवति, तत्र भरतक्षेत्रस्य धनुःपृष्ठवर्गः सप्तकः षट्को द्विकोऽष्टौ च शून्यानि ७६२०००००००० तस्माज्जीवावर्गः सप्तकः पंचकः षट्कोऽष्टौ शून्यानि ७५६०००००००० इत्येवंरूपः शोध्यते, शेषं षट्कोऽष्टौ च शून्यानि ६०००००००० तिष्ठति, तस्य षड्भिर्भागे हृते जात एककोऽष्टौ च शून्यानि १०००००००० , एतस्य वर्गमूलानयने लब्धानि दश सहस्राणि कलानां,

तासामेकोनविंशत्या भागे हृते लब्धानि योजनानां पंच शतानि षड्विंशत्यधिकानि षट् कलाः, एतावान् भरतक्षेत्रस्येषुः, एवं सर्वेषामपि क्षेत्राणामिषव आनेतव्याः ॥१८२॥ सम्प्रति प्रकारान्तरेण जीवानयनाय करणमाह-

छग्गुणमुसुस्स वग्गं धणुवग्गाओ विसोहइत्ताणं । सेसस्स वग्गमूलं तं खलु जीवं वियाणाहि ॥ १८३ ॥

इषोः-भरतादेर्विवक्षितक्षेत्रस्य सम्बन्धिनो वर्गं षड्गुणं-षड्भिर्गुणितं सन्तं धनुर्वर्गाद्-विवक्षितभरतादिक्षेत्रसम्बन्धिधनुःपृष्ठवर्गाद्विशोध्य शेषस्य यद्वर्गमूलं लभ्यते तत् खलु जीवां विवक्षितभरतादिक्षेत्रस्य जानीहि, तत्र भरतक्षेत्रस्येषुः कलारूपदशसहस्रप्रमाणस्तस्य वर्गे एककोऽष्टौ शून्यानि १००००००००, एष षड्भिर्गुण्यते, जाताः षट्कोऽष्टौ शून्यानि ६००००००००, अमुं राशिं धनुःपृष्ठवर्गात् सप्तकः षट्को द्विकोऽष्टौ च शून्यानि ७६२०००००००० इत्येवंरूपात् विशोधयेत्, शेषं स्थितं सप्तकः पंचकः षट्कोऽष्टौ च शून्यानि ७५६००००००००, एतस्य वर्गमूलानयने लब्धो द्विकः सप्तकश्चतुष्को नवकः पंचकश्चतुष्कः २७४९५४, शेषमुद्धरति द्विको नवकः सप्तकोऽष्टकोऽष्टकश्चतुष्कः २९७८८४, छेदराशिस्तु पंचकश्चतुष्को नवको नवकः शून्यमष्टौ ५४९९०८, वर्गमूललब्धस्य तु कलाराशेर्योजनानयनार्थमेकोनविंशत्या भागो ह्रियते, लब्धा यथोदितस्वरूपा भरतक्षेत्रस्य जीवा, एवं शेषाणामपि क्षेत्राणां जीवा आनेतव्याः ॥ १८३ ॥ सम्प्रति बाहानयनाय करणमाह--

महया धणुपट्ठातो डहरागं सोहिही धणुह पट्ठं । जं इत्थ हवइ सेसं तस्सऽद्धं निद्दिसे बाहं ॥ १८४ ॥

महतो धनुःपृष्ठात् डहराकं-लघु धनुःपृष्ठं शोधय- स्फेटय, तस्मिन् स्फोटिते सति यदवतिष्ठते शेषं तस्यार्द्धं बाहां निर्दिशेत्,

बाहाया करणं

अर्द्धं बाहात्वेन प्रतिपादयेत्. तत्रेदं करणं भरतक्षेत्रे भाव्यते-इह यत् भरतक्षेत्रस्य धनुःपृष्ठं तन्महत् , तच्च चतुर्दश सहस्राणि पंच शतान्यष्टाविंशत्यधिकानि कलाश्चैकादश १४५२८ क. ११, डहरकं धनुःपृष्ठं वैताढ्यसत्कं, भरतक्षेत्रधनुःपृष्ठापेक्षया तस्याल्पत्वात्, तच्च दश योजनसहस्राणि सप्त शतानि त्रिचत्वारिंशदधिकानि कलाः पंचदश १०७४३ क. १५, ततो महतो धनुःपृष्ठात् डहरकं धनुःपृष्ठं शोध्यते, जातं शेषमिदं-त्रीणि सहस्राणि सप्त शतानि चतुरशीत्यधिकानि योजनानां कलाः पंचदश ३७८४ क. १५, एतस्यार्द्धे लब्धानि योजनानामष्टादश शतानि द्विनवत्यधिकानि कलाः सार्द्धाः सप्त १८९२ क. ७, ११२ एतावत्परिमाणा भरतक्षेत्रस्य पूर्वस्यामपरस्यां च दिशि प्रत्येकं वक्रीभूता बाहा, एवं शेषाणामपि क्षेत्राणां बाहा आनेतव्याः, यदिवा सर्वेष्वपि क्षेत्रेषु यथोदितस्वरूपाणां करणानां प्रत्येकं भावनावगमार्थं क्षेत्रसमासटीका निरीक्षितव्या, तत्र सविस्तरं भणनात्, इह तु ग्रन्थगौरवभयान्न प्रतिक्षेत्रं भावना कृतेति ॥ १८४ ॥ तदेवमुक्तानि सविस्तरं क्षेत्राणि वर्षधराश्च, सम्प्रति जम्बूद्वीपपरिरयगणितपदानयनाय करणद्वयमाह—

विक्खंभवग्गदहगुणकरणी वट्टस्स परिरओ होइ । विक्खंभपायगुणिओ परिरओ तस्स गणियपयं ॥ १८५ ॥

'वृत्तस्य' वृत्तक्षेत्रस्य यो विष्कम्भो-विष्कम्भपरिमाणं तस्य वर्गो विधीयते, वर्गो नाम तेनैव राशिना गुणनं, ततो 'दहगुण' त्ति दशभिर्गुणना, ततः करणिरिति वर्गमूलानयनं, ततो वृत्तस्य परिरयपरिमाणं भवति, तथा तस्य वृत्तस्य परिरयो विष्कम्भस्य पादेन-चतुर्थेनांशेन गुणितो गणितपदं भवति, तत्रेदं करणं जम्बूद्वीपे भाव्यते-जम्बूद्वीपस्य विष्कम्भो योजनशतसहस्रं १००००० , तस्य वर्गो विधीयते, जातान्येककस्य पुरस्ताद्दश शून्यानि १०००००००००० पुनर्दशभिर्गुणनं लब्धमन्यदेकं शून्यमिति जातान्येकादश शून्यानि ॥१०७॥

परिध्यानयने करणं

१०००००००००००, ततो वर्गमूलानयने जातोऽधस्तादयं छेदराशिः-षड् लक्षा द्वात्रिंशत्सहस्राणि चत्वारि शतानि सप्तचत्वारिंशदधिकानि ६३२४४७, अत्र पर्यन्तवृत्तिसप्तमरूपमंकस्थानं मुक्त्वा शेषं तत्सर्वमपि द्विगुणीकृतमासीदित्यर्द्धीक्रियते, लब्धानि त्रीणि शतसहस्राणि षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके ३१६२२७, शेषमुपरिष्टादिदमुद्धरति-चतस्रो लक्षाश्चतुरशीतिः सहस्राणि चत्वारि शतान्येकसप्तत्यधिकानि ४८४४७१, एतानि योजनानि, योजनं च चतुर्भिर्गव्यूतैर्भवति ततो गव्यूतानयनार्थमेष राशिश्चतुर्भिर्गुण्यते, जातान्येकोनविंशतिर्लक्षाणि सप्तत्रिंशत्सहस्राणि अष्टौ शतानि चतुरशीत्यधिकानि १९३७८८४, छेदराशिः स एव प्राक्तनो, नवरमन्त्यमपि सप्तकरूपमंकस्थानं द्विगुणीक्रियते, तत एवंरूपो भवति-षड्ल क्षाणि द्वात्रिंशत्सहस्राणि चत्वारि शतानि चतुष्पंचाशदधिकानि ६३२४५४, अनेनोपरितनराशेर्भागो ह्रियते, लब्धं क्रोशत्रितयं, शेषमुपरिष्टादिदमुद्धरति-चत्वारिंशत्सहस्राणि पंच शतानि द्वाविंशत्यधिकानि ४०५२२, अमूनि गव्यूतानि, गव्यूतं च धनुषां सहस्रद्वयेन भवति, ततो धनुरानयनार्थमयं राशिः सहस्रद्वयेन गुण्यते, जाता अष्टौ कोटयो दश लक्षाश्चतुश्चत्वारिंशत्सहस्राणि ८१०४४०००, छेदराशिः प्राक्तन एव, ततो लब्धमष्टाविंशं धनुःशतं १२८, शेषमुपरिष्टादिदमुद्धरति-एकोननवतिः सहस्राणि अष्टौ शतानि अष्टाशीत्यधिकानि ८९८८८, एतानि च धनूंषि, धनुश्च षण्णवत्यंगुलं, ततोऽयं राशिरंगुलानयनाय षण्णवत्या गुण्यते, जातानि षडशीतिर्लक्षाणि एकोनत्रिंशत्सहस्राणि द्वे शते अष्टचत्वारिंशदधिके ८६२९२४८, छेदराशिः स एव, ततो लब्धानि त्रयोदशांगुलानि, शेषमुपरिष्टादिदं-चतस्रो लक्षाः सप्त सहस्राणि त्रीणि शतानि षट्चत्वारिंशदधिकानि ४०७३४६, अयं राशिरर्द्धांगुलानयनार्थमर्द्धीक्रियते, जाता अष्टौ लक्षाश्चतुर्दश सहस्राणि षट् शतानि द्विनवत्यधिकानि ८१४६९२, छेदराशिः स एव, लब्धमेकमर्द्धांगुलं, शेषमु-

इति-एको लक्षो द्व्यशीतिः सहस्राणि द्वे शते अष्टात्रिंशदधिके १८२२३८, एष जम्बूद्वीपपरिधिः ॥ १८५ ॥ तथा चाह—

जंबुद्दीवे परिरओ तिन्नि य सोलाणि सयसहस्साणि। बे य सया पडिपुण्णा सत्तावीसा समहिया य ॥१८६॥
तिण्णि य कोसा य तहा अट्ठावीसं च धणुसयं एक्कं। तेरस य अंगुलाइं अद्धंगुलयं च सविसेसं ॥१८७॥

इदं गाथाद्वयमपि सुगमं। सम्प्रति गणितपदमानीयते, तत्र जम्बूद्वीपस्य विष्कम्भो योजनशतसहस्रं, तस्य पादः-चतुर्थोंशः पंचविंशतिः सहस्राणि, तेन समस्तोऽपि जम्बूद्वीपपरिरयो गुण्यते, तत्र परिरययोजनास्तिस्रो लक्षाः षोडश सहस्राणि द्वे शते सप्तविंशत्यधिके इत्येवंरूपः पंचविंशतिसहस्रैर्गुण्यते, गुणितश्च सन् एतावान् भवति-सप्तकोटीशतानि नवतिः कोट्यः षट्पंचाशल्लक्षाः पंचसप्ततिः सहस्राणि ७९०५६७५०००, गव्यूतत्रितयमपि पंचविंशतिसहस्रगुणं क्रियते, जातानि पंचसप्ततिः सहस्राणि गव्यूतानां ७५०००, तेषां चतुर्भिर्भागो ह्रियते, लब्धानि योजनानामष्टादश सहस्राणि सप्त शतानि पंचाशदधिकानि १८७५०, एष राशिः पूर्वस्मिन् योजनराशौ प्रक्षिप्यते, ततः धनुषामष्टाविंशं शतं पंचविंशतिसहस्रैर्गुण्यते, जाता द्वात्रिंशल्लक्षाः ३२०००००, अष्टाभिश्च धनुःसहस्रैर्योजनं भवति, ततो योजनानयनार्थमष्टाभिः सहस्रैर्भागो ह्रियते, लब्धानि चत्वारि शतानि ४००, अयमपि पूर्वराशौ प्रक्षिप्यते, अंगुलान्यपि त्रयोदश पंचविंशतिसहस्रगुणानि क्रियन्ते, जातानि त्रीणि लक्षाणि पंचविंशतिः सहस्राण्यधिकानि ३२५०००, अर्धांगुलमपि पंचविंशतिसहस्रैर्गुण्यते, जातान्यर्द्धांगुलानां पंचविंशतिसहस्राणि, तेषामर्द्धे लब्धान्यंगुलानां द्वादश सहस्राणि पंचशताभ्यधिकानि १२५००, तानि पूर्वोक्तेऽगुलराशौ प्रक्षिप्यन्ते, ततोऽगुलराशिः त्रीणि शतसहस्राणि-सप्तत्रिंशत् सहस्राणि पंचशताधिकानि

२३७५००, तत एतेषां धनुरानयनाय षण्णवत्या भागो ह्रियते, लब्धानि धनुषां पंचत्रिंशच्छतानि पंचदशाधिकानि ३५१५, शेषमुद्धरत्यंगुलानां षष्टिः, अस्य च धनूराशेर्गव्यूतानयनाय सहस्रद्वयेन भागो ह्रियते, लब्धमेकं गव्यूतं, शेषमुद्धरति धनुषां पंचदश शतानि पंचदशाधिकानि १५१५, सर्वसंख्यया जातमिदं-योजनानां सप्त कोटिशतानि नवतिकोट्यभ्यधिकानि षट्पंचाशल्लक्षाश्चतुर्नवतिसहस्राणि शतमेकं पंचाशदधिकं, तथा गव्यूतमेकं, तथा धनुषां पंचदश शतानि पंचदशाधिकानि षष्टिः अंगुलानामिति, एतावज्जम्बूद्वीपे गणितपदम्, एतावन्ति योजनप्रमाणानि चतुरस्राणि खण्डानि यथोक्तगव्यूताद्यधिकानि जम्बूद्वीपे भवन्तीत्यर्थः, तथाचाह-'सत्तेव य कोडिसया नउया छप्पन्नसयसहस्साइं । चउणउइं च सहस्सा सयं दिवड्ढं च साहीयं ॥ १ ॥" साधिकत्वप्रतिपादिका चेयं गाथा-"गाउयमेगं पन्नरस धणुसया तह धणूणि पन्नरस । सट्ठिं च अंगुलाइं जंबूदीवस्स गणियपयं ॥१॥ " ॥ १८६-१८७ ॥ तदेवमुक्ता जम्बूद्वीपवक्तव्यता, संप्रति जम्बूद्वीपमध्यगतमेरुवक्तव्यतामाह-

जंबुद्दीवस्स भवे बहुमज्झे सव्वरयणधातुचितो । मेरू नाम नगवरो सुश्लीलो देवराईणं ॥१८८॥

नवनउइं च सहस्सा उव्विद्धो अह सहस्समोगाढो । धरणियले वित्थिण्णो जोयणाणं दससहस्सा ॥ १८९ ॥

अनन्तरोक्तस्वरूपस्य जंबूद्वीपस्य बहुमध्यदेशभागे मेरुर्नामा पर्वतः, स च धरणितलस्योपरि नवनवतिर्योजनसहस्राणि उद्विद्धः-ऊर्ध्वमुच्छ्रितो योजनसहस्रमधो-धरणिमध्ये समवगाढः, तथा धरणितले दशयोजनसहस्राणि विस्तीर्णः उपरि योजनसहस्रं विस्तृतस्तया ममपि लोकानां संस्पर्शी, पुनः कथम्भूतः? इत्याह-'सर्वरत्नधातुचितः' सर्वै रत्नैः सर्वैश्च प्रायः सुवर्णादिधातुभिश्चितो युक्तः, तथाहि-

तस्य मेरोस्त्रीणि काण्डानि, तद्यथा-प्रथमं द्वितीयं तृतीयं, काण्डं नाम विशिष्टपरिमाणानुगता विच्छेदाः, तत्र प्रथमं काण्डं योजनसहस्र-प्रमाणं, तच्च भूमाववगाढं, द्वितीयं त्रिषष्टियोजनसहस्राणि, तच्च समतलभूभागादारभ्य प्रतिपत्तव्यं, तृतीयं षट्त्रिंशद् योजनसहस्राणि, प्रथमं च काण्डं क्वचित्पृथ्वीबहुलं क्वचिदुपलबहुलं क्वचिद्वज्ररत्नबहुलं क्वचित् शर्कराबहुलं च, पृथ्वी च नानाधातुरूपा द्रष्टव्या, द्वितीयं काण्डं क्वचिद्रजतबहुलं क्वचिज्जातरूपबहुलं क्वचिदंकरत्नबहुलं क्वचित्स्फाटिकरत्नबहुलं, तृतीयं पुनरेकाकारं, सर्वात्मना जम्बूनदमयम् उक्तंच-"मंदरस्स णं भंते ! पव्वयस्स कइ कंडा पन्नत्ता ?, गोयमा! तिन्नि कंडा पन्नत्ता, तंजहा- हेट्ठिल्ले कंडे मज्झिल्ले कंडे उवरिमे कंडे । मंदरस्स णं भंते ! पव्वयस्स हिट्ठिल्ले कंडे कइविहे पन्नत्ते?, गोयमा ! चउव्विहे पन्नत्ते, तंजहा-पुढवी उवले वइरे सक्करा । मंदरस्स णं भंते! पव्वयस्स मज्झिल्ले कंडे कइविहे पन्नत्ते?, चउव्विहे पन्नत्ते, तंजहा- अंके फलिहे रयए जायरूवे। मंदरस्स णं भंते ! पव्वयस्स उवरिमे कंडे कइविहे पन्नत्ते ?, गोयमा ! एगागारे, सव्वजंबूणयामए " इति, अतो भवति सर्वरत्नधातुचितः, शिखरे च तस्योपरि सर्ववैडूर्यरत्नमयी चूलिका, सा च चत्वारिंशद्योजनान्युच्चा, मूले विस्तृता द्वादश योजनानि मध्ये अष्टावुपरि चत्वारि, तया च चूलिकया पताकशतपरिकल्पितः शक्रध्वज इव देवानां प्रतिभासते, पुनः कथम्भूतः ? इत्याह-'सुक्रीडो देवराजानां, सुष्ठु-अतिशयेन परमरमणीयतया क्रीड्यते इति सुक्रीडः, परमं क्रीडास्थानं देवराजानां, तस्मिश्च मंदरपर्वते चत्वारि वनानि तिस्रो मेखलास्तद्यथा-भूमौ भद्रशालवनं समोच्चभूमितलादूर्ध्वं पंचयोजनशतान्युत्प्लुत्यात्रान्तरे पंचयोजनशतविस्तीर्णा प्रथममेखला, तत्र नन्दनवनं, ततो नन्दनवनादूर्ध्वं त्रिषष्टियोजनसहस्राण्यूर्ध्वमुत्प्लुत्यात्रान्तरे पंचयोजनशतविस्तृता द्वितीया मेखला, तत्र सौमनसं वनं, ततोऽपि सौमनसवनादूर्ध्वं षट्त्रिंशद्योजनसहस्राण्युत्प्लुत्यात्रान्तरे मेरोरुपरितनं तलं, तच्च योजनसहस्रविस्तारं, तत्र च चूलि-

कायाः सर्वासु दिक्षु पण्डकवनं, तस्मिंश्च पण्डकवने पंचयोजनशतायामा अर्द्धतृतीययोजनशतविस्तृताश्चतस्रो महाशिलाः, तासु च शिलासु तीर्थकराभिषेकयोग्यानि पंचधनुःशतोत्सेधानि परमरम्याणि शाश्वतिकानि सिंहासनानि ॥ १८८-१८९ ॥ साम्प्रतमुपरितलादधोऽवतरणे ईप्सितक्षेत्रे विष्कम्भपरिमाणज्ञापनार्थं करणमाह-

मेरोर्विष्कम्भ करणं प्रदेश वृद्धौ च

जत्थिच्छसि विक्खंभं मंदरसिहराउ ओवइत्ताणं। इक्कारसहियलद्धो सहस्ससहिओ उ विक्खंभो ॥ १९० ॥

मन्दरपर्वते शिखरादवपत्य यत्र क्वापि विष्कम्भं ज्ञातुमिच्छसि तत्र यदतिक्रान्तं योजनादिकं तस्यैकादशभिर्भागे हृते यल्लब्धं तत्सहस्रसहितं सत् तत्र विष्कम्भः, स च मेरोरुपरितलादधः षट्त्रिंशद्योजनसहस्राण्यवतीर्णः, तत्र किल विष्कम्भो ज्ञातुमिष्ट इति षट्त्रिंशत्सहस्राणि ध्रियेते ३६०००, तेषामेकादशभिर्भागे हृते लब्धानि द्वात्रिंशद् योजनशतानि द्विसप्तत्यधिकानि अष्टौ चैकादशभागाः ३२७२, ८ । ११ एतच्च सहस्रसहितं क्रियते, जातानि द्विचत्वारिंशच्छतानि द्विसप्तत्यधिकान्यष्टौ चैकादशभागा योजनस्य ४२७२,८।११ एतावान् तत्र प्रदेशे बाह्यो गिरिविष्कम्भः, तत्र च प्रदेशे सौमनसं वनं, तच्च चक्रवालतया पंचयोजनशतविस्तारं, तत एकतोऽपि पंचयोजनशतानि वनेन रुद्धान्यपरतोऽपीति योजनसहस्रं बाह्यगिरिविष्कम्भादपनीयते, शेषमन्तर्गिरिविष्कम्भपरिमाणं भवति, तच्च द्वात्रिंशच्छतानि द्विसप्तत्यधिकानि अष्टौ चैकादशभागा योजनस्य ३२७२,८।११, एवं सर्वत्रापि भावनीयं, एतच्च करणं मेखलाद्वयसहिते मेरौ कर्णगत्या द्रष्टव्यं, नान्यथा, अथ केयं कर्णगतिः? इति, उच्यते, अधो मेरोरेकस्मिन् प्रदेशे उपरि च तत्समश्रेण्यवस्थिते मेरोरेव प्रदेशे या दवरिका प्रदीयते सा कर्णगतिः, तत्र च दवरिकाया मेरोश्चापान्तरालं यदपि क्वचितुपलभ्यते

तदपि कर्णगत्या मेरोः सम्बन्धीति विवक्षितत्वात्सर्वत्रैकादशभागहानिः परिभावनीया; ततो न कश्चिद्दोषः; अत्रार्थे च विस्तरार्थिना क्षेत्रसमासटीकाऽनुमर्त्तव्या ॥ १९० ॥ सम्प्रति प्रदेशवृद्धिज्ञापनाय करणमाह–

मूलग्गविसेसंमि उ उस्सयभइयंमि जं भवे लद्धं । सा दहनदीनगाणं पएसवुड्ढी उ सा उभओ ॥ १९१ ॥

मूलविष्कम्भः-आदिविष्कम्भः अग्रविष्कम्भः-उपरितनविष्कम्भः एतयोर्विश्लेषः क्रियते, किमुक्तं भवति?-महतो विष्कम्भपरिमाणात् लघुविष्कम्भपरिमाणमपनीयते, कृते च विश्लेषे उच्छ्रयेण भागो ह्रियते, हृते च भागे यल्लब्धं सा ह्रदात्-पद्मादिह्रदादेर्विनिर्गतानां नदीनां-गंगासिन्धुप्रभृतीनां नगानां च-मेर्वादीनामुभयतः- उभयोः पार्श्वयोः प्रत्येकं वृद्धिरवसेया, तत्र मेरोः प्रस्तुतत्वादिदं करणं मेरोरुपरि भाव्यते, मेरोर्मूलविष्कम्भो दशयोजनसहस्राणि १००००, उपरिविष्कम्भो योजनसहस्रं १०००, एतयोर्विश्लेषे कृते स्थितानि नव सहस्राणि, तेषां नवनवतिसहस्रैर्भागो ह्रियते, तत्र शून्यं शून्येन पातयेदिति न्यायात् उभयोरपि राश्योः शून्यत्रयापवर्तनाज्जात उपरितनो राशिर्नवकोऽधस्तनो नवनवतिः, नवकश्च नवनवतेर्भागं न प्रयच्छतीति नवक एकादशभिर्गुण्यते, जाता नवनवतिः, तस्या नवनवत्या भागे हृते लब्ध एक एकादशभागः, एतावत्यतीते मेरोरुभयोः पार्श्वयोः प्रत्येकं वृद्धिः, इयमत्र भावना-उपरितनशिरोभागादधोऽवतरणे एकादशसु प्रदेशेष्वतिक्रान्तेष्वेकस्य प्रदेशस्य वृद्धिः, एकादशस्वंगुलेष्वेकस्यांगुलस्यैकादशसु गव्यूतेष्वेकस्य गव्यूतस्यैकादशसु योजनेष्वेकस्य योजनस्य वृद्धिरिति, यथा चोपरितनभागादधोऽवतरणे वृद्धिस्तथा मूलादारभ्योर्ध्वमुक्तक्रमेण हानिः प्रतिपत्तव्येति ॥ १९१ ॥ तदेवं मेरुवक्तव्यतामभिधाय सम्प्रति तदवधिसापेक्षां चन्द्रसूर्यादिवक्तव्यतामाह–

चंदा सूरा तारागणा य नक्खत्तगहगणा चेव । तं ते पदक्खिणगई परेंति मेरुं गइरई य ॥ १९२ ॥

चन्द्राः सूर्याः तारागणाः, गणा इति द्वौ चन्द्रौ द्वौ सूर्यौ द्वौ तारागणौ जम्बूद्वीपे चत्वारो लवणसागरे द्वादश धातकीखण्डे द्विचत्वारिंशत्कालोदधौ द्विसप्ततिः पुष्करवरद्वीपार्द्धे इति बहुवचनं, नक्षत्रग्रहगणाश्चेति, अत्र गणशब्दः प्रत्येकमभिसंबध्यते, तद्यथा-ग्रहगणा नक्षत्रगणाश्च, बहुवचनभावना प्रागिवात्राप्यनुसर्त्तव्या, एते सर्वेऽपि मनुष्यक्षेत्रभाविनस्तं-अनन्तरोदितस्वरूपं मेरुं मध्ये कृत्वा 'प्रदक्षिणगतयः' प्रदक्षिणा-प्रादक्षिण्यप्रधाना गतिः-गमनं येषां ते तथा, तथा 'गइरइ'त्ति गतिरतयस्तथाविधनामकर्मोदयमाहात्म्यात् तथाजगत्स्वाभाव्यात् सदा गमनशीलाः 'परियंति' पर्यटन्ति ॥ १९२ ॥ सम्प्रति चन्द्रसूर्याणां मण्डलसंख्यामाह-

पन्नरस मंडलाइं चंदस्स महेसिणो उवदिसंति । चुलसीइं मंडलसयं अणूणगं बिंति सूरस्स ॥ १९३ ॥

'चन्द्रस्य' ज्योतिश्चक्रराजस्य मण्डलानि 'महर्षयः' तीर्थकरगणधरा उपदिशन्ति पंचदश-पञ्चदशसङ्ख्यानि, सूर्यस्य पुनर्ब्रुवते तीर्थकरगणधराः चतुरशीतं-चतुरशीत्यधिकं न न्यूनं-परिपूर्णं मण्डलशतं ॥ १९३ ॥ संप्रति यत्र प्रदेशे जम्बूद्वीपस्योपरि सूर्यस्य सर्वाभ्यन्तरमण्डलं यत्र च प्रदेशे बाह्यं तदेतत्प्रतिपादयन्नाह-

जोयणसयं असीयं अंतो ओगाहिऊण दीवंमि । तस्सुवरिं तु सपरिहिं अब्भिंतरमंडलं रविणो ॥ १९४ ॥

तीसाइं तिन्नि जोयण सयाणि ओगाहिऊण लवणंमि । तस्सुवरिं तु सपरिहिं बाहिरगं मंडलं रविणो ॥ १९५ ॥

जम्बूद्वीपस्यान्तः- मध्ये 'असीयं' अशीत्यधिकं योजनशतमवगाह्य तस्य प्रदेशस्योपरि 'सपरिधि' परिक्षेपसहितमभ्यन्तरं

मण्डलं 'रवेः' सूर्यस्य प्रतिपत्तव्यं, तथा जम्बूद्वीपस्य बहिः 'लवणे' लवणसमुद्रे 'त्रिंशानि' त्रिंशदधिकानि त्रीणि योजनशतान्यवगाह्यात्रान्तरे तस्य प्रदेशस्योपरि सपरिधि रवेर्बाह्यं मण्डलमवसेयम्, एतयोस्तु मण्डलयोरपान्तराले शेषाणि ग्यशीत्यधिकशतसंख्यानि मण्डलानि भवन्ति ॥१९४-१९५॥ सम्प्रति परिरयपरिमाणं सर्वाभ्यन्तरमण्डले प्रतिपादयति-

अभ्यन्तरमंडलादीनां परिधिः

तिन्नेव सयसहस्सा पण्णरस य होंति जोयणसहस्सा। अऊणानवई परिरओ अब्भिंतरमंडले रविणो ॥ १९६ ॥

रवेरभ्यन्तरमण्डले परिरयस्त्रीणि योजनानां शतसहस्राणि पंचदश सहस्राणि एकोननवतिश्च किंचित्समधिकः, एष च परिरयः 'विक्खंभवग्गदहगुणे' त्यादिना करणेन स्वयमानेतव्यः, यदिवा यदेकतोऽपि जंबूद्वीपविष्कम्भादशीत्यधिकं योजनशतमपरतोऽपि, तेषां त्रयाणां शतानां षष्ट्यधिकानां परिरयपरिमाणमेकादश शतान्यष्टाविंशत्यधिकानि ११२८, तानि जम्बूद्वीपपरिरयाच्छोध्यन्ते, ततो यथोक्तं सर्वाभ्यन्तरमण्डलस्य परिरयपरिमाणं भवति, सर्वाभ्यन्तरानन्तरं च द्वितीयं मण्डलमायामविष्कम्भाभ्यां नवनवतिर्योजनसहस्राणि षट् शतानि पंचचत्वारिंशदधिकानि पंचत्रिंशच्चैकषष्टिभागा योजनस्य ९९६४५,३५ । ६१, तथाहि-एकतोऽपि सर्वाभ्यन्तरमण्डलगतानष्टाचत्वारिंशत्संख्याकान् एकषष्टिभागान् द्वे च योजने अपान्तराले विमुच्य स्थितम्, अपरतोऽपि, ततः पंच योजनानि पंचत्रिंशच्चैकषष्टिभागा योजनस्य पूर्वमण्डलविष्कम्भादस्य मण्डलस्य विष्कम्भे परिवर्धते, अस्य च सर्वाभ्यन्तरानन्तरस्य द्वितीयस्य मण्डलस्य परिरयस्त्रीणि शतसहस्राणि पंचदश सहस्राण्येकं शतं सप्तोत्तरं योजनानां ३१५१०७, तथाहि-पूर्वमण्डलविष्कम्भादस्य मण्डलस्य विष्कम्भे पंच योजनानि पंचत्रिंशच्चैकषष्टिभागा योजनस्य परिवर्धते, पंचानां च योजनानां पंचत्रिंश-

ज्योतिष्करण्डे श्रीमलयगिरीयायां वृत्तौ ९ मंडलविभागे ॥११६॥

तत्संख्यैकषष्टिभागाधिकानां परिरयः सप्तदश योजनानि अष्टात्रिंशच्चैकषष्टिभागा योजनस्य समधिकाः, परं व्यवहारतो विवक्ष्यन्ते परिपूर्णान्यष्टादश योजनानि, तानि पूर्वमण्डलपरिरयराशौ यदाऽधिकत्वेन प्रक्षिप्यन्ते तदा यथोक्तं सूर्यप्रज्ञप्त्यादिसंमतं द्वितीयमण्डलपरिमाणं भवति, तथा सर्वाभ्यन्तरात् मण्डलात् तृतीयमण्डलस्यायामविष्कम्भो नवनवतिसहस्राणि षट् शतान्येकपंचाशदधिकानि नव चैकषष्टिभागा योजनस्य ९९६५१-९।६१ परिरयस्त्रीणि शतसहस्राणि पंचदश सहस्राणि एकं च पंचविंशत्याधिकं शतं योजनानां किंचित्समधिकं ३१५१२५, एवं मण्डले मंडल आयामविष्कम्भयोः पंच योजनानि पंचत्रिंशदेकषष्टिभागाधिकानि परिरये अष्टादश योजनानि परिवर्द्धयता तावद्वक्तव्यं यावत्सर्वबाह्यं मण्डलं, तस्मिंश्च सर्वबाह्ये मण्डले एकं योजनशतसहस्रं षट् शतानि षष्ट्यधिकानि १००६६० आयामविष्कम्भाभ्यां परिरयपरिमाणं ॥ १९६ ॥ पुनः साक्षादाह-

**तिन्नेव सयसहस्सा अट्ठारस होंति जोयणसहस्सा । तिन्नि सया पन्नासा बाहिरए मंडले रविणो ॥ १९७ ॥**

'रवेः' सूर्यस्य सत्के बाह्ये मण्डले परिरयपरिमाणं योजनानां त्रीणि शतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पंचदशाधिकानि किंचिदूनानि ३१८३१५ ॥ १९७ ॥ तदेवमुक्तं मण्डलपरिरयपरिमाणं, सम्प्रति यानि चन्द्रमसो मण्डलानि सूर्यस्यापि साधारणानि यानि च चन्द्रमस एवासाधारणानि तानि प्रतिपादयति-

साधारणासाधारणमंडलानि

**दस चेव मंडलाइं अब्भिंतरबाहिरा रविससीणं । सामन्नाणि उ नियमा पत्तेयं पंच चंदस्स ॥ १९८ ॥**

इह चन्द्रमसः पंचदश मण्डलानि, एतच्च प्रागेवोक्तं, तत्र पंच मण्डलानि जम्बूद्वीपे, शेषाणि तु दश मण्डलानि लवणसमुद्रे,

उक्तं च-"जम्बुद्दीवे णं भंते ! दीवे केवइयं ओगाहित्ता केवइया चंदमंडला पन्नत्ता?, गोयमा! जंबुद्दीवे णं दीवे असीयं सयं ओगाहित्ता एत्थ पंच चंदमण्डला पन्नत्ता ॥ लवणे णं भंते! समुद्दे केवइयं ओगाहित्ता केवइया चंदमण्डला पन्नत्ता?, गोयमा! लवणे णं समुद्दे तिण्णि तीसे जोयणसए ओगाहित्ता एत्थ णं दस चंदमण्डला पन्नत्ता, एवमेव सपुव्वावरेणं जंबुद्दीवे लवणे य समुद्दे पन्नरस चंदमण्डला भवंतीतिमक्खायं" तत्र पंच मण्डलान्यभ्यन्तराणि जम्बूद्वीपमध्यवर्त्तीनि, पंच सर्ववाह्यानि, सर्वसंख्यया दश मण्डलानि, तद्यथा-प्रथमं द्वितीयं तृतीयं चतुर्थं पंचममेकादशं द्वादशं त्रयोदशं चतुर्दशं पंचदशमिति रविशशिनोः सामान्यानि-साधारणानि, शेषाणि तु षष्ठसप्तमाष्टमनवमदशमरूपाणि पंच मण्डलानि चन्द्रस्य प्रत्येकं भवंति, किमुक्तं भवति ?- चन्द्रमस एव तानि मण्डलानि, न तु जातुचिदपि तेषु सूर्यः परिभ्रमति, तथा चोक्तं-"तत्थ जे ते चंदमण्डला सया आइच्चेहिं विरहिया ते णं पंच, तंजहा-छट्ठे चंदमंडले सत्तमे चंदमंडले अट्ठमे चंदमण्डले नवमे चंदमंडले दसमे चंदमंडले" अत्र संग्रहणिगाथा-"छट्ठसत्तमअट्ठमनवमं दसमं च मंडला पंच । आइच्चेहिं विरहिया नेयव्वा सव्वकालंमि ॥ १ ॥" ॥ १९८ ॥ सम्प्रति कस्मिन् चन्द्रान्तरे कति सूर्यमार्गा भवंति ? इत्येतन्निरूपयन्नाह—

चंदंतरेसु अट्ठसु अब्भिंतरबाहिरेसु सूरस्स । बारस बारस मग्गा छसु तेरस तेरस भवंति ॥ १९९ ॥

इह चन्द्रमण्डलानामन्तराणि चतुर्दश, तथाहि-पंचदश चन्द्रमसो मण्डलानि, पंचदशानां चान्तराणि चतुर्दश भवन्ति, नोनाधिकानि, तत्र सर्वाभ्यन्तरेषु चतुर्षु चन्द्रमण्डलान्तरेषु चतुर्षु च सर्वबाह्येषु चन्द्रमण्डलान्तरेषु सर्वसंख्यया अष्टसु चन्द्रमण्डलान्तरेषु

प्रत्येकं द्वादश २ 'सूर्यमार्गाः' सूर्यमण्डलानि भवन्ति, पट्सु च चन्द्रमण्डलान्तरेषु मध्यवर्त्तिषु त्रयोदश त्रयोदश मार्गा भवन्ति ॥ १९९ ॥ अथ कथमेतदवसीयते–एकैकस्मिन् चन्द्रमण्डलान्तरे द्वादश त्रयोदश वा सूर्यमार्गा भवन्ति ? इति, तत एतदर्थ-प्रतिपादनार्थमेकैकस्मिन् चन्द्रविकम्पे यावन्तः सूर्यविकम्पा भवन्ति तावतः प्रतिपिपादयिषुः करणमाह—

चंदविकंपं एगं सूरविकंपेण भायए नियमा। जं हवइ भागलद्धं सूरविकंपाउ ते होंति ॥ २०० ॥

एकं चन्द्रविकम्पं षट्त्रिंशत् योजनानि पंचविंशतिरेकषष्टिभागा योजनस्य एकस्य च एकषष्टिभागस्य सप्तधाछिन्नस्य सत्काश्चत्वारो भागा इत्येवंरूपं सूर्यविकम्पेन-द्वे योजने अष्टचत्वारिंशदेकषष्टिभागा योजनस्य इत्येवंप्रमाणेन 'नियमात्' निश्चयेन भजेत्, विभक्ते च सति यद् भागलब्धं भवति तावत्प्रमाणास्ते सूर्यविकम्पा भवन्ति, तत एवं सूर्यविकम्पान् ज्ञात्वा यावन्तश्चन्द्रमण्डलान्तरे सूर्यमार्गा भवन्ति तावन्तः सूर्याः ज्ञातव्याः, तद्यथा- प्रथमे सर्वाभ्यन्तरे सूर्यमण्डले सूर्यः परिभ्रमति, चन्द्रोऽपि, चन्द्रश्च द्वितीये दिने तन्मण्डल-क्षेत्रं मण्डलक्षेत्राच्च बहिरनन्तरं पंचत्रिंशद् योजनानि त्रिंशतं चैकषष्टिभागान् योजनस्य एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्कान् चतुरो भागान् विकम्प्य चारं चरति, ततो विकम्पस्य परिमाणं षट्त्रिंशद्योजनानि पंचविंशतिरेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काश्चत्वारो भागाः, अत्र योजनराशिरेकषष्टिभागकरणार्थमेकषष्ट्या गुण्यते, जातान्येकविंशतिः शतानि षण्णवत्यधिकानि २१९६, ये चोपरितनाः पंचविंशतिरेकषष्टिभागास्तेऽप्यत्र प्रक्षिप्यन्ते, जातानि द्वाविंशतिः शतानि एकविंशत्यधिकानि २२२१, सूर्यविकम्पो द्वे योजने अष्टचत्वारिंशदेकषष्टिभागा योजनस्य, तत्र द्वे योजने एकषष्टिभागकरणा-

र्धमेकषष्ट्या गुण्यते, जातं द्वाविंशत्यधिकं शतं १२२, तत्र उपरितना अष्टाचत्वारिंशदेकषष्टिभागाः प्रक्षिप्यन्ते, जातं सप्तत्यधिकं शतम् १७०, एतेन पूर्वराशेर्भागो ह्रियते, लब्धास्त्रयोदश, एतावन्तः सूर्यविकम्पा एकस्मिन् चन्द्रविकम्पे भवन्ति, शेषं तिष्ठत्येकादशैकषष्टिभागा एकस्य चैकषष्टिभागस्य सप्तधा छिन्नस्य सत्काश्चत्वारो भागाः, द्वयोश्च चन्द्रमण्डलयोरपान्तराले द्वादश सूर्यमार्गा भवन्ति, एकस्य सूर्यमार्गस्य सर्वाभ्यन्तर एव मण्डले भावात्, एवं शेषेष्वपि चन्द्रमण्डलान्तरेषु पूर्वपूर्वचन्द्रमण्डलान्तरोद्धरितभागपरिमीलनेन यथोक्तसूर्यमार्गप्रमाणं परिभावनीयं, भावयिष्यते चायमर्थोऽग्रे स्वयमेव सूत्रकृतेति न प्रतिचन्द्रमण्डलान्तरं भावना क्रियते ॥२००॥ तदेवमुक्तं चन्द्रमण्डलान्तरेषु सूर्यमार्गप्रतिपादनार्थं करणं, सम्प्रति सूर्यमण्डलान्तरपरिमाणं चन्द्रमण्डलान्तरपरिमाणं च प्रतिपादयति–

दो जोयणाणि सूरस्स मंडलाणं तु हवइ अंतरिया। चंदस्सवि पणतीसं साहिया होइ नायव्वा ॥ २०१ ॥

'सूर्यस्य' सवितुः सत्कानां मण्डलानां परस्परमन्तरिका, अन्तरमेवान्तर्यं भेषजादित्वात्स्वार्थे यण्प्रत्ययः, ततः स्त्रीत्वविवक्षायां ङीप्रत्यये आन्तरी आन्तर्यैव आन्तरिका, भवति द्वे योजने, चन्द्रस्य पुनरान्तरिका भवति ज्ञातव्या पंचत्रिंशद् योजनानि साधिकानि, पंचत्रिंशत् योजनानि पंचविंशतिरेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काश्चत्वारो भागा इत्यर्थः ॥२०१॥ अधुना सूर्यविकम्पस्य चन्द्रविकम्पस्य च परिमाणमाह-

सूरविकंपो एक्को समंडला होइ मंडलंतरिया। चंदविकंपो य तहा समंडला मंडलंतरिया ॥ २०२ ॥

एकः सूर्यविकंपो भवति मण्डलान्तरिका समण्डला, किमुक्तं भवति?- एकस्य सूर्यमण्डलान्तरस्य यत्परिमाणमेकसूर्यमण्डलपरिमाणसहितं तदेकस्य सूर्यविकम्पस्य परिमाणमिति, 'चन्द्रविकम्पो य' इत्यादि, तथा-तेनैव प्रकारेण चन्द्रविकम्पश्च ज्ञातव्यो मण्डलांतरिका समण्डला, एकस्य चन्द्रमण्डलान्तरस्य यत्परिमाणं एकचन्द्रमण्डलपरिमाणसमन्वितं तदेकस्य चन्द्रविकम्पस्य परिमाणमित्यर्थः, तच्च चन्द्रविकम्पस्य सूर्यविकम्पस्य च परिमाणं प्रागेवास्माभिरुक्तमिति ॥२०२॥ साम्प्रतमेकेनायनेन चन्द्रः सूर्यो वा यावत्प्रमाणं क्षेत्रं तिर्यगाक्रमति तत्परिमाणमाह-

पंचेव जोयणसया दसुत्तरा जत्थ मंडला होंति । जं अक्कमेइ तिरियं चंदो सूरो य अयणेणं ॥ २०३ ॥

यत्क्षेत्रं चन्द्रः सूर्यो वा एकेनायनेन तिर्यगाक्रामति-यत्र चन्द्रमसः सूर्यस्य वा मण्डलानि भवन्ति तस्य क्षेत्रस्य परिमाणं पंच योजनशतानि दशोत्तराणि, नवरं चन्द्रमसमधिकृत्याष्टभिरेकषष्टिभागैर्न्यूनानि, तथाहि-एकस्मिन्नयने सूर्यविकम्पानां त्र्यशीत्यधिकं शतं भवति, एकैकस्य सूर्यविकम्पस्य परिमाणमेकषष्टिभागरूपं सप्तत्यधिकं शतं १७०, ततश्च त्र्यशीत्यधिकं शतमेकेन सप्तत्यधिकेन शतेन गुण्यते, जातान्येकत्रिंशत्सहस्राणि शतमेकं दशोत्तरं ३१११०, तत एतेषां योजनानयनार्थमेकषष्ट्या भागो ह्रियते, लब्धानि पंच योजनशतानि दशाधिकानि ५१०, एतावत्सर्वाभ्यन्तरमण्डलात्परत एकेनायनेन सूर्यस्तिर्यक्क्षेत्रमाक्रामति, तथैकस्मिन्नयने चन्द्रविकम्पाश्चतुर्दश, एकस्य चन्द्रविकम्पस्य परिमाणं षट्त्रिंशद् योजनानि पंचविंशतिरेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य चत्वारो भागाः, योजनराशिरेकषष्टिभागकरणार्थमेकषष्ट्या गुण्यते, जातान्येकविंशतिशतानि षण्णवत्य-

ज्योतिष्करण्डे श्रीमलयगिरीयायां वृत्तौ ९ मंडल विभागे

॥१२१॥

धिकानि २११६, तत उपरितनाः पंचविंशतिरेकषष्टिभागाः प्रक्षिप्यन्ते, जातानि द्वाविंशतिशतान्येकविंशत्यधिकानि २२२१, चतुर्दश च सर्वसंख्यया चन्द्रमसो विकम्पास्ततो द्वाविंशतिशतान्येकविंशत्याधिकानि चतुर्दशभिर्गुण्यन्ते, जातान्येकत्रिंशत्सहस्राणि चतुर्नवत्यधिकानि ३१०९४, येऽपि चैकस्यैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काश्चत्वारो भागास्तेऽपि चतुर्दशभिर्गुण्यन्ते, जाताः षट्पंचाशत् ५६, तस्याश्च षट्पंचाशतः सप्तभिर्भागे हृते लब्धा अष्टौ, ते पूर्वराशौ प्रक्षिप्यन्ते, जातः पूर्वराशिरेकत्रिंशत्सहस्राणि शतमेकं द्व्युत्तरं ३११०२, तेषां योजनानयनार्थमेकषष्ट्या भागो ह्रियते, लब्धानि पंच योजनशतानि नवोत्तराणि त्रिपंचाशच्चैकषष्टिभागा योजनस्य ५०९-५३।६१, पंचयोजनशतानि दशोत्तराणि अष्टभिरेकषष्टिभागैर्हीनानीत्यर्थः, एतावत्सर्वाभ्यन्तरात् मण्डलात्परत एकेनायनेन चन्द्रस्तिर्यक्क्षेत्रमाक्रामति, एवंरूपा च क्षेत्रकाष्ठा मूलटीकायामपि भाविता, तथा च तद्ग्रन्थः- "सूरस्स पंचजोयणसया दसाहिया कट्ठा, सच्चेव अट्ठहिं एकट्ठिभागेहिं ऊणिया चंदकट्ठा हवइ" इति ॥२०३॥ सम्प्रति काष्ठादर्शनतो विकम्पानयनार्थं करणमाह-

विकंपानां करणं

सगमंडलेहिं लद्धं सगकट्ठाओ हवंति सविकम्पा । जं सगविक्खंभजुया हवंति सगमंडलंतरिया ॥ २०४ ॥

चन्द्रमसः सूर्यस्य वा विकम्पाः, कथम्भूतास्ते ? इत्याह-'स्वकविष्कम्भयुताः स्वकमण्डलान्तरिकाः' स्वस्वमण्डलविष्कम्भसहितस्वस्वमण्डलान्तरिकारूपा इत्यर्थः, भवन्ति ते स्वकाष्ठातः, प्राकृतत्वात् षष्ठ्यर्थे पंचमी, स्वस्वविकम्पयोग्यक्षेत्रपरिमाणस्य स्वकमण्डलैः-स्वस्वमण्डलसंख्यया भागे हृते यल्लब्धं तावत्प्रमाणास्ते स्वस्वविकम्पा भवन्ति, तथाहि-सूर्यविकम्पस्य क्षेत्रकाष्ठा पंच योजनशतानि दशोत्तराणि ५१०, तान्येव षष्टिभागकरणार्थमेकषष्ट्या गुण्यन्ते, जातान्येकत्रिंशत्सहस्राणि शतमेकं दशोत्तरं ३१११०, ॥१२१॥
सूर्यस्य मण्डलानि त्र्यशीत्यधिकं शतं १८३, ततो योजनानयनार्थं त्र्यशीत्यधिकं मण्डलशतमेकषष्ट्या गुण्यते, जातान्येकादश

सहस्राणि शतमेकं त्रिषष्ट्याधिकं ११६३, एतेन पूर्वराशेर्भागो ह्रियते, लब्धे द्वे योजने, शेषमुपरिष्टादुद्धरति सप्ताशीतिशतानि चतुरशीत्यधिकानि ८७८४, ततः सम्प्रत्येकषष्टिभागा आनेतव्या इत्यधस्ताच्छेदराशिस्त्र्यशीत्यधिकं शतं ध्रियते १८३, तेन भागे हृते लब्धा अष्टाचत्वारिंशदेकषष्टिभागाः, एतावत्परिमाणमेकैकस्य सूर्यविकम्पस्य । तथा चन्द्रस्य तिर्यक्क्षेत्रकाष्ठा पंच योजनशतानि नवोत्तराणि त्रिपंचाशच्चैकषष्टिभागा योजनस्य ५०९-५३।६१, तत्र योजनान्येकषष्टिभागकरणार्थमेकषष्ट्या गुण्यन्ते, जातान्येकत्रिंशत्सहस्राण्येकोनपंचाशदधिकानि ३१०४९, तत उपरितनास्त्रिपंचाशदेकषष्टिभागाः प्रक्षिप्यन्ते, जातान्येकत्रिंशत्सहस्राणि शतमेकं द्व्युत्तरं ३११०२, चन्द्रस्य मण्डलानि सर्वबाह्यान्मण्डलादर्वाक् चतुर्दश १४, ततो योजनानयनार्थं चतुर्दशैकषष्ट्या गुण्यन्ते, जातानि अष्टौ शतानि चतुष्पंचाशदधिकानि ८५४, तैः पूर्वराशेर्भागो ह्रियते, लब्धानि षट्त्रिंशद्योजनानि ३६, शेषाणि तिष्ठन्ति त्रीणि शतान्यष्टापंचाशदधिकानि ३५८, अत ऊर्ध्वमेकषष्टिभागा आनेतव्याः ततश्चतुर्दशरूपोऽधस्ताच्छेदराशिः १४, तेन भागे हृते लब्धाः पंचविंशतिरेकषष्टिभागाः २५, शेषाणि तिष्ठन्त्यष्टौ, ते सप्तभागकरणार्थं सप्तभिर्गुण्यन्ते, जातानि षट्पंचाशत् ५६, तस्याश्चतुर्दशभिर्भागे हृते लब्धाश्चत्वारः सप्तभागाः, एतावत्परिमाण एकैकश्चन्द्रविकम्प इति । इह सर्वाभ्यन्तरं सूर्यमण्डलं सर्वात्मना प्रविष्टं, केवलमष्टावेकषष्टिभागाश्चन्द्रमण्डलस्य बहिः शेषा वर्तन्ते, चन्द्रमण्डलात् सूर्यमण्डलस्याष्टाभिरेकषष्टिभागैर्हीनत्वात् , ततो

१ हीनत्वात्, संप्रति द्वितीयात् चन्द्रमसो मण्डलात् यावत्परिमाणं सूर्यमण्डलमभ्यन्तरं प्रविष्टं तावत् प्रतिपादयति—

एक्कारस एगट्ठी कला उ चत्तारि सत्तभागा य । एयं अब्भंतरयं रविणो ससिमंडला बीया ॥ २०५ ॥

द्वितीयात्तु शशिमण्डलात् एतावत्प्रमाणमभ्यन्तरं रवेः-सूर्यस्य मण्डलं प्रविष्टं यदुत एकादश एकषष्टिकला-एकषष्टिभागाः एकस्य च एक- ||१२२||
षष्टिभागस्य सत्काश्चत्वारः सप्तभागाः, तथाहि-द्वादश ( इत्यधिकं क्वचित् )

द्वितीयाच्चन्द्रमण्डलादर्वागपान्तराले द्वादश सूर्यमार्गाः, तथाहि-द्वयोश्चन्द्रमण्डलयोरन्तरं पंचत्रिंशत् योजनानि त्रिंशच्चैकषष्टिभागा योजनस्य एकस्य च एकषष्टिभागस्य सत्काश्चत्वारः सप्तभागाः, तत्र योजनान्येकषष्टिभागकरणार्थमेकषष्ट्या गुण्यन्ते, गुणयित्वा चोपरितनास्त्रिंशदेकषष्टिभागाः प्रक्षिप्यन्ते, जातान्येकविंशतिः शतानि पंचषष्ट्यधिकानि २१६५, सूर्यस्य विकम्पो द्वे योजने अष्टाचत्वारिंशदेकषष्टिभागा योजनस्य, तत्र द्वे योजने एकषष्ट्या गुण्येते, जातं द्वाविंशं शतं १२२, तत उपरितना अष्टाचत्वारिंशदेकषष्टिभागा योजनस्य प्रक्षिप्यन्ते, जातं सप्तत्यधिकं शतं १७०, तेन पूर्वराशेर्भागो ह्रियते, लब्धा द्वादश, एतावन्तोऽपान्तराले सूर्यमार्गा भवन्ति, शेषं तिष्ठति पंचविंशं शतं१२५, तत्र द्वाविंशेन शतेन द्वादशस्य सूर्यमार्गस्योपरि द्वे योजने लब्धे, शेषास्तिष्ठन्तित्रय एकषष्टिभागा एकस्य एकषष्टिभागस्य च सत्काश्चत्वारः सप्तभागाः, येऽपि च प्रथमे चन्द्रमण्डले रविमण्डलात् शेषा अष्टावेकषष्टिभागास्तेऽप्यत्र प्रक्षिप्यन्त इति जाता एकादशैकषष्टिभागाः, द्वादशाच्च सूर्यमण्डलात्परतो योजनद्वयातिक्रमे सूर्यमण्डलमत आगच्छतिं द्वितीयाच्चन्द्रमण्डलादभ्यन्तरप्रविष्टं सूर्यमण्डलमेकादशैकषष्टिभागा एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काश्चत्वारो भागा इति ॥२०४॥ साम्प्रतं शेषेषु द्वितीयादिषु चन्द्रमण्डलेषु यावत्प्रमाणं सूर्यमण्डलादभ्यन्तरं प्रविष्टं तावत्परिमाणप्रतिपादनार्थं करणमाह—

इच्छामण्डलरूवूणगुणियं अब्भंतरं तु सूरस्स। तस्सेसं सामण्णं सामण्णविसेसियं ससिणो ॥ २०५ ॥

यस्मिन् सूर्यमण्डलस्य चन्द्रमण्डलादभ्यन्तरं प्रविष्टस्य ज्ञातुमिच्छा तेन इच्छामण्डलेन रूपोनेन प्राक्तनमनन्तरोक्तमभ्यन्तरप्रविष्टसूर्यमण्डलपरिमाणं गुणितं क्रियते, गुणितं च सद् यावद्भवति तावत्प्रमाणं तस्मिन् मण्डले चन्द्रमण्डलादभ्यन्तरं सूर्यस्य

मण्डलं प्रविष्टमवसेयं, तद्यथा-तृतीये चन्द्रमण्डले किल ज्ञातुमिच्छा, ततस्त्रयो रूपोनाः क्रियन्ते, जातौ द्वौ, ताभ्यां प्रागुक्ता एकादशैकषष्टिभागा गुण्यन्ते, जाता द्वाविंशतिः, येऽपि च चत्वारः सप्तभागास्तेऽपि द्वाभ्यां गुण्यन्ते, जाता अष्टौ, सप्तभिरेक एकषष्टिभागो लब्धः, स पूर्वराशौ प्रक्षिप्यते, तत आगतं-तृतीये चन्द्रमण्डले चन्द्रमण्डलादभ्यन्तरं प्रविष्टं सूर्यमण्डलं त्रयोविंशतिरेकषष्टिभागा एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्क एको भागः, एवं चतुर्थे चन्द्रमण्डले चन्द्रमण्डलादभ्यन्तरे सूर्यमण्डलं प्रविष्टं चतुस्त्रिंशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्काः पंच सप्तभागाः, पंचमे मण्डले षट्चत्वारिंशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य द्वौ सप्तभागौ षष्ठादिषु तु चन्द्रमण्डलेषु विशेषं वक्ष्यति-'तस्सेसं सामण्णं'ति तस्य-अभ्यन्तरप्रविष्टस्य सूर्यमण्डलस्य यच्छेषं सूर्यमण्डलसत्कं तत् 'सामान्यं' साधारणं, चन्द्रमण्डलान्तः प्रविष्टमित्यर्थः, यत्सामान्याद्विशेषितं-अतिरिक्तं चन्द्रमण्डलविष्कम्भस्य तच्छशिनोऽसाधारणं द्रष्टव्यं, तद्यथा-द्वितीये चन्द्रमण्डले सूर्यमण्डलसाधारणाः षट्त्रिंशदेकषष्टिभागा एकस्य चैकषष्टिभागस्य त्रयः सप्तभागाः, किमुक्तं भवति?- एतावत्प्रमाणं द्वितीये चन्द्रमण्डले सूर्यमण्डलं प्रविष्टमिति, चन्द्रमण्डलस्य च विष्कम्भः षट्पंचाशदेकषष्टिभागा योजनस्य, ततः षट्पंचाशतः षट्त्रिंशत्येकषष्टिभागेषु त्रिषु चैकषष्टिभागस्य सप्तभागेष्वपनीतेषु शेषास्तिष्ठन्त्येकोनविंशतिरेकषष्टिभागाः एकस्य चैकषष्टिभागस्य चत्वारः सप्तभागाः, एतावत्प्रमाणं द्वितीयचन्द्रमण्डलक्षेत्रे सूर्यमण्डलाद् बहिर्विनिर्गतं चन्द्रमण्डलमिति, एवं सर्वेष्वपि मण्डलेषु भावनीयं, भावयिष्यते चाग्रे स्वयमेवैतदाचार्य इति न संमोहः कार्यः ॥ २०५ ॥ सम्प्रति षष्ठादिषु चन्द्रमण्डलेषु विशेषमाह-

ज्योतिष्करण्डे श्रीमलयगिरीयायां वृत्तौ ९ मंडल विभागे ॥१२५॥

षष्ठादिषु चन्द्रमण्डलेषु प्रागुक्तकरणवशाद् यल्लभ्यते तत्र यत् रवेः-सूर्यमण्डलात् यत् शेषं वर्त्तते तद्रविशशिनोरन्तरं ज्ञातव्यं, 'तं चे'-त्यादि, अत्र तं चेति प्रथमा सप्तम्यर्थे, ससि सुद्ध इत्यत्र च प्रत्येकं विभक्तिलोप आर्षत्वात्, ततोऽयमर्थः-तस्मिन् रविशशिनोरन्तरे, चशब्दो भिन्नक्रमः, स चैवं योजनीयः-शशिनि च सूर्यान्तरात्-सूर्यान्तरपरिमाणाद् योजनद्विकरूपात् शुद्धे शेषं यदधिकं सूर्यान्तरपरिमाणस्य वर्त्तते तत् शशिनो बहिः सूर्यमण्डलादर्वागन्तरमवसेयं, यथा षष्ठे किल चन्द्रमण्डलेऽन्तरं ज्ञातुमिच्छा, ततः षड् रूपोनाः क्रियन्ते, जाताः पंच, तेरेकादशैकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्काश्चत्वारः सप्तभागा गुण्यन्ते, जाताः सप्तपंचाशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्काः षड् सप्तभागाः, तत्राष्टाचत्वारिंशदेकषष्टिभागैः सूर्यमण्डलं विशुद्धं, शेषाश्च नवैकषष्टिभागा एकस्य चैकषष्टिभागस्य सत्काः षड् सप्तभागास्तिष्ठन्ति, एतावचत्र प्रदेशे रविशशिनोरन्तरं, तत एतस्मिन् सूर्यान्तरपरिमाणाद् द्वियोजनरूपात्परिशुद्धे चन्द्रमण्डलपरिमाणे च षट्पंचाशदेकषष्टिभागरूपे शुद्धे यच्छेषमवतिष्ठते षट्पंचाशदेकषष्टिभागा एकस्य चैकषष्टिभागस्य सत्क एकः सप्तभागः, एतावत्षष्ठाच्चन्द्रमण्डलात्परतः सूर्यमण्डलादर्वागन्तरम्, एवं शेषेष्वपि मण्डलेषु भावनीयम् ॥१०६॥

जत्थ न सुज्झइ सोमो तं ससिणो तत्थ होइ पत्तेयं। तस्सेसं सामन्नं सामन्नविसेसियं रविणो ॥ २०७ ॥

साधारणासाधारणज्ञानं

यत्र चन्द्रमण्डलक्षेत्रेऽनन्तरोक्तकरणाचिन्तायां 'सोमः' चन्द्रो न शुद्ध्यति, यथैकादशे द्वादशे त्रयोदशे चतुर्दशे पंचदशे वा, तत्र यावत्प्रमाणं शशिनः शुद्धं तत् शशिनः प्रत्येकं-असाधारणं ज्ञातव्यं, तस्माच्च परतो यच्छेषं चन्द्रमण्डलान्तर्गतं सूर्यमण्डलसत्कं तत्सामान्यं-उभयसम्मिश्रं ज्ञातव्यं, तस्माच्च सामान्यात्परतो यद्विशेषितं असाधारणं वर्त्तते तद्रवेरवसेयं, ॥१२५॥

तथा किलैकादशे चन्द्रमण्डलेऽन्तरादिपरिमाणजिज्ञासा, तत एकादश रूपोनाः क्रियन्ते, जाता दश, तैरेकादश एकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्काश्चत्वारः सप्तभागा गुण्यन्ते, जातं पंचदशोत्तरमेकषष्टिभागशतं एकस्य चैकषष्टिभागस्य सत्काः पंच सप्तभागाः ११५।६१,५।७, एतेषां मध्येऽष्टचत्वारिंशतैकषष्टिभागैः सूर्यमण्डलं शुद्धं, शेषाः सप्तषष्टिरेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्काः पंच सप्त भागास्तिष्ठन्ति, एतत् सूर्यान्तरपरिमाणाद् योजनद्वयरूपाच्छोध्यते, शेषं तिष्ठन्ति चतुष्पंचाशदेकषष्टिभागा द्वौ चैकस्यैकषष्टिभागस्य सत्कौ सप्तभागौ, एतावता चन्द्रो न शुद्ध्यति, चन्द्रमण्डलस्य षट्पंचाशदेकषष्टिभागप्रमाणत्वात्, तत एतावत् सूर्यमण्डलादेकादशं चन्द्रमण्डलमभ्यन्तरं प्रविष्टमवसेयं, शेषं त्वेकः एकषष्टिभाग एकस्य च एकषष्टिभागस्य सत्काः पंच सप्तभागा इत्येतावत्प्रमाणं सूर्यमण्डलसंमिश्रं, तस्माच्च परतः षट्चत्वारिंशतमेकषष्टिभागान् द्वौ चैकस्यैकषष्टिभागस्य सप्तभागौ यावत् केवलम्, एवं शेषेष्वपि द्वादशादिषु मण्डलेषु भावना कार्या ॥ २०७ ॥

तदेवमुक्तं चन्द्रमण्डलान्तरेषु सूर्यमार्गपरिमाणं चन्द्रसूर्यमण्डलान्तरपरिमाणं चन्द्रमण्डलसूर्यमण्डलसाधारणासाधारणभागपरिमाणं च, साम्प्रतमुक्तमेवार्थं सुखग्रहणधारणनिमित्तं गाथाषट्केन संजिघृक्षुः प्रथमतः सर्वाभ्यन्तराणां पंचानां साधारणमण्डलानां गाथाद्वयेन भावनामाह—

अट्ठेवेगारस चउ २/१ छत्तीसा तिन्नि २/२ उगणवीस चत्तारि ।
तेवीसेगं ३/१ चउवीस छक्क ३/२ इगतीस एक्कं ३/३ च ॥ २०८ ॥

ज्योतिष्करण्डे श्रीमलयगिरीयायां वृत्तौ ९ मंडल विभागे ॥१२७॥

पंचसु साधारणा साधारण मानं

चोत्तीस पंच $\frac{४}{७}$ तेरस दुगं च $\frac{२}{७}$ बायालं पंचभागाणि $\frac{५}{७}$ ।
छायालदुगे $\frac{४}{७}$ गं पण $\frac{२}{७}$ चउपण्णं चेव दो भागा $\frac{५}{७}$ ॥ २०१ ॥

प्रथमे सर्वाभ्यन्तरे चन्द्रमण्डलक्षेत्रे सूर्यमण्डलाद्बहिर्विनिर्गतचन्द्रमण्डलमष्टावेकषष्टिभागान्, ततो द्वितीयाच्चन्द्रमण्डलादर्वागपान्तराले द्वादश सूर्यमार्गाः, अत्रार्थे च भावना प्रागेव कृता, द्वादशाच्च सूर्यमार्गात्परतो द्वितीयाच्चन्द्रमण्डलादर्वाग् द्वे योजने एकादश च एकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्काश्चत्वारः सप्तभागाः, तत्र योजनद्वयानन्तरं सूर्यमण्डलमतो द्वितीयाच्चन्द्रमण्डलादर्वागभ्यन्तरं प्रविष्टं सूर्यमण्डलमेकादशैकषष्टिभागान् एकस्य चैकषष्टिभागस्य सत्कान् चतुरः सप्तभागान् $\frac{४}{७}$, ततः परं षट्त्रिंशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्कास्त्रयः सप्तभागाः इत्येतावत्परिमाणं सूर्यमण्डलं चन्द्रमण्डलसम्मिश्रम् $\frac{३}{७}$, एतावता किल शुद्धं सूर्यमण्डलं, ततः सूर्यमण्डलात्परतो बहिर्विनिर्गतं चन्द्रमण्डलमेकोनविंशतिमेकषष्टिभागान् एकस्य चैकषष्टिभागस्य सत्कान् चतुरः सप्तभागान् $\frac{४}{७}$, ततः परं भूयस्तृतीयात् चन्द्रमण्डलादर्वाग् यथोक्तपरिमाणमन्तरं, तद्यथा-पंचत्रिंशद् योजनानि त्रिंशदेकषष्टिभागा योजनस्य एकस्य च एकषष्टिभागस्य सत्काश्चत्वारः सप्तभागाः, एतावति चान्तरे द्वादश सूर्यमार्गा लभ्यन्ते, उपरि च द्वे योजने त्रयश्चैकषष्टिभागाः योजनस्य एकस्य चैकषष्टिभागस्य सत्काश्चत्वारः सप्तभागाः, ततोऽत्र प्रागुक्तद्वितीयस्य चन्द्रमण्डलस्य सत्काः सूर्यमण्डलाद् बहिर्विनिर्गता एकोनविंशतिरेकषष्टिभागा एकस्य च एकषष्टिभागस्य चत्वारः सप्तभागाः ते प्रक्षिप्यन्ते, ततो जातास्त्रयोविंशतिरेकषष्टिभागा एकस्य च एकषष्टिभागस्य सत्क एकः सप्तभागः, तत इदमायातं-द्वितीयाच्चन्द्रमण्डलात्परतो ॥१२७॥

द्वादश सूर्यमार्गाः, द्वादशाच्च सूर्यमार्गात् परतो योजनद्वयातिक्रमेण सूर्यमण्डलं, तच्च तृतीयाच्चन्द्रमण्डलादर्वागभ्यन्तरं प्रविष्टं त्रयोविंशतिमेकषष्टिभागान् एकं च एकषष्टिभागसत्कं सप्तभागं ३/७, ततः शेषाश्चतुर्विंशतिरेकषष्टिभागा एकस्य च एकषष्टिभागस्य षट् सप्तभागाः सूर्यमण्डलस्य तृतीयचन्द्रमण्डलसम्मिश्राः ३/२ .ततस्तृतीयं चन्द्रमण्डलं सूर्यमण्डलाद् बहिर्विनिर्गतमेकत्रिंशतमेकषष्टिभागान् एकस्य च एकषष्टिभागस्य सत्कमेकं सप्तभागं ३/३, ततो भूयोऽपि यथोक्तं चन्द्रमण्डलान्तरं, तस्मिंश्च द्वादश सूर्यमार्गा लभ्यंते, द्वादशस्य च सूर्यमार्गस्योपरि द्वे योजने त्रय एकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सत्काश्चत्वारः सप्तभागाः, ततो येऽत्र तृतीयमण्डलसत्काः सूर्यमण्डलाद्बहिर्विनिर्गताश्च एकत्रिंशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सत्क एकः सप्तभागस्तेऽत्र प्रक्षिप्यन्ते, ततो जाताश्चतुस्त्रिंशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सत्काः पंच सप्तभागास्तत इदं वस्तुतत्त्वं जातं-तृतीयाच्चन्द्रमण्डलात्परतो द्वादश सूर्यमार्गाः, द्वादशाच्च सूर्यमार्गात्परतो योजनद्वयमतिक्रम्य सूर्यमण्डलं, तच्च चतुर्थाच्चन्द्रमण्डलादर्वागभ्यन्तरं प्रविष्टं चतुस्त्रिंशतमेकषष्टिभागान् एकस्य चैकषष्टिभागस्य सत्कान् पंच सप्तभागान्, ततः शेषं सूर्यमण्डलस्य त्रयोदशैकषष्टिभागा एकस्य चैकषष्टिभागस्य सत्कौ द्वौ, सप्तभागौ इत्येतत् चतुर्थचन्द्रमण्डलसंमिश्रं, चतुर्थस्य चन्द्रमण्डलस्य सूर्यमण्डलाद् बहिर्विनिर्गतं द्विचत्वारिंशत् एकषष्टिभागा एकस्य चैकषष्टिभागस्य सत्काः पंच सप्तभागाः, ततः पुनरपि यथोदितपरिमाणं चन्द्रमण्डलान्तरं, तत्र च द्वादश सूर्यमार्गा लभ्यन्ते, द्वादशस्य च सूर्यमार्गस्योपरि द्वे योजने त्रय एकषष्टिभागा योजनस्य एकस्य च एकषष्टिभागस्य सत्काश्चत्वारः सप्तभागाः, तत्र ये चतुर्थस्य चन्द्रमण्डलस्य सूर्यमण्डलाद्बहिर्विनिर्गता द्वात्वारिंशदेकषष्टिभागा एकस्य चैकषष्टिभागस्य सत्काः पंच सप्तभागाः तेऽत्र राशौ प्रक्षिप्यन्ते, ततो जाताः षट्चत्वारिंशदेकषष्टिभागा द्वौ चैकस्य एक-

मंडलेषु अप्राप्तमानं

षष्टिभागस्य सत्कौ सप्तभागौ, ततश्चतुर्थाच्चन्द्रमण्डलात्परतो द्वादश सूर्यमार्गा द्वादशाच्च सूर्यमार्गात्परतो योजनद्वयातिक्रमे सूर्यमण्डलं, तच्च पंचमाच्चन्द्रमण्डलादर्वाक् अभ्यन्तरं प्रविष्टं चतुश्चत्वारिंशदेकषष्टिभागान् द्वौ चैकस्य एकषष्टिभागस्य सत्कौ सप्तभागौ, शेषं सूर्यमण्डलस्यैक एकषष्टिभाग एकस्य चैकषष्टिभागस्य सत्काः पंच सप्त भागा इत्येतावत्परिमाणं पंचमचन्द्रमण्डलसम्मिश्रं, तस्य च पंचमस्य चन्द्रमण्डलस्य सूर्यमण्डलाद्बहिर्विनिर्गतं चतुःपंचाशदेकषष्टिभागा एकस्य चैकषष्टिभागस्य द्वौ सप्तभागौ, तदेवं पंच सर्वाभ्यन्तराणि चन्द्रमण्डलानि साधारणानि, चतुर्षु च चन्द्रमण्डलान्तरेषु द्वादश२सूर्यमार्गा इत्येतद् भावितं ॥२०८-२०९॥ सम्प्रति पंचासाधारणानि चन्द्रमण्डलानि विभावयिषुराह—

नव छ [१] च्छप्पण्णेगं [२] एक्कावीसं च तिण्णि [३] बोद्धव्वा ।<br>
चत्तालीसं तिगहिय [१] तेत्तीसा [२] चेव तेत्तीसा [३] ॥ २१० ॥<br>
चउयाला चउ [१] इगवीसं ति [२] छप्पण्णा एग [३] नव छक्कं [१] ।

पंचमाच्चन्द्रमण्डलात्परतो भूयः षष्ठं चन्द्रमण्डलमधिकृत्यान्तरं, तच्च पंचत्रिंशत् योजनानि त्रिंशच्चैकषष्टिभागा योजनस्य एकस्य च एकषष्टिभागस्य सत्काश्चत्वारः सप्तभागाः, तत्र पंचत्रिंशत् योजनानि एकषष्टिभागकरणार्थमेकषष्ट्या गुण्यन्ते, गुणयित्वा चोपरितनास्त्रिंशदेकषष्टिभागाः प्रक्षिप्यन्ते, ततो जातान्येकविंशतिः शतानि पंचषष्ट्यधिकानि २१६५, येऽपि च पंचमस्य चन्द्रमण्डलस्य सूर्यमण्डलाद्बहिर्विनिर्गताश्चतुष्पंचाशदेकषष्टिभागाः द्वौ चैकस्यैकषष्टिभागस्य सत्कौ सप्तभागौ तेऽत्र प्रक्षिप्यन्ते, जातानि द्वाविंशतिः ॥१२९॥

शतान्येकोनविंशत्यधिकानि, एकस्य चैकषष्टिभागस्य सत्काः षट् सप्तभागाः२२१९,६।७, सूर्यस्य विकम्पो द्वे योजने अष्टाचत्वारिंश-
देकषष्टिभागाधिके, तत्र द्वे योजने एकषष्ट्या गुण्येते, जातं द्वाविंशं शतमेकषष्टिभागानां, तत उपरितना अष्टाचत्वारिंशदेकषष्टिभागाः
प्रक्षिप्यन्ते, जातं सप्तत्यधिकं शतं १७०, तेन पूर्वराशेर्भागो ह्रियते, लब्धास्त्रयोदश, शेषास्तिष्ठन्ति नव एकस्य चैकषष्टिभागस्य
सत्काः षट् सप्तभागाः, तत इदमागतं- पंचमाच्चन्द्रमण्डलात्परतस्त्रयोदश सूर्यमार्गाः, त्रयोदशस्य च सूर्यमार्गस्योपरि षष्ठाच्चन्द्र-
मण्डलादर्वागन्तरं नव एकषष्टिभागा एकषष्टिभागस्य एकस्य च सत्काः षट् सप्तभागाः, ततः परतः षष्ठं चन्द्रमण्डलं, तच्च षट्पंचाश-
देकषष्टिभागात्मकं, ततः परतः सूर्यमण्डलादर्वागन्तरे 'छप्पण्णेग'त्ति षट्पंचाशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य एकः सप्तभाग
स्तदनन्तरं सूर्यमण्डलं, तस्माच्च परत एकषष्टिभागानां चतुरुत्तरेण शतेन एकस्य चैकषष्टिभागस्य सत्केन सप्तभागेन हीनं यथो-
दितप्रमाणं चन्द्रमण्डलान्तरं प्राप्यत इति, एतस्मात्सूर्यमण्डलात्परतोऽन्ये द्वादश सूर्यमार्गा लभ्यन्ते, ततः सर्वसंकलनया तस्मिन्नप्यन्तरे
त्रयोदश सूर्यमार्गाः, तस्य च त्रयोदशस्य सूर्यमार्गस्योपरि सप्तमाच्चन्द्रमण्डलादर्वागन्तरमेकविंशतिरेकषष्टिभागाः एकस्य चैकषष्टि-
भागस्य त्रयः सप्तभागास्ततः सप्तमं चन्द्रमण्डलं, तस्माच्च सप्तमाच्चन्द्रमण्डलात्परतश्चतुश्चत्वारिंशता एकषष्टिभागैरेकस्य चैकषष्टि-
भागस्य सत्कैश्चतुर्भिः सप्तभागैः सूर्यमण्डलं, ततो द्विनवतिसंख्यैकषष्टिभागैश्चतुर्भिश्च एकस्यैवैकषष्टिभागस्य सत्कैः सप्तभागैर्न्यूनं
यथोदितप्रमाणं चन्द्रमण्डलान्तरं ततः परमस्तीत्यन्येऽपि द्वादश सूर्यमार्गा भवन्तीति तस्मिन्नप्यन्तरे त्रयोदश सूर्यमार्गाः, त्रयोदशस्य
सूर्यमार्गस्य बहिरष्टमाच्च चन्द्रमण्डलादर्वागन्तरं त्रयस्त्रिंशदेकषष्टिभागाः, ततोऽष्टमं चन्द्रमण्डलं, तस्माच्चाष्टमाच्चन्द्रमण्डलात्परत-
स्त्रयस्त्रिंशतैकषष्टिभागैः सूर्यमण्डलं, तत एकाशीतिसंख्यैरेकषष्टिभागैरूनं यथोदितप्रमाणं चन्द्रमण्डलान्तरं पुरतो विद्यत इति ततः

पुरतोऽन्येऽपि द्वादश सूर्यमार्गाः, ततस्तस्मिन्नप्यन्तरे सर्वसंकलनया त्रयोदश सूर्यमार्गास्त्रयोदशाच्च सूर्यमार्गात्परतो नवमाच्च चन्द्रमण्डलादर्वागन्तरं चतुश्चत्वारिंशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्काश्चत्वारः सप्तभागास्ततः परं नवमं चन्द्रमण्डलं, तस्माच्च नवमाच्चन्द्रमण्डलात्परत एकविंशत्या एकषष्टिभागैरेकस्य चैकषष्टिभागस्य त्रिभिः सप्तभागैः सूर्यमण्डलं, तत एकोनसप्ततिसंख्यैरेकषष्टिभागैरेकस्य चैकषष्टिभागस्य सत्कैस्त्रिभिः सप्तभागैः परिहीनं यथोक्तपरिमाणं चन्द्रमण्डलान्तरं, तत्र चान्ये द्वादश सूर्यमार्गाः, एवं चास्मिन्नप्यन्तरे सर्वसंकलनया त्रयोदश सूर्यमार्गास्तस्य च त्रयोदशस्य सूर्यमार्गस्योपरि दशमाच्चन्द्रमण्डलादर्वागन्तरं पट्पंचाशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्यैकः सप्तभागस्ततो दशमं मण्डलं, दशमाच्चन्द्रमण्डलात् परतो नवभिरेकषष्टिभागैः एकस्य च एकषष्टिभागस्य सत्कैः षड्भिः सप्तभागैः सूर्यमण्डलं, ततः सप्तपंचाशता एकषष्टिभागैः एकस्य च एकषष्टिभागस्य सत्कैः षड्भिः सप्तभागैरूनं प्रागुक्तपरिमाणं चन्द्रमण्डलान्तरं, ततो भूयोऽपि द्वादश सूर्यमार्गा लभ्यन्त इति तस्मिन्नप्यन्तरे त्रयोदश सूर्यमार्गाः, त्रयोदशस्य च सूर्यमार्गस्योपर्येकादशाच्चन्द्रमण्डलादर्वागन्तरं सप्तषष्टिरेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्काः पंचभागाः ॥ २१० ॥ तदेवं भावितानि मध्यमानि पंचासाधारणानि मण्डलानि षट्सु च चन्द्रमण्डलान्तरेषु त्रयोदश सूर्यमार्गाः, सम्प्रति सर्वबाह्यानि पंच साधारणानि मण्डलानि चतुर्षु च सर्वबाह्येषु चन्द्रमण्डलान्तरेषु द्वादश द्वादश सूर्यमार्गान् विभावयिषुराह—

चउपण्ण दुगे $\frac{११}{७}$ गं पण $\frac{११}{२}$ छायालीसं च दो चेव $\frac{११}{३}$ ॥ २११ ॥

बायाल पंच $\frac{११}{७}$ तेरस दुगं च $\frac{११}{२}$ चोत्तीस पंचभागा य $\frac{११}{३}$ । इगतीसेगं $\frac{१३}{७}$ चउवीस छक्क $\frac{१३}{२}$ तेवीस एक्कं च $\frac{१३}{३}$ ॥ २१२ ॥

ज्योतिष्कण्डे श्रीमलयगिरीयायां वृत्तौ ९ मंडल विभागे

॥१३३॥

गुणवीसा चउ $\frac{३५}{१}$ छत्तीस तिन्नि $\frac{३६}{२}$ एकारसेव चउर $\frac{३४}{२}$ अट्ठ $\frac{१५}{१}$। दो दो तेत्तीसहुय नत्थि चउण्हंपि सत्तंसा ॥ २१३ ॥

एकादशस्य चन्द्रमण्डलस्य चतुष्पंचाशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्कौ द्वौ सप्तभागौ इत्येतावत्सूर्यमण्डलादभ्यन्तरं प्रविष्टं, एक एकषष्टिभागः एकस्य चैकषष्टिभागस्य सत्काः पंच सप्तभागा इत्येतावन्मात्रं सूर्यमण्डलसम्मिश्रम्, अत्रार्थे च-'जत्थ न सुज्झइ सोमे' इत्यत्र प्रदेशे भावना कृतेवेति न भूयः क्रियते, तदनुसारेण चोत्तरत्रापि स्वयं भावना भावनीया, एकादशाच्च चन्द्रमण्डलाद्बहिर्विनिर्गतं सूर्यमण्डलं षट्चत्वारिंशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्कौ द्वौ सप्तभागौ, तत एतावता हीनं परतश्चन्द्रमण्डलान्तरमस्तीति द्वादश सूर्यमार्गा लभ्यन्ते, ततः परत एकोनाशीत्या एकषष्टिभागैः एकस्य चैकषष्टिभागस्य सत्काभ्यां द्वाभ्यां सप्तभागाभ्यां द्वादशं चन्द्रमण्डलं, तच्च द्वादशं चन्द्रमण्डलं सूर्यमण्डलादभ्यन्तरं प्रविष्टं 'बायाल पंच' त्ति द्विचत्वारिंशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्काः पंच सप्तभागाः, शेषं च त्रयोदशैकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सत्कौ द्वौ सप्तभागावित्येतावन्मात्रं सूर्यमण्डलसम्मिश्रं, तस्माच्च द्वादशाच्चन्द्रमण्डलाद्बहिर्विनिर्गतं सूर्यमण्डलं चतुस्त्रिंशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्काः पंच सप्तभागास्तत एतावन्मात्रेण हीनं परतश्चन्द्रमण्डलान्तरं, तत्र च द्वादश सूर्यमार्गा लभ्यन्ते, द्वादशाच्च सूर्यमार्गात्परतो नवतिसंख्यैरेकषष्टिभागैरेकस्य चैकषष्टिभागस्य सत्कैः षड्भिः सप्तभागैस्त्रयोदशं चन्द्रमण्डलं, तत्र त्रयोदशं चन्द्रमण्डलं सूर्यमण्डलादभ्यन्तरं प्रविष्टं 'इगतीसेगं' ति एकत्रिंशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्क एकः सप्तभागः, शेषं चतुर्विंशतिरेकषष्टिभागा एकस्य च एकषष्टिभागस्य सत्काः षट् सप्तभागा इत्येतावन्मात्रं सूर्यमण्डलसंमिश्रं, तस्माच्च त्रयोदशाच्चन्द्रमण्डलाद्बहिः सूर्यमण्डलं विनिर्गतं त्रयोविंशतिरेकषष्टिभागा एकस्य चैकषष्टिभागस्य सत्क एकः सप्तभागस्तत एता-

एकादशादिषु साधारणासाधारण भोगः

॥१३३॥

यता हीनं परतश्चन्द्रमण्डलान्तरं, तत्र च द्वादश सूर्यमार्गाः, द्वादशाच्च सूर्यमार्गात्परत एकषष्टिभागानां द्युत्तरेण शतेन एकस्य चैकषष्टिभागस्य सत्कैस्त्रिभिः सप्तभागैश्चतुर्दशं चन्द्रमण्डलं सूर्यमण्डलादभ्यन्तरं प्रविष्टम्, 'गुणवीसा चउ'त्ति एकोनविंशतिरेकषष्टिभागा एकस्य चैकषष्टिभागस्य सत्काश्चत्वारः सप्तभागाः, शेषं षट्त्रिंशदेकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्कास्त्रयः सप्तभागा इत्येतावत्परिमाणं सूर्यमण्डलसंमिश्रं, तस्माच्चतुर्दशाच्चन्द्रमण्डलाद्बहिर्विनिर्गतं सूर्यमण्डलं एकादश एकषष्टिभागाः एकस्य चैकषष्टिभागस्य सत्काश्चत्वारः सप्तभागास्तत एतावता हीनं यथोक्तपरिमाणं चन्द्रमण्डलान्तरं, तत्र च द्वादश सूर्यमार्गाः, द्वादशाच्च सूर्यमार्गात्परत एकषष्टिभागानां चतुर्दशोत्तरेण शतेन पंचदशं चन्द्रमण्डलं, तच्च पंचदशं चन्द्रमण्डलं सर्वान्तिमात्सूर्यमण्डलादर्वागभ्यन्तरं प्रविष्टं अष्टावेकषष्टिभागाः, शेषा अष्टचत्वारिंशद् एकषष्टिभागाः सूर्यमण्डलसम्मिश्राः । तदेवं भावितानि सर्वबाह्यानि पंच साधारणानि मण्डलानि, चतुर्षु च सर्वबाह्येषु चन्द्रमण्डलान्तरेषु द्वादश द्वादश सूर्यमार्गाः, सम्प्रति येषु प्रागुक्तेष्वंशेषु न सप्तांशा भवेयुस्तान् मन्दमतीनां विशिष्टस्मरणाधानाय कथयति-'दो दो तेत्तीसे'त्यादि, ये द्वे अष्टमचन्द्रमण्डलचिंतायां त्रयस्त्रिंशतावुक्ते यौ च प्रथमपंचदशचन्द्रमण्डलयोरष्टकावुक्तौ, एतेषां चतुर्णामपि सप्तांशा न विद्यन्ते, किन्तु परिपूर्णा एव ते एकषष्टिभागाः॥२११-२१३॥ तदेवं कृता सूर्यमण्डलानां चन्द्रमण्डलानां च परस्परं विभागभावना, एतेषु मण्डलेषु द्वौ सूर्यौ द्वौ च चन्द्रमसौ चारं चरतः, सर्वाभ्यन्तरे मण्डले वर्त्तमानयोर्द्वयोः सूर्ययोः परस्परमन्तरपरिमाणमाह—

नयनउई य सहस्सा छच्चेव सया हवन्ति चत्ताला । सूराण ऊ अबाहा अब्भिंतरमंडलट्ठाणं ॥ २१४ ॥

अभ्यन्तरमण्डलस्थयोः सूर्ययोः परस्परमबाधा नवनवतिः सहस्राणि षट् शतानि चत्वारिंशदधिकानि योजनानां ९९६४०, तथाहि-एकोऽपि सूर्यो जम्बूद्वीपेऽशीत्यधिकं योजनशतमवगाह्य सर्वाभ्यन्तरे मण्डले स्थितोऽपरोऽपि ततोऽशीत्यधिकं शतं द्वाभ्यां गुण्यते, जातानि त्रीणि शतानि षष्ठ्यधिकानि ३६०, एतेषु जम्बूद्वीपविष्कम्भाद् योजनलक्षप्रमाणादपनीतेषु शेषं यथोक्तपरिमाणं भवति, यदा तु सर्वाभ्यन्तरानन्तरे द्वितीये मण्डले उपसंक्रम्य सूर्यौ चारं चरतस्तदा तयोः परस्परमन्तरं नवनवतियोजनसहस्राणि षट् शतानि पंचचत्वारिंशदधिकानि पंचत्रिंशच्चैकषष्टिभागा योजनस्य ९९६४५-३५।६१ तथाहि-एकोऽपि सूर्यो द्वितीये मण्डले संक्रामन् द्वे योजने अष्टचत्वारिंशच्चैकषष्टिभागान् विमुच्य संक्रामति, द्वितीयोऽपि, सूर्यविकम्पस्यैतावत्प्रमाणत्वात्, एतच्च प्रागेव भावितं, ततः पंच योजनानि पंचत्रिंशच्चैकषष्टिभागा योजनस्य द्वितीये मण्डले सूर्ययोः परस्परमन्तरचिन्तायामधिकत्वेन प्राप्यन्ते, एवमग्रेतनेष्वपि मण्डलेषु भावनीयं, यदा तु सर्वाभ्यन्तरात् मण्डलात् तृतीये मण्डले सूर्यौ चारं चरतस्तदाऽनयोः परस्परमन्तरं नवनवतियोजनसहस्राणि षट् शतानि एकपंचाशदधिकानि नव चैकषष्टिभागा योजनस्य ९९६५१,९।६१ एवं सर्वाभ्यन्तरान्मण्डलाद्वाह्येषु मण्डलेषु संक्रामतोः सूर्ययोः परस्परमन्तरचिन्तायां मण्डले मण्डले पंच योजनानि पंचत्रिंशच्चैकषष्टिभागा योजनस्य वृद्धिस्तावन्मन्तव्या यावत्सर्वबाह्यं मण्डलम् ॥ २१४ ॥ तस्मिंश्च सर्वबाह्ये मण्डलेऽबाधापरिमाणमाह–

एक्कं च सयसहस्सं छच्चेव सया य होंति सट्ठीया । सूराण ऊ अबाहा बाहिरगे मंडले नेया ॥ २१५ ॥

सर्वबाह्ये मण्डले सूर्ययोः परस्परमबाधा एकं योजनशतसहस्रं षट् शतानि 'षष्ठानि' षष्ट्यधिकानि भवन्ति १००६६०, तथाहि-सर्वाभ्यन्तरान्मण्डलादनन्तरं यदर्वाक्तनं द्वितीयं मण्डलं तस्मादारभ्य सर्वबाह्यं मण्डलं त्र्यशीत्यधिकशततमं, तेन त्र्यशीत्यधिकं शतं

षष्टिभागस्य सप्तधाछिन्नस्य सत्कास्त्रयो भागाः ९९८५८-२१।६१- ३।७ पंचमे मण्डले नवनवतियोजनसहस्राणि नव शतान्येकत्रिंशदधिकानि एकविंशतिरेकषष्टिभागा योजनस्य एकस्यैकषष्टिभागस्य च सप्तधाछिन्नस्य सत्काश्चत्वारो भागाः९९९३१-२१।६१-४।७, षष्ठे मण्डले एकं योजनशतसहस्रं चतुरुत्तरमेकादशैकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काः पञ्चभागाः १००००४-११।६१-५-७ सप्तमे मण्डले एकं योजनशतसहस्रं सप्तसप्तत्यधिकमेकं एकषष्टिभागो योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काः षड् भागाः १०००७७-१।६१-६।७ अष्टमे मण्डले एकं योजनशतसहस्रमेकं शतमेकोनपंचाशदधिकं त्रिपंचाशदेकषष्टिभागा योजनस्य १००१४९-५३।६१, नवमे मण्डले एकं योजनशतसहस्रं द्वे योजनशते द्वाविंशत्यधिके त्रिचत्वारिंशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्क एकभागः १००२२२-४३।६१-१।७ दशमे एकं योजनशतसहस्रं द्वे शते पंचनवत्यधिके त्रयस्त्रिंशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्कौ द्वौ भागौ १००२९५-३३।६१,२।७, एकादशे एकं योजनशतसहस्रं त्रीणि शतान्यष्टषष्ट्यधिकानि त्रयोविंशतिरेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्कास्त्रयः सप्तभागाः १००३६८-२३।६१- ३।७ द्वादशे एकं योजनशतसहस्रं चत्वारि शतान्येकचत्वारिंशदधिकानि त्रयोदशैकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काश्चत्वारो भागाः १००४४१-१३।६१-४।७ त्रयोदशे एकं योजनशतसहस्रं पंच शतानि चतुर्दशाधिकानि त्रय एकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काः पंच भागाः१००५१४-३।६१-५।७, चतुर्दशे एकं योजनशतसहस्रं पंच शतानि षडशीत्यधिकानि चतुष्पंचाशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काः षड् भागाः १००५८६-५४।६१-६।७ पंचदशे मण्डले एकं योजनशतसहस्रं षट्

॥१३७॥

चन्द्रे प्रतिमण्डलमबाधा-वृद्धिः

सर्वबाह्ये मण्डले सूर्यापेक्षया षोडशभिरेकषष्टिभागैर्न्यूनं, यत एकोऽप्यष्टचैकषष्टिभागान् सूर्योऽभ्यन्तरमाक्रामति, अपरोऽपि, ततः षोडशभिर्भागैर्न्यूनता, शेषेषु तु मण्डलेषु प्रत्येकं दाक्षिणायने वृद्धिरुत्तरायणे हानिर्द्वासप्ततियोजनानि एकपंचाशच्चैकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सत्क एकः सप्तभागः, एतदेवाह-

चन्दस्स जोयणाणि य बिसत्तरी एकवण्ण अंसा य । एगट्ठिकते छेए नायव्वा सत्तभागा य ॥ २१७ ॥

सर्वाभ्यन्तरसर्वबाह्यव्यतिरिक्तेषु शेषेषु मण्डलेषु प्रत्येकं चन्द्रस्य चन्द्रस्य परस्परमबाधाया दक्षिणायने वृद्धिरुत्तरायणे हानिर्द्विसप्ततिर्योजनानि एकपंचाशच्चांशाः एकषष्टिकृते छेदे, किमुक्तं भवति?-एकपंचाशदेकषष्टिभागा योजनस्य, तथैकस्य चैकषष्टिभागस्य सत्क एक सप्तभागः, तथाहि-एकस्य चन्द्रविकम्पस्य परिमाणं षट्त्रिंशद् योजनानि पंचविंशतिरेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काश्चत्वारो भागाः, ततः एतस्य द्वाभ्यां गुणने भवति यथोक्तमबाधावृद्धिहान्योः परिमाणं, तत्रेदमेव व्यक्तमुपदर्श्यते-सर्वाभ्यन्तरे मण्डले परस्परमबाधा नवनवतियोजनसहस्राणि षट् शतानि चत्वारिंशदधिकानि ९९६४०, सर्वाभ्यन्तरानन्तरे तु द्वितीये मण्डले परस्परमबाधा नवनवतियोजनसहस्राणि सप्त शतानि द्वादशोत्तराणि एकपंचाशच्चैकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्क एको भागः९९७१२,५१-६१,१।७तृतीये मण्डले नवनवतिः योजनसहस्राणि सप्त शतानि पंचाशीत्यधिकानि एकचत्वारिंशदेकषष्टिभागा योजनस्य एकस्य च एकषष्टिभागस्य सप्तधाछिन्नस्य सत्कौ द्वौ भागौ९९७८५-४१।-६१- २।७ चतुर्थे मण्डले नवनवतिः योजनसहस्राण्यष्टौ शतान्यष्टापंचाशदधिकानि एकत्रिंशच्चैकषष्टिभागा योजनस्य एकस्य चैक-

षष्टिभागस्य सप्तधाछिन्नस्य सत्कास्त्रयो भागाः ९९८५८-३१।६१- ३।७ पंचमे मण्डले नवनवतियोजनसहस्राणि नव शतान्येकत्रिंशदधिकानि एकविंशतिरेकषष्टिभागा योजनस्य एकस्यैकषष्टिभागस्य च सप्तधाछिन्नस्य सत्काश्चत्वारो भागाः९९९३१-२१।६१-४।७, षष्ठे मण्डले एकं योजनशतसहस्रं चतुरुत्तरमेकादशैकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काः पञ्चभागाः १००००४-११।६१-५-७ सप्तमे मण्डले एकं योजनशतसहस्रं सप्तसप्तत्यधिकमेक एकषष्टिभागो योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काः षड् भागाः १०००७७-१।६१-६।७ अष्टमे मण्डले एकं योजनशतसहस्रमेकं शतमेकोनपंचाशदधिकं त्रिपंचाशदेकषष्टिभागा योजनस्य १००१४९-५३।६१, नवमे मण्डले एकं योजनशतसहस्रं द्वे योजनशते द्वाविंशत्यधिके त्रिचत्वारिंशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्क एकभागः १००२२२-४३।६१-१।७ दशमे एकं योजनशतसहस्रं द्वे शते पंचनवत्यधिके त्रयस्त्रिंशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्कौ द्वौ भागौ १००२९५-३३।६१,२।७, एकादशे एकं योजनशतसहस्रं त्रीणि शतान्यष्टषष्ट्यधिकानि त्रयोविंशतिरेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्कास्त्रयः सप्तभागाः १००३६८-२३।६१- ३।७ द्वादशे एकं योजनशतसहस्रं चत्वारि शतान्येकचत्वारिंशदधिकानि त्रयोदशैकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काश्चत्वारो भागाः १००४४१-१३।६१-४।७ त्रयोदशे एकं योजनशतसहस्रं पंच शतानि चतुर्दशाधिकानि त्रय एकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काः पंच भागाः१००५१४-३।६१-५।७, चतुर्दशे एकं योजनशतसहस्रं पंच शतानि षडशीत्यधिकानि चतुष्पंचाशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सप्तधाछिन्नस्य सत्काः षड् भागाः १००५८६-५४।६१-६।७ पंचदशे मण्डले एकं योजनशतसहस्रं षट्

शतान्येकोनपष्ट्यधिकानि पंचचत्वारिंशदेकषष्टिभागा योजनस्य १००६५९-४५।६१ ॥ २१७ ॥ तदेवमुक्तं चन्द्रमसोः सूर्ययोश्च परस्परमबाधापरिमाणं, परिरयपरिमाणं तु सूर्यमण्डलानां प्रागेव प्रतिपादितं, केवलमिदानीं प्रतिमण्डलं परिरयवृद्धिर्यावती भवति तावतीमाह--

**सत्तरस जोयणाणि य परिरयवुड्ढी उ मण्डले नियता । अट्ठत्तीसं भागा एगट्ठिगएण छेएण ॥२१८॥**

सूर्यसत्के मण्डले परिरयपरिवृद्धिरियती नियता ज्ञातव्या, तद्यथा-सप्तदश योजनान्यष्टात्रिंशद्भागा एकषष्टिगतेन छेदेन, किमुक्तं भवति ?-अष्टात्रिंशच्चैकषष्टिभागा योजनस्य, तथाहि-सूर्यसत्कस्य मण्डलस्य पूर्वपूर्वमण्डलमपेक्ष्यायामविष्कम्भवृद्धिः पंच योजनानि पंचत्रिंशच्चैकषष्टिभागा योजनस्य, तत्र पंच योजनान्येकषष्टिभागकरणार्थमेकषष्ट्या गुण्यन्ते, गुणयित्वा चोपरितनाः पंचत्रिंशदेकषष्टिभागाः प्रक्षिप्यन्ते, जातानि त्रीणि शतानि चत्वारिंशदधिकानि ३४०, तेषां वर्गो विधीयते, विधाय च वर्गं दशभिर्गुणनाज्जातान्येकादश शतसहस्राणि पट्पंचाशत्सहस्राणि ११५६०००, तेषां वर्गमूलानयने लब्धा एकषष्टिभागा दश शतानि पंचसप्तत्यधिकानि १०७५, शेषमुपरिष्टादुद्धरति त्रीणि शतानि पंचसप्तत्यधिकानि ३७५, पंचसप्तत्यधिकानां च दशानां शतानामेकषष्ट्या भागे हृते लब्धानि सप्तदश योजनानि अष्टत्रिंशच्चैकषष्टिभागा योजनस्य, ते चोपरितनोद्धरितशेषराश्यपेक्षया किंचित्समधिका वेदितव्याः, सूर्यप्रज्ञप्त्यादिषु त्वष्टादश योजनानि व्यवहारनयमधिकृत्योक्तानि, ततो न कश्चिद्दोषः; एतच्च प्रागेवोक्तं ॥ २१८ ॥ ॥१३८॥

सम्प्रति प्रतिमण्डलं सुखेन प्रतिनियतपरिधिपरिमाणज्ञापनार्थं करणमाह--

ज्योतिष्क-रण्डे श्राम ख्यगिरि-दायाँ सूर्यां १० मंडल विभागं

||१२९||

रूणमंडलगुणं परिहीवुड्ढिं तु पक्खिवे नियमा । पढमपरिहीपमाणे सो परिही मंडले तम्मि॥ २१९ ॥

सूर्यम परिधिवृं करणं

यस्मिन् मण्डले परिधिपरिमाणजिज्ञासा तद् रूपोनं मण्डलं-मण्डलसंख्यानं गुणो-गुणकारो यस्याः सा तथा तां, विवक्षित-संख्यया रूपोनया गुणितामित्यर्थः, प्रागुक्तां परिधिवृद्धिं-सप्तदश योजनानि किंचित्समधिका अष्टात्रिंशदेकषष्टिभागा इत्येवंपरिमाणां 'प्रथमपरिधिपरिमाणे' सर्वाभ्यन्तरमण्डलपरिरयपरिमाणे प्रक्षिपेत्, ततः 'नियमात्' निश्चयेन तस्मिन् विवक्षिते मण्डले यथोक्तप-रिमाणपरिधिर्भवति, तत्र किल चतुरशीत्यधिकशततमे मण्डले परिरयपरिमाणजिज्ञासा, ततश्चतुरशीत्यधिकं शतं रूपोनं क्रियते, जातं त्र्यशीत्यधिकं शतं, तेन त्र्यशीत्यधिकेन शतेन सप्तदश योजनानि गुण्यन्ते, जातान्येकत्रिंशच्छतानि एकादशोत्तराणि ३१११, येऽपि चाष्टत्रिंशदेकषष्टिभागाः तेऽपि त्र्यशीत्यधिकेन शतेन संगुण्यंते, जातान्येकोनसप्ततिशतानि चतुष्पंचाशदधिकानि, तेषामेकषष्ट्या भागे हृते लब्धं चतुर्दशाधिकं शतम्, अष्टात्रिंशच्चैकषष्टिभागाः किंचित्समधिका लभ्यन्ते, ततः किंचित्समधिकत्वेऽपि त्र्यशीत्य-धिकगुणिते किंचिदूनं योजनं प्राप्यते, तच्च व्यवहारतः परिपूर्णं विवक्ष्यते, एतत् सर्वं सर्वाभ्यन्तरमण्डलपरिधिपरिमाणे त्रीणि योजनलक्षाणि पंचदश सहस्राणि नवाशीत्यधिकानि ३१५०८९ इत्येवंरूपे प्रक्षिप्यते, ततो यथोक्तं सर्वबाह्यमण्डलपरिरयपरिमाणं भवति, तच्चेदं-त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पंचदशोत्तराणि ३१८३१५, एवं मध्यमेष्वपि मण्डलेषु निपुणबुद्ध्या भावनीयः ॥ २१९ ॥ चन्द्रमण्डलेऽपि सर्वाभ्यन्तरे परिरयपरिमाणं त्रीणि योजनशतसहस्राणि पंचदश सहस्राणि नवाशीत्यधिकानि, ३१५०८९ शेषेषु -मण्डलेषु प्रतिमण्डलं-परिरयपरिवृद्धिपरिमाणमाह-

||१२९||

चंदस्सवि नायव्वा परिरयवुड्ढी उ मंडले नियमा । दो चेव जोयणसया तीसा खलु होंति साहीया ॥ २२० ॥

चन्द्रस्यापि मण्डले मण्डले परिरयपरिवृद्धिर्नियमाज्ज्ञातव्या द्वे योजनशते 'त्रिंशे' त्रिंशदधिके भवतः खलु साधिके-किंचित्समधिके, तथाहि चन्द्रस्य मण्डले मण्डले आयामविष्कम्भवृद्धिर्द्वासप्ततिर्योजनानि एकपंचाशदेकषष्टिभागा योजनस्य एकस्य चैकषष्टिभागस्य सत्क एकः सप्तभागः, तत्र योजनान्येकषष्टिभागकरणार्थमेकषष्ट्या गुण्यन्ते, जातानि द्विनवत्यधिकानि त्रिचत्वारिंशच्छतानि ४३९२, तत उपरितना एकपंचाशदेकषष्टिभागाः प्रक्षिप्यन्ते, जातानि चतुश्चत्वारिंशच्छतानि त्रिचत्वारिंशदधिकानि ४४४३, एतानि सप्तभागकरणार्थं सप्तभिर्गुण्यन्ते, गुणयित्वा चोपरितन एकः सप्तभागः प्रक्षिप्यते, ततो जातान्येकत्रिंशत्सहस्राणि शतमेकं द्व्युत्तरं ३११०२, अस्य राशेर्वर्गो विधीयते, विहिते च वर्गे दशभिर्गुणितं, ततो जातमिदं नवकः षट्कः सप्तकस्त्रिकस्त्रिकश्चतुष्कश्चतुष्कः शून्यं चतुष्कः शून्यम् ९६७३३४४०४०, अस्य वर्गमूलानयने लब्धानि अष्टानवतिः सहस्राणि त्रीणि शतानि त्रिपंचाशदधिकानि ९८३५३, शेषमुद्वरति- एकत्रिंशत्सहस्राणि चत्वारि शतानि एकत्रिंशदधिकानि ३१४३१, वर्गमूललब्धस्य तु राशेरेकषष्ट्या सप्तभिर्गुणितया जातानि यानि चत्वारि शतानि सप्तविंशत्यधिकानि तैर्भागो ह्रियते, लब्धे द्वे योजनशते त्रिंशदधिके २३०, शेषमुपरिष्टादुद्वरति त्रिचत्वारिंशं शतं १४३, तत एतदपेक्षया प्राग्वर्गमूलानयनस्थितशेषापेक्षया च साधिके इत्युक्तम्, एतावती चन्द्रसत्के मण्डले मण्डले परिरयपरिवृद्धिरवसेयेति ॥ २२० ॥

॥ इतिश्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां मण्डलविभागप्रतिपादकं दशमं प्राभृतं समाप्तम् ॥

तदेवमुक्तं दशमं प्राभृतं, साम्प्रतमयनपरिमाणप्रतिपादकमेकादशं प्राभृतं वक्तुकाम आह—

छहिं मासेहिं दिणयरो तेसीयं चरइ मंडलसयं तु । अयणम्मि उत्तरे दाहिणे य एसो विही होइ ॥ २२१ ॥

षड्भिर्मासैः 'दिनकरः' सूर्यः त्र्यशीत्यधिकं मण्डलशतं चरति, तथाहि-सर्वाभ्यन्तरानन्तरे द्वितीये मण्डले यदा सूर्य उपसंक्रम्य चारं चरति तदा स नवस्य सूर्यसंवत्सरस्य प्रथमोऽहोरात्रः, द्वितीयेन चाहोरात्रेण सर्वाभ्यन्तरात् तृतीयं मण्डलं चरति, एवं षड्भिर्मासैः त्र्यशीत्यधिकं मण्डलशतं चीर्णं भवति, एष दक्षिणायनस्य षण्मासप्रमाणस्य पर्यन्तः, ततः सर्वबाह्यान्मण्डलादर्वागनन्तरे द्वितीये मण्डले यदोपसंक्रम्य सूर्यश्चारं चरति तदा स उत्तरायणस्य प्रथमो दिवसः, सर्वबाह्यान्मण्डलादर्वाक्तनं तृतीयं मण्डलं द्वितीयेनाहोरात्रेण चरति, एवं षड्भिर्मासैस्त्र्यशीत्यधिकं मण्डलशतं सर्वाभ्यन्तरमण्डलपर्यवसानम्, एष दाक्षिणस्मिन् उत्तरस्मिन् वाऽयने 'विधिः' प्रकारो भवति ॥ २२१ ॥ अत्रार्थे च करणं विवक्षुः प्रथमतस्तदुपक्षेपमाह—

तेसीयं दिवससयं अयणे सूरस्स होइ पडिपुन्नं । सुण तस्स कारणविहिं पुव्वायरिओवएसेणं ॥ २२२ ॥

सूर्यस्यायनं दाक्षिणमुत्तरं वा भवति परिपूर्णं त्र्यशीत्यधिकं दिवसशतं, कथमेतदवसीयते? इति चेद्, उच्यते, इह युगमध्ये दश सूर्यस्यायनानि भवन्ति, युगे च दिवसानामष्टादश शतानि त्रिंशदधिकानि १८३०, ततोऽत्र त्रैराशिककर्मावतारः, यदि दशभिरयनैरष्टादश दिवसशतानि त्रिंशदधिकानि लभ्यन्ते तत एकेनायनेन किं लभामहे?, राशित्रयस्थापना १०-१८३०-१ अत्रान्त्येन राशिना एककलक्षणेन मध्यमस्य राशेर्गुणनं, एकेन च गुणितं तदेव भवतीति जातान्यष्टादश शतान्येव त्रिंशदधिकानि, तेषामाद्येन राशिना

अयन ज्ञान करणं

दशकलक्षणेन भागो ह्रियते, लब्धं त्र्यशीत्यधिकं दिवसशतम्, एतावदेकस्य दक्षिणस्योत्तरस्य वाऽयनस्य परिमाणं, सम्प्रति तस्य दक्षिणस्योत्तरस्य वाऽयनस्य परिज्ञानविषये 'कारकविधिं' करणरूपं प्रकारं पूर्वाचार्योपदेशेन प्रतिपाद्यमानं शृणु ॥ २२२ ॥ तत्र करणमाह–

सूरस्स अयणकरणं पव्वं पन्नरससंगुणं नियमा । तिहिसंखित्तं संतं बावट्ठीभागपरिहीणं ॥ २२३ ॥

तेसीयसयविभत्तंमि तम्मि लद्धं तु रूवमाएज्जा । जइ लद्धं होइ समं नायव्वं उत्तरं अयणं ॥ २२४ ॥

अह हवइ भागलद्धं विसमं जाणाहि दक्खिणं अयणं । जे अंसा ते दिवसा होंति पवत्तस्स अयणस्स॥२२५॥

सूर्यस्यायनपरिज्ञानविषये करणमिदं, वक्ष्यमाणमिति शेषः, तदेवाह- 'पर्व' पर्वसंख्यानं पंचदशसंगुणं नियमात्कर्त्तव्यं, किमुक्तं भवति?- युगमध्ये विवक्षितदिनात् प्राग् यानि पर्वाण्यतिक्रान्तानि तत्संख्या पंचदशगुणा कर्त्तव्येति, ततः पर्वणामुपरि यास्तिथयोऽतिक्रान्तास्तास्तत्र प्रक्षिप्यन्ते, ततो 'बावट्ठीभागपरिहीण'मिति प्रत्यहोरात्रमेकैकेन द्वाषष्टिभागेन परिहीयमानेन ये निष्पन्ना अवमरात्रास्तेऽप्युपचाराद् द्वाषष्टिभागा इत्युच्यन्ते, तैः परिहीनं विधेयं, ततस्तस्मिन् त्र्यशीत्यधिकेन शतेन विभक्ते सति यल्लब्धं रूपमेकद्व्यादिकं तदादेयात्-गृह्णीयात्, पृथक्स्थाने स्थापयेदित्यर्थः, तत्र यदि लब्धं समं-द्विचतुरादिरूपं भवति तदोत्तरमयनमनन्तरमतीतं ज्ञातव्यं, अथ भवति भागे लब्धं विषमं तदा जानीहि दक्षिणमयनमनन्तरमतीतं, ये तु शेषा अंशाः पश्चादवतिष्ठन्ते ते तत्कालप्रवृत्तस्यायनस्य दिवसा भवन्ति ज्ञातव्याः ॥ यथा युगमध्ये नवमासातिक्रमे पंचम्यां केनापि पृष्टं–किमयनमनन्तरमतीतं किं वा

साम्प्रतमयनं वर्त्तते ? इति, तत्र नवसु मासेष्वष्टादश पर्वाणि, ततोऽष्टादश पंचदशभिर्गुण्यन्ते, जाते द्वे शते सप्तत्यधिके२७०, नवानां च मासानामुपरि पंचम्यां पृष्टमिति पंच तत्र प्रक्षिप्यन्ते, जाते द्वे शते पंचसप्तत्यधिके२७५, नवसु मासेषु चत्वारोऽवमरात्रा भवन्ति, ततस्ते चतुर्भिर्हीनाः क्रियन्ते, जाते द्वे शते एकसप्तत्यधिके २७१, अस्या राशेस्त्र्यशीत्यधिकेन शतेन भागो ह्रियते, लब्धमेकं रूपं, शेषास्तिष्ठन्त्यष्टाशीतिः, तत आगतमिदम्-एकमयनमतीतं, तदपि च दक्षिणायनं, साम्प्रतमुत्तरायणं वर्त्तते, तस्य चाष्टाशीतितमो दिवसो व्रजतीति, तथा युगमध्ये पंचविंशतिमासातिक्रमे दशम्यां केनापि पृष्टं- कियन्त्ययनानि गतानि? किं वाऽनन्तरमयनमतीतं? किं वा साम्प्रतमयनं वर्त्तते?, तत्र पंचविंशतिमासेषु पंचाशत्पर्वाणि, तानि पंचदशभिर्गुण्यन्ते, जातानि सप्त शतानि पंचाशदधिकानि ७५०, तत उपरितना दश प्रक्षिप्यन्ते, जातानि सप्त शतानि षष्ट्यधिकानि ७६०, पञ्चविंशतिमासेषु चावमरात्रा अभवन् द्वादश, ते ततोऽपनीयन्ते, जातानि सप्त शतान्यष्टाचत्वारिंदशधिकानि७४८, एतेषां त्र्यशीत्यधिकेन शतेन भागो ह्रियते, लब्धाश्चत्वारः शेषास्तिष्ठन्ति षोडश, आगतं चत्वार्ययनानि अतिक्रान्तानि, चतुर्थं चायनमनन्तरमतीतमुत्तरायणं, सम्प्रति दक्षिणायनस्य प्रवर्त्तमानस्य षोडशो दिवसो वर्त्तत इति, एवमन्यदपि भावनीयम् ॥ २२४-२२५ ॥ साम्प्रतं चन्द्रगतस्य दक्षिणस्योत्तरस्य चायनस्य परिमाणमाह—

तेरस य मंडलाइं चऊ चत्ता सत्तसट्ठिभागा य । अयणेण चरइ सोमो नक्खत्ते अद्धमासेणं ॥ २२६ ॥

इह नक्षत्रमासार्द्धपरिमाणं चन्द्रायणं, तत आह-' नक्षत्रे ' नक्षत्रविषये योऽर्द्धमासस्तेन तावत्परिमाणेनायनेन सोमश्चरति

चन्द्रस्य दक्षिणोत्तरायणानि

॥१४३॥

त्रयोदश मण्डलानि चतुश्चत्वारिंशतं सप्तषष्टिभागान्, किमुक्तं भवति?—त्रयोदशाहोरात्राः एकस्य चाहोरात्रस्य सत्काश्चतुश्चत्वारिंशत्सप्तषष्टिभागा दक्षिणस्योत्तरस्य वा चन्द्रायणस्य परिमाणमिति, कथमेतदवसीयते? इति चेद्, उच्यते, इह नक्षत्रमासस्य परिमाणं सप्तविंशतिर्दिनानि एकस्य च दिनस्य सत्का एकविंशतिसप्तषष्टिभागाः, तत एतस्यार्द्धं यथोक्तं चन्द्रायणे परिमाणं भवति, अथवा युगे चन्द्रायणानां चतुस्त्रिंशदधिकं शतं भवति, अहोरात्राणां च युगेऽष्टादश शतानि त्रिंशदधिकानि, ततोऽत्र त्रैराशिककर्मावकाशः, यदि चतुस्त्रिंशेन शतेनाहोरात्राणामष्टादश शतानि त्रिंशदधिकानि प्राप्यन्ते तत एकेन चन्द्रायणेन किं प्राप्नुमः?, राशित्रयस्थापना १३४।१८३०।१, अत्र मध्यस्य राशेरन्त्येन राशिना गुणनं, एकेन च गुणितं तदेव भवतीति जातान्यष्टादश शतानि त्रिंशदधिकानि १८३०, तेषामाद्येन राशिना चतुस्त्रिंशदधिकशतरूपेण भागो ह्रियते, लब्धास्त्रयोदश, शेषास्तिष्ठंत्यष्टाशीतिः, सा सप्तषष्ट्या गुण्यते, जातानि अष्टपञ्चाशच्छतानि षण्णवत्यधिकानि ५८९६, तेषां चतुस्त्रिंशेनाधिकेन शतेन भागो ह्रियते, लब्धाश्चतुश्चत्वारिंशत् सप्तषष्टिभागाः ॥२२६॥ सम्प्रति चन्द्रायणपरिज्ञाननिमित्तं करणमाह—

चंदायणस्स करणं पव्वं पन्नरससंगुणं नियमा। तिहिसंखित्तं संतं बावट्ठीभागपरिहीणं ॥ २२७ ॥
नक्खत्तअद्धमासेण भइए लद्धं तु रूवमाएज्जा। जइ लद्धं हवइ समं नायव्वं दक्खिणं अयणं ॥ २२८ ॥
अह हवइ भागलद्धं विसमं जाणाहि उत्तरं अयणं। सेसाणं अंसाणं ससिस्स इणमो भवे करणं ॥ २२९ ॥
सत्तट्ठिए विभत्ते जं लद्धं तइ हवंति दिवसा उ। अंसा य दिवसभागा पवत्तमाणस्स अयणस्स ॥ २३०
चन्द्रगतस्य दक्षिणस्योत्तरस्य वाऽयनस्य परिज्ञानाय करणमिदं, यानि युगमध्ये पर्वाण्यतिक्रान्तानि तत्पर्वसङ्ख्यानं पंच-

द्वाभ्यां गुण्यन्ते, पुनः पर्वणामुपरि यास्तिथयोऽतिक्रान्तास्तास्तत्र प्रक्षिप्यन्ते, ततो द्वाषष्टिभागपरिहानं–अवमरात्रपरिहानं क्रियते, ततो त्र्यशीत्यधिकेन शतेन तस्मिन् भक्ते सति यल्लब्धमेकद्वित्र्यादिरूपं तदादद्यात्, पृथक्स्थाने स्थापयेदित्यर्थः, तत्र यदि लब्धं भवति समं तदा दक्षिणं चन्द्रायणमनन्तरमतीतमवसेयम्, अथ भवति भागलब्धं विषमं तदोत्तरं चन्द्रायणमनन्तरमतीतं जानीहि, युगस्यादौ प्रथमतश्चन्द्रायणमुत्तरं ततो दक्षिणायनमतोऽत्र समे भागे दक्षिणायनमनन्तरमतीतमवसेयं, विषमे लब्धे उत्तरायणमिति, ये शेषास्त्वंशा ये उद्धरितास्तेषामंशानां शशिनः–चन्द्रस्य चन्द्रायणस्येत्यर्थः इदं भवति करणं, तदेवाह-'सत्तट्ठीए' इत्यादि, तेषामंशानां सप्तषष्ट्या विभक्ते सति यल्लब्धं तति प्रवर्त्तमानस्यायनस्य भवन्ति दिवसाः, येऽप्युद्धरिता दिवसभागा ज्ञातव्याः, तथाहि-युगमध्ये नवमासातिक्रमे पंचम्यां केनापि पृष्टं-किं चन्द्रायणमनन्तरमतीतं? किं वा साम्प्रतमुत्तरं दक्षिणं वा वर्त्तते?, तत्र नवसु मासेषु पर्वाण्यष्टादश, ततोऽष्टादश पंचदशभिर्गुण्यन्ते, जाते द्वे शते सप्तत्यधिके २७०, नवानां च मासानामुपरि पंचम्यां पृष्टमिति पंच तत्र प्रक्षिप्यन्ते, जाते द्वे शते सप्तत्यधिके २७५, नवसु च मासेषु चत्वारोऽवमरात्रास्ते ततोऽपनीयन्ते, जाते द्वे शते एकसप्तत्यधिके २७१, एतस्य राशेर्नक्षत्रार्द्धमासार्द्धेन भागहरणं, तत्र नक्षत्रार्द्धमासो न परिपूर्णः, किन्तु कतिपयसप्तषष्टिभागाधिकस्ततः एष सर्वोऽप्यवमरात्रशुद्धः सप्तषष्ट्या गुण्यते, जातान्यष्टादश सहस्राणि शतमेकं पंचाशदधिकं१८१५७, नक्षत्रार्द्धमासस्य च दिवसपरिमाणं त्रयोदश दिवसा एकस्य च दिवसस्य चतुश्चत्वारिंशत्सप्तषष्टिभागाः १३,४४।६७ तत्र त्रयोदश दिनानि सप्तषष्टिभागकरणार्थं सप्तषष्ट्या गुण्यंते, जातान्यष्ट शतानि एकसप्तत्यधिकानि, तत उपरितनाश्चतुश्चत्वारिंशत्सप्तषष्टिभागाः प्रक्षिप्यन्ते, जातानि नव शतानि पंचदशाधिकानि ॥१४५॥
९१५, एतैः पूर्वराशेर्भागे हृते लब्धा एकोनविंशतिः१९, शेषमुद्धरति सप्त शतानि द्विसप्तत्यधिकानि७७२, तेषां दिवसानयनाय सप्तषष्ट्या

चन्द्रायणज्ञाने करणं

भागो ह्रियते, लब्धा एकादश दिवसाः, शेषास्तिष्ठन्ति पंचत्रिंशत् सप्तषष्टिभागाः, आगतमेकोनविंशतिश्चन्द्रायणान्यतीतानि अनन्तरमतिक्रान्तं चान्द्रायणमुत्तरायणं, दक्षिणस्य चान्द्रायणस्य सम्प्रति प्रवृत्तस्य एकादश दिवसा गताः, द्वादशस्य च दिवसस्य पंचत्रिंशत् सप्तषष्टिभागाः पंचम्यां समाप्तायां भविष्यंतीति। तथा युगमध्ये पंचविंशतिमासातिक्रमे दशम्यां केनापि पृष्टं-कियन्ति चन्द्रायणानि अतिक्रान्तानि किञ्च साम्प्रतमनन्तरमतीतं चन्द्रायणं, किं वा सम्प्रति वर्त्तते चन्द्रायणं दक्षिणमुत्तरं वा इति, तत्र पंचविंशतिमासेषु पर्वाणि पंचाशत्, तानि पंचदशभिर्गुण्यंते, जातानि सप्त शतानि पंचाशदधिकानि ७५०, तत उपरितना दश प्रक्षिप्यन्ते, जातानि सप्त शतानि षष्ट्यधिकानि ७६०, पंचविंशतिमासेषु चावमरात्रा अभवन् द्वादश, ते पूर्वराशेरपनीयन्ते, जातानि सप्त शतान्यष्टाचत्वारिंशदधिकानि ७४८, तानि सप्तषष्टिभागकरणार्थं सप्तषष्ट्या गुण्यन्ते, जातानि पंचशत् सहस्राणि षण्णवत्यधिकानि ५००९६ ( ५०११६ ) तेषां नवभिः शतैः पंचदशोत्तरैः ९१५ भागो ह्रियते, लब्धाश्चतुष्पञ्चाशत्, शेषमुद्वरत्यष्टौ शतानि षडशीत्यधिकानि ८८६ ( ७०६ ) तेषां दिवसानयनाय सप्तषष्ट्या भागहरणं, लब्धास्त्रयोदश ( १० ) दिवसाः, शेषास्तिष्ठन्ति पंचदश ( षट्त्रिंशत् ३६) आगतं चतुष्पंचाशचन्द्रायणान्यतिक्रान्तानि, अनन्तरं चातिक्रान्तं चन्द्रायणं दक्षिणं, सम्प्रति वर्त्तते उत्तरं चन्द्रायणं, तस्य च त्रयोदश (१०) दिवसाः, चतुर्दशस्य (एकादशस्य ११) च दिवसस्य पंचदश (३६) सप्तषष्टिभागा दशम्यां समाप्तायां भविष्यन्तीति, एवमन्यदपि भावनीयमिति ॥ २२७-२३० ॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायामयनप्रतिपादकमेकादशं प्राभृतं परिसमाप्तम् ॥

१ अत्रत्यं गणितं केनापि कारणेन विनष्टं, प्रत्येऽप्यादर्शे एष एव पाठ इति प्रकल्प्य नूतनो न्यवेशि (  ) चिह्ने.

तदेवमुक्तमेकादशं प्राभृतं, साम्प्रतमावृत्तिप्रतिपादकं द्वादशं प्राभृतं वक्तुकामस्तदुपक्षेपमाह—

एत्तो आउट्टीओ वोच्छं जह यक्कमेण सूरस्स । चंदस्स य लहुकरणं जहदिट्ठं पुव्वसूरीहिं (सव्वदरिसीहिं) ॥२३१॥

'इतः' अयनविभागप्रतिपादनानन्तरं सूर्यस्य चन्द्रस्य चावृत्तीः-भूयो भूयो दक्षिणोत्तरगमनरूपा 'यथाक्रमेण' परिपाट्या वक्ष्यामि, तासां चावृत्तीनां प्रतिनियतप्रथमदिवसपरिज्ञानाय यथादृष्टं 'सर्वदर्शिभिः' सर्वज्ञैः तथा 'लघुकरणं' लघूपायं वक्ष्ये ॥ २३१ ॥ प्रतिज्ञातमर्थं निर्वाहयितुकामः प्रथमत आवृत्तीः प्रतिपादयति—

सूरस्स य अयणसमा आउट्टीओ जुगंमि दस होंति । चंदस्स य अउिट्ठ सयं च चोत्तीसयं चेव ॥२३२॥

'सूर्यस्य' आदित्यस्य 'युगे' चन्द्रचन्द्राभिवर्द्धितचन्द्रअभिवर्द्धितसंवत्सरपंचकपरिमाणे आवृत्तयो यथोदितस्वरूपाः अयनसमा भवन्ति, अयनप्रथमप्रवृत्तेरावृत्तिशब्दवाच्यत्वात्, ताश्च कतिसङ्ख्याः ? इत्याह-दश, तथा चन्द्रस्यावृत्तीनां शतं चतुस्त्रिंशदधिकम्, अयनानां हि प्रथमाः प्रवृत्तय आवृत्तिशब्दवाच्याः, चन्द्रस्य चायनान्येतावन्ति भवन्ति, तदावृत्तयोऽप्येतावत्य एव, अथैकस्मिन् युगे सूर्यस्य दशायनानि भवन्तीति, कथमवसीयते सूर्यस्यावृत्तयो युगे दश भवन्ति, चन्द्रमसश्चावृत्तीनां चतुस्त्रिंशं शतमिति, उच्यते, उक्तं नामतु आवृत्तयस्तयोर्दक्षिणोत्तरगमनरूपाः, ततः सूर्यस्य चन्द्रमसो वा यावन्त्ययनानि तावत्य आवृत्तयः, सूर्यस्य चायनानि दश, एतच्चावसीयते त्रैराशिकबलात्, तथाहि-यदि दिवसेन त्र्यशीत्यधिकेन शतेनैकमयनं भवति ततोऽष्टादशभिः शतै-

१ इतः एतच्चावसीयते इत्यन्तो न पाठः प्रत्ये आदर्शे.

त्रिंशदधिकैः कत्ययनानि भवन्ति?, राशित्रयस्थापना१८३-१-१८३०, अत्रान्त्येन राशिना मध्यमस्य राशेर्गुणनम्, एकस्य च गुणने तदेव भवतीति जातान्यष्टादश शतानि त्रिंशदधिकानि १८३०, तेषामाद्येन राशिना त्र्यशीत्यधिकशतप्रमाणेन भागहरणं, लब्धा दश, आगतं युगमध्ये सूर्यस्य दशायनानि भवंतीत्यावृत्तयो दश। यदि त्रयोदशभिर्दिवसैश्चतुश्चत्वारिंशता च सप्तषष्टिभागैरेकं चन्द्रस्यायनं भवति ततोऽष्टादशभिर्दिवसशतैस्त्रिंशदाधिकैः कति चन्द्रायणानि भवन्ति?, राशित्रयस्थापना–१३,४४।६७-१८३०-१ तत्राद्ये राशौ सवर्णनाकरणार्थं त्रयोदश दिनानि सप्तषष्ट्या गुण्यन्ते, गुणयित्वा चोपरितनाश्चतुश्चत्वारिंशत् सप्तषष्टिभागाः प्रक्षिप्यन्ते, जातानि नव शतानि पंचदशोत्तराणि ९१५, यानि चाष्टादश शतानि त्रिंशदधिकानि तान्यपि सवर्णनार्थं सप्तषष्ट्या गुण्यन्ते, जातानि द्वादश लक्षाणि द्वे सहस्रे षट् शतानि दशोत्तराणि १२०२६१०, तत्रैवंरूपेणान्त्येन राशिना मध्यमस्य एककस्य गुणनं, एकस्य च गुणने तदेव भवतीत्येष एव राशिर्जातः, तस्य नवभिः शतैः पंचदशोत्तरैर्भागो ह्रियते, लब्धं चतुस्त्रिंशं शतं, एतावन्ति चन्द्रायणानि युगमध्ये भवन्तीति एतावत्यश्चन्द्रमस आवृत्तयः ॥ २३२ ॥ सम्प्रति या सूर्यस्यावृत्तिर्यस्मिन् दिने भवति तां तथा प्रतिपादयति–

पढमा बहुलपडिवए बिइया बहुलस्स तेरसीदिवसे। सुद्धस्स य दसमीए बहुलस्स य सत्तमीए उ ॥ २३३ ॥
सुद्धस्स चउत्थीए पवत्तए पंचमी उ आउट्टी। एया आउट्टीओ सव्वाओ सावणे मासे ॥ २३४ ॥

इह सूर्यस्य दशावृत्तयो भवन्ति, एतच्चानन्तरमेव भावितं, तत्र पंचावृत्तयः श्रावणे मासे भवन्ति, तासां मध्ये प्रथमा बहुलपक्षे

ज्योतिष्करण्डे श्रीमलयगिरीयायां वृत्तौ १२आवृत्तिप्राभृतं ॥१४०॥

आवृत्तीनां नक्षत्राणि तिथिज्ञाने करणं

प्रतिपदि १ द्वितीया 'बहुलस्य' बहुलपक्षस्य सम्बन्धिनि त्रयोदशीरूपे दिवसे २ तृतीया 'शुद्धस्य' शुक्लपक्षस्य दशम्यां ३ चतुर्थी बहुलपक्षस्य सप्तम्यां ४ 'शुद्धस्य' शुक्लपक्षस्य चतुर्थ्यां प्रवर्त्तते पंचमी आवृत्तिः ५, एताः सर्वा अप्यावृत्तयः श्रावणे मासे वेदितव्याः ॥ २३३-२३४ ॥ साम्प्रतमेता आवृत्तयो येन नक्षत्रेण युता भवन्ति तन्नक्षत्रनिरूपणार्थमाह-

पढमा होइ अभिइणा संठाणाहि य तहा विसासाहिं । रेवतिए उ चउत्थी पुव्वाहिं फग्गुणीहि तहा ॥ २३५ ॥

श्रावणमासभाविनीनामनन्तरोदितस्वरूपाणां पंचानामावृत्तीनां मध्ये प्रथमाऽऽवृत्तिरभिजिता नक्षत्रेण युता भवति, द्वितीया 'संठाणाहिं' ति मृगशिरसा, तृतीया विशाखाभिः, चतुर्थी रेवत्या, पंचमी पूर्वाफाल्गुनीभिः ॥ २३५ ॥ अधुना माघमासे भाविन्य आवृत्तयो यासु तिथिषु भवन्ति ता अभिदधाति-

बहुलस्स सत्तमीए पढमा सुद्धस्स तो चउत्थीए । बहुलस्स य पाडिवए बहुलस्स य तेरसीदिवसे ॥ २३६ ॥
सुद्धस्स य दसमीए पवत्तए पंचमी उ आउट्टी । एया आउट्टीओ सव्वाओ माघमासंमि ॥ २३७ ॥

माघमासे प्रथमाऽऽवृत्तिः 'बहुलस्य' कृष्णपक्षस्य सप्तम्यां भवति १ द्वितीया शुद्धस्य-शुक्लपक्षस्य चतुर्थ्यां २ तृतीया बहुलपक्षस्य प्रतिपदि ३ चतुर्थी बहुलपक्षस्य त्रयोदशीदिवसे ४ पंचमी शुक्लपक्षस्य दशम्यां प्रवर्त्तते ५, एताः सर्वा अप्यावृत्तयो माघमासे भवन्ति॥ २३६ २३७ ॥ साम्प्रतमेतासामारम्भे नक्षत्रयोगनिरूपणार्थमाह-

हत्थेण होइ पढमा सयभिसयाहि य ततो य पुस्सेण । मूलेण कत्तियाहि य आउट्टीओ य हेमंते ॥ २३८ ॥

'हेमन्ते' माघमासे प्रथमाऽऽवृत्तिर्भवति 'हस्तेन' हस्तनक्षत्रेण युता १ द्वितीया शतभिषजा २ तृतीया पुष्येण ३ चतुर्थी मूलेन ४ पंचमी कृत्तिकाभिः ५ ॥ २३८ ॥ इदानीमेतासामावृत्तीनां मध्ये या यस्यामुक्तस्वरूपायां तिथौ भवति तद्विषयं करणमाह–

आउट्टिएहिं एगूणियाहि गुणियं सयं तु तेसीयं । जेण गुणं तं तिगुणं रूवहिगं पक्खिवे तत्थ ॥ २३९ ॥

पन्नरस भाइयंमि उ जं लद्धं तं ततिसु [होइ] पव्वेसु । जे अंसा ते दिवसा आउट्टी तत्थ बोद्धव्वा ॥ २४० ॥

आवृत्तिभिरेकोनिकाभिर्गुणितं शतं त्र्यशीत्यधिकं, किमुक्तं भवति?- याऽऽवृत्तिर्विवक्षिततिथियुक्ता ज्ञातुमिष्यते तत्संख्या एकोना क्रियते, ततस्तया त्र्यशीत्यधिकं शतं गुण्यते, गुणयित्वा च येनांकस्थानेन गुणितं त्र्यशीत्यधिकं शतं तदंकस्थानं त्रिगुणं कृत्वा रूपाधिकं सत् तत्र-पूर्वराशौ प्रक्षिप्यते, ततः पंचदशभिर्भागो ह्रियते, हृते च भागे यल्लब्धं 'ततिषु' तावत्संख्याकेषु पर्वस्वतिक्रान्तेषु सा विवक्षिताऽऽवृत्तिर्भवति, ये त्वंशाः पश्चादुद्धरितास्ते दिवसा ज्ञातव्याः, तत्र तेषु दिवसेषु मध्ये चरमदिवसे आवृत्तिर्बोद्धव्येति भावः, इहावृत्तीनामेवं क्रमो-युगे प्रथमाऽऽवृत्तिः श्रावणे मासे द्वितीया माघे मासे तृतीया भूयः श्रावणे मासे चतुर्थी माघमासे पुनरपि पंचमी श्रावणे षष्ठी माघे भूयः सप्तमी श्रावणे अष्टमी माघे नवमी श्रावणे दशमी माघमासे इति, तत्र प्रथमा किलावृत्तिः कस्यां तिथौ भवति ? इति यदि जिज्ञासा तदा प्रथमावृत्तिस्थाने एकको ध्रियते, सा रूपोना क्रियत इति न किमपि पश्चाद्रूपं प्राप्यते, ततः पाश्चात्ययुगभावनी या दशमी आवृत्तिस्तत्संख्या दशकरूपा ध्रियते, तदा (या) त्र्यशीत्यधिकं शतं गुण्यते, जातान्यष्टादश शतानि त्रिंशदधिकानि १८३०, दशकेन किल गुणितं त्र्यशीत्यधिकं शतं ततस्ते दश त्रिगुणीक्रियन्ते, जातास्त्रिंशत्, सा रूपाधिका

करण तिथि करणं

विधेया, जाता एकत्रिंशत्, सा पूर्वराशौ प्रक्षिप्यते, जातान्यष्टादश शतान्येकषष्ट्याधिकानि १८६१, तेषां पंचदशभिर्भागो ह्रियते, लब्धा चतुर्विंशतिः एकशता, शेषं तिष्ठत्येकं रूपम्, आगतं चतुर्विंशतिशतपर्वात्मके पाश्चात्ये युगेऽतिक्रान्तेऽभिनवे युगे प्रवर्त्तमाने प्रथमाऽऽवृत्तिः प्रथमायां तिथौ प्रतिपदि भवतीति, तथा कस्यां तिथौ द्वितीया माघमासभाविन्यावृत्तिर्भवतीति यदि जिज्ञासा ततो द्विको ध्रियते, स रूपोनः कार्य इति जात एककः, तेन त्र्यशीत्यधिकं शतं गुण्यते, 'एकेन च गुणितं तदेव भवती'ति त्र्यशीत्यधिकमेव शतम्, एकेन च गुणितं किल त्र्यशीत्यधिकं शतमित्येकस्त्रिगुणीक्रियते, जातस्त्रिकः, स रूपाधिको विधीयते इति जाताश्चत्वारः,ते पूर्वराशौ प्रक्षिप्यन्ते, जातं सप्ताशीत्यधिकं शतं १८७, तस्य पंचदशभिर्भागो ह्रियते, लब्धा द्वादश, शेषाः तिष्ठन्ति सप्त, आगतं युगे द्वादशसु पर्वस्वतिक्रान्तेषु माघमासे बहुलपक्षे सप्तम्यां द्वितीया माघमासभाविनीनां मध्ये प्रथमाऽऽवृत्तिरिति, तथा तृतीया आवृत्तिः कस्यां तिथौ भवतीति जिज्ञासायां त्रिको ध्रियते, रूपोनः कर्त्तव्य इति जातो द्विकस्तेन त्र्यशीत्यधिकं शतं गुण्यते, जातानि षट्षष्ट्याधिकानि त्रीणि शतानि, द्विकेन किल गुणितं त्र्यशीत्यधिकं शतमिति द्विकस्त्रिगुणीक्रियते, जाताः षट्, ते रूपाधिकाः क्रियन्ते, जाताः सप्त, ते पूर्वराशौ प्रक्षिप्यन्ते, जातानि त्रीणि शतानि त्रिसप्तत्यधिकानि ३७०, तेषां पंचदशभिर्भागो ह्रियते, लब्धाश्चतुर्विंशतिः २४, शेषास्तिष्ठन्ति त्रयोदश, आगतं युगे तृतीयाऽऽवृत्तिः श्रावणे मासे भाविनीनां मध्ये द्वितीया च चतुर्विंशतिपक्षातिक्रमे श्रावणमासे बहुलपक्षत्रयोदशे दिवसे भवतीति, एवमन्यास्वप्यावृत्तीषु करणभावना कार्या ॥ २३९-२४० ॥ सम्प्रति नक्षत्रपरिज्ञानाय करणमभिधित्सुः प्रथमतस्तद्विषयं ध्रुवराशिमाह–

पंच सया पडिपुन्ना तिसत्तरा नियमसो मुहुत्ताणं । छत्तीस बिसट्ठि (तीय) भागा छच्चेव य चुन्निया भागा॥२४१॥

पंच शतानि 'त्रिसप्ततानि' त्रिसप्तत्यधिकानि परिपूर्णानि मुहूर्त्तानां भवन्ति षट्त्रिंशच्च द्वाषष्टिभागाः षट् चैव चूर्णिकाभागाः, एकस्य द्वाषष्टिभागस्य सत्काः षट् सप्तषष्टिभागा इत्यर्थः, एष वक्ष्यमाणकरणे ध्रुवराशिः, कथमेतस्योत्पत्तिः? इति चेद्, उच्यते, इह यदि दशभिः सूर्यायनैः सप्तषष्टिश्चन्द्रनक्षत्रपर्याया लभ्यन्ते तत एकेन सूर्यायनेन किं लभामहे?, राशित्रयस्थापना १०।६७।१, अत्रान्त्येन राशिना एककेन मध्यमस्य राशेः सप्तषष्टिलक्षणस्य गुणनं क्रियते, एकेन च गुणितं तदेव भवतीति जाता सप्तषष्टिः ६७, तस्य दशभिर्भागहारे लब्धाः षट् पर्यायाः, एकस्य च पर्यायस्य सप्त दशभागाः, ये च सप्तमस्य पर्यायस्य सप्त दशभागास्तद्गतमुहूर्त्तप्रमाणमधिकृतगाथायामुपन्यस्तम् । अथ कथमेतदवसीयते एतावन्तस्तत्र मुहूर्त्ता भवन्ति ?, उच्यते, त्रैराशिकक्रमावतारबलात्, तथाहि-यदि दशभिर्भागैः सप्तविंशतिर्दिनानि एकस्य च दिनस्यैकविंशतिः सप्तषष्टिभागा लभ्यन्ते ततः सप्तभिर्भागैः किं लभामहे ?, राशित्रयस्थापना- १०-२७,२१।६७-७, अत्रान्त्येन राशिना सप्तकलक्षणेन मध्यस्य राशेः सप्तविंशतिर्दिनानि गुण्यन्ते, जातं नवाशीत्यधिकं शतं १८९, तस्याद्येन राशिना दशकलक्षणेन भागे हृते लब्धा अष्टादश दिवसाः, ते च मुहूर्त्तानयनाय त्रिंशता गुण्यन्ते, जातानि पंच शतानि चत्वारिंशदधिकानि मुहूर्त्तानां, शेषा उपरि तिष्ठन्ति नव, ते मुहूर्त्तकरणार्थं त्रिंशता गुण्यन्ते, जाते द्वे शते सप्तत्यधिके २७०, तयोर्दशभिर्भागे हृते लब्धाः सप्तविंशतिर्मुहूर्त्ताः २७, ते पूर्वस्मिन् मुहूर्त्तराशौ प्रक्षिप्यन्ते, जातानि पंच शतानि सप्तषष्ट्यधिकानि ५६७, येऽपि चैकविंशतिः सप्तषष्टिभागा दिनस्य तेऽपि मुहूर्त्तभागकरणार्थं त्रिंशता गुण्यन्ते, जातानि षट् शतानि त्रिंशदधिकानि, तानि सप्तभिर्गुण्यन्ते, जातानि दशोत्तराणि चतुश्चत्वारिंशच्छतानि ४४१०, तेषां दशभिर्भागे हृते लब्धानि चत्वारि शतानि एकचत्वारिंशदधिकानि ४४१, तेषां सप्तषष्ट्या भागे हृते लब्धाः षट् मुहूर्त्ताः, ते पूर्वमुहूर्त्तराशौ प्रक्षिप्यन्ते, जाताः

सर्वसंख्यया मुहूर्त्तानां पंच शतानि त्रिसप्तत्यधिकानि ५७३, शेषं चोद्धरति-एकोनचत्वारिंशत् , सा द्वापष्ट्या गुण्यते, जातानि चतुर्विंशानि शतानि अष्टादशाधिकानि २४१८, तेषां सप्तषष्ट्या भागो ह्रियते, लब्धाः षट्त्रिंशद्वाद् षष्टिभागाः, शेषास्तिष्ठन्ति षट्, ते चैकस्य द्वाषष्टिभागस्य सत्काः सप्तषष्टिभागाः, एते चातिश्लक्ष्णरूपा भागा इति चूर्णिका भागा व्यपदिश्यन्ते ॥ २४१ ॥ तदेवमुक्तो ध्रुवराशिः, सम्प्रति करणमाह—

. आउट्टिएहिं एगूणिएहिं गुणितं हवेज्ज धुवरासी । एयं मुहुत्तगाणियं एत्तो वोच्छामि सोहणगं ॥ २४२ ॥

यस्यां यस्यामावृत्तौ नक्षत्रयोगो ज्ञातुमिष्यते तया तयाऽऽवृत्त्या 'एकोनिकया' एकरूपहीनया गुणितः अनन्तरोदितस्वरूपो ध्रुवराशिर्भवेद् यावान् एतन्मुहूर्त्तपरिमाणं, अत ऊर्ध्वं वक्ष्यामि शोधनकं ॥२४२॥ तत्र प्रथमतोऽभिजितो नक्षत्रस्य शोधनकमाह—

अभिइस्स नव मुहुत्ता विसट्ठिभागा य हुंति चउवीसं । छावट्ठी य समग्गा भागा सत्तट्ठिछेयकया ॥ २४३ ॥
उगुणट्ठं पोट्ठवया तिसु चेव नवोत्तरेसु रोहिणिया । तिसु नवनउईसु भवे पुणव्वसू उत्तराफग्गू ॥ २४४ ॥
पंचेव अउणपन्नासयाइं उगुणत्तराइं छच्चेव । सोज्झाणि विसाहाणं मूले सत्तेव चोयाला ॥ २४५ ॥
अट्ठसय उगुणवीसा सोहणगं उत्तराअसाढाणं । चउवीसं खलु भागा छावट्ठी चुण्णिया भाया ॥ २४६ ॥

अभिजितः-अभिजिन्नक्षत्रस्य शोधनकं नव मुहूर्त्ताः एकस्य च मुहूर्त्तस्य चतुर्विंशतिर्द्वाषष्टिभागाः एकस्य च द्वाषष्टिभागस्य सत्काः सप्तषष्टिच्छेदकृताः 'समग्राः' परिपूर्णाः षट्षष्टिभागाः, कथमेतस्योत्पत्तिः इति चेद् उच्यते, इहाभिजितोऽहोरात्रसत्का

एकविंशतिः सप्तषष्टिभागाश्चन्द्रेण योगस्ततोऽहोरात्रे त्रिंशन्मुहूर्त्ता इति मुहूर्त्तकरणार्थं सा एकविंशतिस्त्रिंशता गुण्यते, जातानि षट् शतानि त्रिंशदधिकानि ६३०, तेषां सप्तषष्ट्या भागो ह्रियते, लब्धा नव मुहूर्त्ताः, शेषास्तिष्ठन्ति सप्तविंशतिः, ते द्वाषष्टिभागकरणार्थं द्वाषष्ट्या गुण्यन्ते, जातानि षोडश शतानि चतुःसप्तत्यधिकानि १६७४, तेषां सप्तषष्ट्या भागो ह्रियते, लब्धाश्चतुर्विंशतिर्द्वाषष्टिभागाः, शेषास्तिष्ठन्ति षट्षष्टिस्ते चैकस्य द्वाषष्टिभागस्य सत्काः सप्तषष्टिभागा इति ॥२४३॥ सम्प्रति शेषनक्षत्राणां शोधनकमाह-'उगुणे'-त्यादि, 'एकोनषष्टम्' एकोनषष्ट्यधिकं शतं 'प्रौष्ठपदा' उत्तरभद्रपदाः, किमुक्तं भवति?- एकोनषष्ट्यधिकेन शतेनाभिजिदादीन्युत्तरभाद्रपदान्तानि नक्षत्राणि शुध्यन्ति, तथाहि-नव मुहूर्त्ता अभिजितो नक्षत्रस्य त्रिंशं श्रवणस्य त्रिंशद्धनिष्ठायाः पंचदश शतभिषजस्त्रिंशत् पूर्वभद्रपदायाः पंचचत्वारिंशदुत्तरभाद्रपदाया इति शुध्यन्त्येकोनषष्ट्याधिकेन शतेनोत्तरभाद्रपदान्तानि नक्षत्राणि, तथा त्रिषु नवोत्तरशतेषु 'रोहिणिका' रोहिणिकान्तानि शुध्यन्ति, तथाहि-एकोनषष्ट्यधिकेन शतेनोत्तरभाद्रपदान्तानि शुध्यन्ति, ततस्त्रिंशन्मुहूर्त्तै रेवती त्रिंशन्मुहूर्त्तैरश्विनी पंचदशभिर्भरणी त्रिंशता कृत्तिका पंचचत्वारिंशता रोहिणीकेति, तथा त्रिषु नवनवत्यधिकशतेषु 'पुनर्वसु' पुनर्वस्वन्तानि शुद्ध्यन्ति, तत्र त्रिभिः शतैर्नवोत्तरै रोहिणिकान्तानि शुद्ध्यन्ति, ततस्त्रिंशता मुहूर्त्तैर्मृगशिरः पंचदशभिरार्द्रा पंचचत्वारिंशता पुनर्वसुरिति, तथा पंच शतान्येकोनपंचाशदधिकानि उत्तरफाल्गुनीपर्यन्तानि, किमुक्तं भवति ?-पंचभिः शतैरेकोनपंचाशदधिकैरुत्तरफाल्गुन्यन्तानि नक्षत्राणि शुद्ध्यन्ति, तथाहि-त्रिभिः शतैर्नवनवत्यधिकैः पुनर्वस्वन्तानि शुद्ध्यन्ति, ततस्त्रिंशता मुहूर्त्तैः पुष्यः पंचदशभिरश्लेषा त्रिंशता मघा त्रिंशता पूर्वफाल्गुनी पंचचत्वारिंशता उत्तरफाल्गुनीति, तथा षट् शतानि एकोनसप्ततानि-एकोनसप्तत्यधिकानि 'विशाखानां' विशाखान्तानां नक्षत्राणि शोध्यानि, तथाहि-उत्तराफाल्गुनीपर्य-

न्तानां पंच शतान्येकोनपंचाशदधिकानि शोध्यानि, तत्रत्रिंशन्मुहूर्त्ता हस्तस्य त्रिंशच्चित्रायाः पंचदश स्वातेः पंचचत्वारिंशद्विशाखाया इति, तथा 'मूले' मूलनक्षत्रे शोध्यानि सप्त शतानि चतुश्चत्वारिंशदधिकानि ७४४, तत्र षट् शतान्येकोनसप्तत्यधिकानि ६६९ विशाखान्तानां नक्षत्राणां शोध्यानि, तत्रत्रिंशन्मुहूर्त्ता अनुराधायाः पंचदश ज्येष्ठायाः त्रिंशन्मूलस्येति, तथा अष्टौ शतानि समाहृतानि अष्टशतमेकोनविंशत्यधिकं, किमुक्तं भवति ?- अष्टौ शतान्येकोनविंशत्यधिकानि 'उत्तराषाढानाम्' उत्तराषाढान्तानां नक्षत्राणां शोधनकं, तथाहि-मूलान्तानां नक्षत्राणां शोध्यानि सप्त शतानि चतुश्चत्वारिंशदधिकानि ७४४, तत्रत्रिंशन्मुहूर्त्ताः पूर्वाषाढानक्षत्रस्य पंचचत्वारिंशदुत्तराषाढानामिति, तथा यथासम्भवं सर्वेषामपि चामीषां शोधनकानामुपर्यभिजितः सम्बन्धिनश्चतुर्विंशतिर्द्वाषष्टिभागाः शोध्याः, एकस्य च द्वाषष्टिभागस्य सत्काः षट्षष्टिश्चूर्णिकाभागाः ॥ २४६ ॥

एयाइं सोहइत्ता जं सेसं तं हविज्ज नक्खत्तं । चंदेण समाउत्तं आउट्टीए उ बोद्धव्वं ॥ २४७ ॥

'एतानि' अनन्तरोदितानि शोधनकानि यथासम्भवं शोधयित्वा यच्छेषमुद्धरति तत्र यथायोगमपान्तरालवर्त्तिषु नक्षत्रेषु शोधितेषु यन्नक्षत्रं न शुध्यति तन्नक्षत्रं चन्द्रेण समायुक्तं विवक्षितायामावृत्तौ बोद्धव्यं, तत्र प्रथमायामावृत्तौ प्रथमतः प्रवर्त्तमानायां केन नक्षत्रेण युक्तश्चन्द्र इति यदि जिज्ञासा ततः प्रथमावृत्तिस्थाने एकको ध्रियते, स रूपोनः क्रियत इति न किमपि पश्चाद्रूपमवतिष्ठति ततः पाश्चात्ययुगभाविनीनामावृत्तीनां मध्ये या दशमी आवृत्तिस्तत्संख्या दशकरूपा ध्रियते, तया प्राचीनः समस्तोऽपि ध्रुवराशिः पंच शतानि त्रिसप्तत्यधिकानि मुहूर्त्तानामेकस्य च मुहूर्त्तस्य षट्त्रिंशद् द्वाषष्टिभागाः एकस्य च द्वाषष्टिभागस्य षट् सप्त-

षष्टिभागाः ५७३-३६।६२-६।६७ इत्येवंप्रमाणो गुण्यते, तत्र मुहूर्त्तराशौ दशभिर्गुणिते जातानि सप्तपंचाशच्छतानि त्रिंशदधिकानि ५७३०, येऽपि षट्त्रिंशद् द्वाषष्टिभागास्तेऽपि दशभिर्गुणिता जातानि त्रीणि शतानि षष्ट्यधिकानि ३६०, तेषां द्वाषष्ट्या भागे हृते लब्धाः पंच मुहूर्त्तास्ते पूर्वराशौ प्रक्षिप्यन्ते, जातः पूर्वराशिः सप्तपंचाशच्छतानि पंचत्रिंशदधिकानि ५७३५, शेषास्तिष्ठन्ति द्वाषष्टि-भागाः पंचाशत्, येऽपि च षट् चूर्णिकाभागास्तेऽपि दशभिर्गुणिता जाताः षष्टिः,तत एतस्माच्छोधनकानि शोध्यन्ते,तत्रोत्तराषाढान्तानां नक्षत्राणां शोधनकमष्टौ शतान्येकोनविंशत्यधिकानि ८१९, एतानि किल यथोदितराशेः सप्तकृत्वः शुद्धिमाप्नुवन्तीति सप्तभिर्गुण्यन्ते, जातानि सप्तपंचाशच्छतानि त्रयस्त्रिंशदधिकानि ५७३३, तानि सप्तपंचाशच्छतेभ्यः पंचत्रिंशदधिकेभ्यः पात्यन्ते, स्थितौ पश्चाद् द्वौ मुहूर्त्तौ, तौ द्वाषष्टिभागकरणार्थं द्वाषष्ट्या गुण्येते, जातं चतुर्विंशं शतं द्वाषष्टिभागानां १२४, तत् प्राक्तने पंचाशल्लक्षणे द्वाषष्टिभाग-राशौ प्रक्षिप्यते, जातं चतुःसप्तत्यधिकं शतं १७४ द्वाषष्टिभागानां, तथा येऽभिजितः सम्बन्धिनश्चतुर्विंशतिर्द्वाषष्टिभागाः शोध्यास्ते सप्तभिर्गुण्यते, जातमष्टषष्ट्यधिकं शतं १६८, तच्चतुःसप्तत्यधिकात् शतात् शोध्यते, स्थिताः शेषाः षड् द्वाषष्टिभागाः, ते च चूर्णि-काभागकरणार्थं सप्तषष्ट्या गुण्यन्ते, गुणयित्वा च ये प्राक्तनाः षष्टिः सप्तषष्टिभागास्ते प्रक्षिप्यन्ते, जातानि चत्वारि शतानि द्वाषष्ट्य-धिकानि ४६२, ततो येऽभिजितः सम्बन्धिनः षट्षष्टिश्चूर्णिकाभागास्ते सप्तभिर्गुण्यन्ते, जातानि चत्वारि शतानि द्वाषष्ट्यधिकानि ४६२, तान्यनन्तरनिगदितराशेः शोध्यन्ते, स्थितं पश्चात् शून्यं, तत आगतं-साकल्येनोत्तराषाढानक्षत्रे चन्द्रेण भुक्ते सति तदनन्तर-स्याभिजितो नक्षत्रस्य प्रथमसमये युगे प्रथमाऽऽवृत्तिः प्रवर्त्तत इति, तथा चोक्तं सूर्यप्रज्ञप्तौ– एएसि णं पंचण्हं संवच्छराणं पढमं वासिकिं आउट्टिं चंदे केणं नक्खत्तेणं जोएइ ?, ता अभिइणा, अभीइस्स पढमसमए" इति। तथा कस्मिन्नक्षत्रे चन्द्रेण भुज्यमाने युगे

॥१५६॥

द्वितीया माघमासभाविनीनां मध्ये प्रथमाऽऽवृत्तिः प्रवर्त्तते ? इति जिज्ञासायां द्विको ध्रियते, स रूपोनः कार्य इति जात एकस्तेन ध्रुवराशिर्गुण्यते, जातस्तदवस्थः, एकेन गुणितं तदेव भवतीति वचनात्, तत एतस्माद् यथासम्भवं शोधनकानि शोध्यन्ते, ततः पंचभिः शतैरेकोनपंचाशदधिकैरुत्तरफाल्गुन्यन्तानि नक्षत्राणि शुद्धानि, शेषास्तिष्ठन्ति चतुर्विंशतिर्मुहूर्त्ताः, षट्त्रिंशतश्च द्वाषष्टिभागेभ्यश्चतुर्विंशतिर्द्वाषष्टिभागा अभिजितः सम्बन्धिनः पातिताः, शेषाः स्थिता द्वादश, तेभ्य एकं रूपं गृह्यते, स्थिताः शेषा एकादश, रूपं च गृहीत्वा सप्तषष्टिभागाः क्रियन्ते, कृत्वा च तन्मध्ये ध्रुवराशिगताः षट् सप्तषष्टिभागाः प्रक्षिप्यन्ते, जाता त्रिसप्ततिस्तस्याः षट्षष्टिः सप्तषष्टिभागाः शोधिताः, शेषाः सप्त भागाः, तत इदमागतं-युगे स्वरूपतो द्वितीया माघमासभाविनीनां मध्ये प्रथमाऽऽवृत्तिरुत्तरफाल्गुनीनक्षत्रे साकल्येन भुक्ते हस्तनक्षत्रस्य च चतुर्विंशतिमुहूर्त्तेषु एकादशसु च द्वाषष्टिभागेषु सप्तसु चूर्णिकाभागेषु भुक्तेषु शेषेषु च पंचसु मुहूर्त्तेषु पंचाशति द्वाषष्टिभागेषु षष्टिसंख्येषु च चूर्णिकाभागेषु स्थितेषु प्रवर्त्तते, तथा चोक्तं सूर्यप्रज्ञप्तौ- "एएसि णं पंचण्हं संवच्छराणं पढमं हेमंती आउट्टी केणं नक्खत्तेणं जोएइ ?, ता हत्थेणं, हत्थस्स णं पंच मुहुत्ता पण्णासं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छित्ता सट्ठि चुण्णियाभागा सेसा" इति। तथा युगे तृतीया श्रावणमासभाविनीनां मध्ये द्वितीयाऽऽवृत्तिः केन नक्षत्रेण चन्द्रमसो योगः प्रवर्त्तते? इति जिज्ञासायां त्रिको ध्रियते, स रूपोनः क्रियते, जातो द्वौ, ताभ्यां ध्रुवराशिर्गुण्यते, जातान्येकादश शतानि षट्चत्वारिंशदधिकानि ११४६ द्वाषष्टिभागाश्च द्विसप्ततिः ७२ चूर्णिकाभागा द्वादश, एतस्मादष्टौ शतान्येकोनविंशत्यधिकानि उत्तराषाढान्तानि शोध्यन्ते, स्थितानि शेषाणि त्रीणि शतानि सप्तविंशत्यधिकानि ३२७, तथा द्वासप्ततेश्चतुर्विंशतिर्द्वाषष्टिभागाः शोध्यन्ते, स्थिता अष्टचत्वारिंशत्, तत एकरूपं गृह्यते, स्थिताः पश्चात् सप्तचत्वारिंशत्, यच्च रूपं गृहीतं

तत् सप्तषष्टिभागीक्रियते, कृत्वा च ते पूर्वोक्तेषु द्वादशसु सप्तषष्टिभागेषु मध्ये प्रक्षिप्यन्ते, जाता एकोनाशीतिः ७९, तस्याः षट्षष्टिः शुद्धा, स्थिताः शेषास्त्रयोदश, ततो भूयस्त्रिभिः शतैर्नवोत्तरै रोहिणिकान्तानि नक्षत्राणि शुद्धानि, स्थिताः पश्चादष्टादश मुहूर्त्ताः १८, सप्तचत्वारिंशतश्चतुर्विंशतिर्द्वाषष्टिभागाः शुद्धाः, स्थिताः पश्चात्त्रयोविंशतिः, ततो रूपं गृहीतं, स्थिताः पश्चाद् द्वाविंशतिः, रूपं च गृहीत्वा सप्तषष्टिश्चूर्णिकाभागाः कृताः त्रयोदश पाश्चात्याश्च चूर्णिकाभागा अत्र प्रक्षिप्ताः, जाता अशीतिः, तस्याः षट्षष्टिः शुद्धा, स्थिताः शेषाश्चतुर्दश १४, तत एतदागतं-युगे स्वरूपतस्तृतीया श्रावणमासे भाविनीनां मध्ये द्वितीयाऽऽवृत्तिश्चन्द्रेण रोहिणिनक्षत्रे साकल्येन भुक्ते मृगशिरसो नक्षत्रस्याष्टादशमुहूर्त्तेषु द्वाविंशतौ च द्वाषष्टिभागेषु चतुर्दशसु च चूर्णिकाभागेषु भुक्तेषु शेषेषु चैकादशमुहूर्त्तेष्वेकोनचत्वारिंशति च द्वाषष्टिभागेषु त्रिपंचाशच्चूर्णिकाभागेषु स्थितेषु प्रवर्त्तते, तथा चोक्तं सूर्यप्रज्ञप्तौ-"ता एएसि णं पंचण्हं संवच्छराणं दोच्चं वासिकिं आउट्टिं चंदे केणं नक्खत्तेणं जोएइ ?, ता संठाणाहिं, संठाणाणं एक्कारस मुहुत्ता ऊयालीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं सत्तट्ठिहा छित्ता तेवण्णं चुण्णियाभागा सेसा" इति, एवं शेषाणामप्यावृत्तीनां चन्द्रस्य नक्षत्रेण योगं करणं भावयितव्यं, ग्रन्थगौरवभयात्तु नास्माभिर्भाव्यते, सूर्यप्रज्ञप्तिटीकाऽऽर्थे निरीक्षितव्या ॥ २४७ ॥ साम्प्रतमावृत्तिषु सूर्यस्य नक्षत्रे योगमभिधित्सुराह--

अब्भिंतराहि निंतो आइच्चो पुस्सजोगमुवगम्म । सव्वा आउट्टीओ करेइ सो सावणे मासे ॥ २४८ ॥

श्रावणे मासे सर्वाभ्यन्तरान्मण्डलान् निष्क्रामन् सूर्यः सर्वा अप्यावृत्तीः करोति पुष्येण सह योगमुपगम्य, नान्यथा, तत्रापि

पुष्यस्य त्रयोविंशतिं सप्तषष्टिभागान् भुक्त्वा, कथमेतदवसीयते इति चेद् उच्यते, त्रैराशिकात्, तथाहि-यदि दशभिरयनैः पंच सूर्यकृतान् नक्षत्रपर्यायान् लभामहे तत एकेनायनेन किं लभ्यते?, राशित्रयस्थापना १०-५-१, अत्रान्त्येन राशिना एककलक्षणेन मध्यमस्य राशेः पंचकरूपस्य गुणनं, जाताः पंचैव, तेषां दशभिर्भागे लब्धमर्द्धं पर्यायस्य, तत्र नक्षत्रपर्यायः सप्तषष्टिभागरूपः अष्टादश शतानि त्रिंशदधिकानि १८३०, तथाहि-षड् नक्षत्राणि शतभिषक्प्रभृतीन्यर्द्धक्षेत्राणि, ततस्तेषां प्रत्येकं सार्द्धास्त्रयस्त्रिंशत्सप्तषष्टिभागाः, तत्र सार्द्धा त्रयस्त्रिंशत् षड्भिर्गुण्यते, जाते द्वे शते एकोत्तरे २०१, षट् च नक्षत्राण्युत्तरभद्रपदादीनि द्व्यर्धक्षेत्राणि, ततस्तेषां प्रत्येकमेकं शतमेकस्य चार्द्धं सप्तषष्टिभागानां तत् षड्भिर्गुण्यते, जातानि षट् शतानि त्र्युत्तराणि ६०३, शेषाणि पंचदश नक्षत्राणि समक्षेत्राणि, ततस्तेषां प्रत्येकं सप्तषष्टिभागाः, ततः सप्तषष्टिः पंचदशभिर्गुण्यते, जातं पंचोत्तरं सहस्रं १००५, एकविंशतिश्च सप्तषष्टिभागा अभिजितः, सर्वसंख्यया सप्तषष्टिभागानामष्टादश शतानि त्रिंशदधिकानि १८३०, एष परिपूर्णसप्तषष्टिभागात्मको नक्षत्रपर्यायः,एतस्यार्द्धं नव शतानि पंचदशोत्तराणि ९१५, तेभ्य एकविंशतिरभिजितः सम्बन्धिनी शुद्धा, शेषाः तिष्ठन्त्यष्टौ शतानि चतुर्णवत्यधिकानि ८९४, तेषां सप्तषष्ट्या भागो ह्रियते, लब्धास्त्रयोदश, शेषास्तिष्ठन्ति त्रयोविंशतिः २३, त्रयोदशभिश्च पुनर्वस्वन्तानि नक्षत्राणि शुद्धानि, ये च शेषास्तिष्ठन्ति त्रयोविंशतिः सप्तषष्टिभागास्ते किल 'जं रिक्खं जावइए वच्चइ चंदेण भागसत्तट्ठी। तं पणभागे राइंदियस्स सूरेण तावइए ॥ १ ॥' इति वचनप्रामाण्यात् सूर्यमधिकृत्य रात्रिन्दिवस्य पंच भागा द्रष्टव्याः, ततस्त्रयोविंशतेः पंचभिर्भागो ह्रियते, लब्धाश्चत्वारो दिवसाः त्रयश्च पंचभागा रात्रिंदिवस्य, तत्रैकैकस्मिन् पंचभागे षड् मुहूर्त्ता लभ्यन्ते, अहोरात्रो हि त्रिंशन्मुहूर्त्तप्रमाणः ततस्तस्य पंचमो भागः षण्मुहूर्त्तप्रमाणो भवतीति, त्रिभिश्च पंचभागैरष्टादश मुहूर्त्ताः, त्रयाणां षट्कानामष्टादशप्रमाणत्वात्,

तत आगतं-चतुर्षु दिवसेष्वष्टादशसु मुहूर्त्तेषु पुष्यनक्षत्रस्य भुक्तेषु सर्वाभ्यन्तरान्मण्डलाद्बहिः सूर्यो निष्क्रामति ॥ २४८ ॥ साम्प्रतमभ्यन्तरं विशतः सूर्यस्य माघमासभाविनीनामावृत्तीनां प्रारम्भे नक्षत्रयोगमाह—

**बाहिरओ पविसंतो आइच्चो अहिइजोगमुवगम्म । सव्वा आउट्टीओ करेइ सो माघमासम्मि ॥ २४९ ॥**

माघमासे सर्वबाह्यान्मण्डलादभ्यन्तरं प्रविशन् सूर्यो माघमासभाविनीः सर्वा अप्यावृत्तीः करोति अभिजितो नक्षत्रस्य योगमुपगम्य, तथाहि-यदि दशभिरयनैः पंच सूर्यकृतान्नक्षत्रपर्यायान् लभामहे तत एकेनायनेन किं लभामहे ? इति, राशित्रयस्थापना १०-५-१ अत्रान्त्येन राशिना एककलक्षणेन मध्यमस्य पंचकरूपस्य राशेर्गुणनं, जाताः पंच, तेषां दशभिर्भागे हृते लब्धमेकमर्द्धं पर्यायस्य सप्तषष्टिभागरूपं नव शतानि पंचदशोत्तराणि ९१५, तत्र त्रयोविंशतिः सप्तषष्टिभागाः पाश्चात्ये अयने पुष्यस्य गताः शेषाश्चतुश्चत्वारिंशत् सप्तषष्टिभागाः स्थिताः, ते साम्प्रतमितो राशेः शोध्यन्ते, स्थितानि शेषाण्यष्टौ शतान्येकसप्तत्यधिकानि, तेषां सप्तषष्ट्या भागे हृते लब्धास्त्रयोदश, पश्चान्न किमपि तिष्ठति, त्रयोदशभिश्चाश्लेषादीन्युत्तराषाढान्तानि नक्षत्राणि शुद्धानि, तत आगतमभिजितो नक्षत्रस्य प्रथमसमये माघमासभाविन्यः सर्वा अप्यावृत्तयः प्रवर्त्तन्त इति ॥ २४९ ॥ तदेवाह—

**अट्ठारस य मुहुत्ते चत्तारि य केवले अहोरत्ते । पूसस्स विसयमइगतो बहिया अभिनिक्खमइ सूरो ॥ २५० ॥**
**वीसं च अहोरत्ते जोइत्ता उत्तराअसाढाओ । तिण्णि मुहुत्ते पविसइ ताहे अब्भंतरे सूरो ॥ २५१ ॥**

अष्टादश मुहूर्त्तान् चतुरश्च केवलान्-परिपूर्णान् अहोरात्रान् पुष्यनक्षत्रस्य विषयमतिगतः-प्राप्तः सन् बहिया अभिनिक्खमइ

ज्योतिष्क-रण्डे श्रीमलयगिरीयायां वृत्तौ १२आवृत्तिप्राभृते

॥१६१॥

सूर्यः सर्वाभ्यन्तरान्मण्डलात् बहिर्निष्क्रामति ॥ २५० ॥ इह अर्द्धनक्षत्राणां सर्वेषामपि नक्षत्राणामेतावान् सूर्योपभोगकालो यदुत विंशतिरहोरात्रा एकविंशतितमस्य अहोरात्रस्य सत्कास्त्रयो मुहूर्त्तास्तत आह-विंशतिमहोरात्रान् त्रीन् च मुहूर्त्तान् उत्तराषाढा भुक्त्वा, सकलं उत्तराषाढानक्षत्रमुपभुज्येत्यर्थः, ततः सूर्यः सर्वबाह्यान्मण्डलादभिजिन्नक्षत्रप्रथमसमयेऽभ्यन्तरे प्रविशति ॥ २५१ ॥, तदेवं येन नक्षत्रेण युक्तः श्रावणमासे भाविनीरावृत्तीः सूर्यः करोति तत् प्रतिपादितं, साम्प्रतं येन नक्षत्रेण युक्तश्चन्द्रमा अभ्यन्तरं प्रविशन् बहिर्वा निष्क्रामन् आवृत्तीः करोति तत्प्रतिपादनार्थमाह-

चंदस्सवि नायव्वा आउट्टीओ जुगम्मि जा दिट्ठा । अभिईए पुस्सेण य निययं नक्खत्तसेसेणं ॥ २५२ ॥

यस्मिन्नेव नक्षत्रे वर्त्तमानस्य चन्द्रमसोऽपि 'नक्षत्रशेषेण' नक्षत्रार्द्धमासेन या उत्तराभिमुखा आवृत्तयो युगे दृष्टास्ता नियतमभिजिता नक्षत्रेण द्रष्टव्याः, याश्च युगे दृष्टा दक्षिणाभिमुखा आवृत्तयस्ताः पुष्येण योगे, तत्राभिजित्युत्तराभिमुखा आवृत्तयो भाव्यन्ते, यदि चतुस्त्रिंशदधिकेनायनशतेन चन्द्रस्य सप्तषष्टिः नक्षत्रपर्याया लभ्यन्ते ततः प्रथमेऽयने किं लभ्यते ?, राशित्रयस्थापना १३४-६७-१ अत्रान्त्येन राशिना एककलक्षणेन मध्यमस्य राशेः सप्तषष्टिलक्षणस्य गुणनं, जातः सप्तषष्टिरेव, तस्याश्चतुस्त्रिंशदधिकशतेन भागहरणं, लब्धमेकमर्द्धं पर्यायस्य, तच्च सप्तषष्टिभागरूपाणि नव शतानि पंचदशोत्तराणि ९१५, तत्र एकविंशतिरभिजितः सम्बन्धिनः सप्तषष्टिभागाः शोध्यन्ते, स्थितानि पश्चादष्टौ शतानि चतुर्णवत्यधिकानि ८९४, तेषां सप्तषष्ट्या भागो ह्रियते, लब्धास्त्रयोदश, तैस्त्रयोदशभिः पुनर्वसुपर्यन्तानि नक्षत्राणि शुद्धानि, शेषास्तिष्ठन्ति त्रयोविंशतिः, एते च किल सप्तषष्टिभागा अहोरात्रस्य, ततो

आवृत्तिषु चन्द्रनक्षत्रं

॥१६१॥

मुहूर्त्तभागकरणार्थं ते त्रिंशता गुण्यन्ते, जातानि षट्शतानि नवत्यधिकानि ६९०, तेषां सप्तषष्ट्या भागे हृते लब्धा दश मुहूर्त्ताः, शेषास्तिष्ठन्ति विंशतिः, आगतं पुनर्वसुनक्षत्रे सर्वात्मना भुक्ते पुष्यस्य च दशसु मुहूर्त्तेषु एकस्य च मुहूर्त्तस्य विंशतौ सप्तषष्टिभागेषु भुक्तेषु सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामति चन्द्रः ॥ १५२ ॥ तथा चाह-

दस य मुहुत्ते सगले मुहुत्तभागे य वीसई चेव । पुस्सस्स विसयमभिगतो बहियाऽभिनिक्खमइ चंदो ॥२५३॥
एया आउट्टीओ भणिया मे वित्थरं पमोत्तूणं ।

दश च सकलान्-परिपूर्णान् मुहूर्त्तान् मुहूर्त्तभागांश्च सप्तषष्टिरूपान् विंशतिं पुष्यविषयमभिगतः सन् सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामति चन्द्रः॥२५३॥ सम्प्रत्युपसंहारमाह-'एये'त्यादि, एताः अनन्तरोदिता आवृत्तयो मया विस्तरं प्रमुच्य सङ्क्षेपतो भणिताः॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायामावृत्तिप्रतिपादकं द्वादशं प्राभृतं समाप्तम् ॥

उक्तं द्वादशं प्राभृतं, सम्प्रति त्रयोदशं प्राभृतं वक्तुकामस्तदुपक्षेपमाह-

नक्खत्तसूरसासिणो गईउ सुण मंडलेसु तु ॥ २५४ ॥

इह पर्यन्तवर्त्ती तुशब्दो वाक्यभेदे, स च वाक्यभेद एवं-भणितास्तावदावृत्तयः, सम्प्रति पुनर्मण्डलेष्वात्मीयात्मीयेषु नक्षत्रसूर्यशशिनां गतीर्मुहूर्त्तमधिकृत्य प्रतिनियतपरिमाणाः प्रतिपाद्यमानाः शृणु॥ २५४ ॥ तत्र प्रथमतो मण्डलेषु नक्षत्राणां प्रतिमुहूर्त्तगतिपरि माणमभिधित्सुरादौ नक्षत्रमण्डलपरिसमाप्तिकालमानमाह-

**एगूणसट्ठिरूवा सत्तहिं अहिगा उ तिण्णि अंससया । तिण्णेवं सत्तट्ठा छेओ पुण तेसि बोद्धव्वो ॥ २५५ ॥**

'एकोनषष्टिरूपाणि' एकोनषष्टिसंख्या मुहूर्त्ताः सप्तभिः अधिकानि च त्रीण्यंशशतानि, किंरूपच्छेदकृतास्ते ? इत्यत आह-छेदः पुनस्तेषामंशानां बोद्धव्यः त्रीणि शतानि सप्तषष्टानि-सप्तषष्ट्यधिकानि, एतावता कालेन नक्षत्रं स्वस्वमण्डलं परिभ्रमेण परिसमाप्नोति, इयमत्र भावना-इह युगे सूर्योदयानामष्टादश शतानि त्रिंशदधिकानि भवन्ति, नक्षत्रोदयानामष्टादश शतानि पंचत्रिंशदधिकानि, ततोऽत्र त्रैराशिककर्मावकाशः-यदि नक्षत्रोदयशतानामष्टादशभिः शतैः पंचत्रिंशदधिकैः सूर्योदयानामष्टादश शतानि त्रिंशदधिकानि १८३० लभ्यन्ते, तत एकेन नक्षत्रोदयेन कियान् कालो लभ्यते ?, राशित्रयस्थापना १८३५-१८३०-१, अत्रान्त्येन राशिना एककलक्षणेन मध्यमस्य राशेस्त्रिंशदधिकाष्टादशशतप्रमाणस्य गुणनं, जातान्यष्टादशैव शतानि त्रिंशदधिकानि १८३०, एकेन गुणने तदेव भवतीति वचनात्, तस्याद्येन राशिना पंचत्रिंशदधिकाष्टादशशतप्रमाणेन भागहरणं, तत्र द्वावपि राशी महान्ताविति उभयोरपि पंचकेनापवर्त्तना, तत्रोपरितनो राशिर्जातस्त्रीणि शतानि षट्षष्ट्यधिकानि ३६६, अधस्तनः त्रीणि शतानि सप्तषष्ट्यधिकानि ३६७, उपरितनश्च राशिः स्तोकस्ततः सूर्यः किल स्वमण्डलं परिपूर्णं षष्ट्या मुहूर्तैः परिसमापयतीति षष्ट्या गुण्यते, जातान्येकविंशतिसहस्राणि नव शतानि षष्ट्यधिकानि २१९६०, तेषां पूर्वोक्तेन ३६७ छेदराशिना भागो ह्रियते, लब्धा एकोनषष्टिर्मुहूर्त्ताः, उपरितनांशा उद्धरन्ति त्रीणि शतानि सप्तोत्तराणि ३०७, एतावता कालेन सर्वं नक्षत्रं स्वमण्डलं भ्रम्या पूरयति ॥ २५५ ॥ सम्प्रति मण्डले २ प्रतिमुहूर्त्तं गतिपरिमाणमाह—

एएण उ भइयव्वो मंडलरासी हविज्ज जं लद्धं । सा होइ मुहुत्तगई रिक्खाणं मंडले नियये ॥ २५६ ॥

'एतेन' अनन्तरोदितेन मण्डलपरिसमाप्तिकालेन 'मण्डलराशिः' मण्डलपरिरयराशिर्भक्तव्यः, भक्ते च तस्मिन् यद् भवति लब्धं सा नक्षत्राणामात्मीये आत्मीये मण्डले मुहूर्त्तगतिपरिमाणं, तत्र मण्डलपरिसमाप्तिकाल एकोनषष्टिर्मुहूर्त्ता एकस्य च मुहूर्त्तस्य सप्तषष्ट्यधिकत्रिशतच्छेदकृतानि त्रीणि शतानि सप्तोत्तराण्यंशानां, ततः सवर्णनार्थं मुहूर्त्ता अप्येकोनषष्टिसंख्यास्त्रिभिः शतैः सप्तषष्ट्यधिकैर्गुण्यन्ते, गुणयित्वा चोपरितना अंशाः सप्तोत्तरत्रिशतसंख्याः प्रक्षिप्यन्ते, जातान्येकविंशतिः सहस्राणि नव शतानि षष्ट्यधिकानि २१९६०, सर्वाभ्यन्तरे च मण्डले परिरयपरिमाणमिदं-त्रीणि योजनशतसहस्राणि पंचदश सहस्राणि नवाशीत्यधिकानि ३१५००८, इह छेदराशिर्मुहूर्त्ताग्रराशिरूपस्ततः परिरयपरिमाणमपि त्रिभिः शतैः सप्तषष्ट्यधिकैर्गुण्यते, जाता एकादश कोटयः षट्पंचाशच्छतसहस्राणि सप्तत्रिंशत्सहस्राणि षट् शतानि त्रिषष्ट्यधिकानि ११५६३७६६३, तेषामेकविंशतिसहस्रैर्नवभिः शतैः षष्ट्यधिकैर्भागो ह्रियते, लब्धानि पंच योजनसहस्राणि द्वे शते पंचषष्ट्यधिके ५२६५, अंशा अष्टादश सहस्राणि द्वे शते त्रिषष्ट्यधिके १८२६३।२१९६०, एतावत्प्रमाणा प्रतिमुहूर्त्तं सर्वाभ्यन्तरे मण्डले वर्त्तमानानामभिजिदादीनां द्वादशानां नक्षत्राणां गतिः, एवं शेषेष्वपि नक्षत्रमण्डलेषु परिरयपरिमाणं परिभाव्य प्रतिमुहूर्त्तं गतिपरिमाणमवसातव्यं, परिरयपरिमाणं कथं परिभाव्यमिति चेद् उच्यते, चन्द्रमण्डलानुसारतः, तथाहि-सर्वाभ्यन्तरे चन्द्रमण्डले प्रथमं नक्षत्रमण्डलं १, तृतीये चन्द्रमण्डले द्वितीयं नक्षत्रमण्डलं २ षष्ठे चन्द्रमण्डले तृतीयं नक्षत्रमण्डलं ३, सप्तमे चन्द्रमण्डले चतुर्थं नक्षत्रमण्डलम् ४, अष्टमे चन्द्रमण्डले पंचमं नक्षत्रमण्डलं५ दशमे चन्द्रमण्डले षष्ठं नक्षत्रमण्डलम्

६, एकादशे चन्द्रमण्डले सप्तमं नक्षत्रमण्डलं ७, पंचदशे चन्द्रमण्डलेऽष्टमं नक्षत्रमण्डलं ८। प्रथमे चन्द्रमण्डले द्वादश नक्षत्राणि, तद्यथा-अभिजित् १ श्रवणो २ धनिष्ठा ३ शतभिषक् ४ पूर्वभाद्रपदा ५ उत्तरभाद्रपदा ६ रेवती ७ अश्विनी ८ भरणी ९ पूर्वाफाल्गुनी १० उत्तरफाल्गुनी ११ स्वातिश्च १२, तृतीये चन्द्रमण्डले पुनर्वसु १ मघाश्च २, षष्ठे चन्द्रमण्डले कृत्तिका १, सप्तमे चन्द्रमण्डले रोहिणी १ चित्रा च २, अष्टमे चन्द्रमण्डले विशाखा १, दशमे चन्द्रमण्डलेऽनुराधा १, एकादशे चन्द्रमण्डले ज्येष्ठा १, पंचदशस्य चन्द्रमण्डलस्य बहिर्मृगशिरः १ आर्द्रा २ पुष्यः ३ अश्लेषा ४ मूलो ५ हस्तश्च ६, पूर्वाषाढो ७ उत्तराषाढ ८ योर्द्वे द्वे तारे अभ्यन्तरतो, द्वे द्वे बाह्ये, ततश्चन्द्रमण्डलपरिरयं परिभाव्य नक्षत्रमण्डलानामपि परिरयपरिमाणं भावनीयं, तच्च परिभाव्य प्रतिमुहूर्त्तं गतिपरिमाणमानेतव्यं, तत्र सर्वबाह्यस्य परिरयपरिमाणमिदं-त्रीणि शतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पंचदशोत्तराणि ३१८३१५, एतानि त्रिभिः शतैः सप्तषष्ट्यधिकैर्गुण्यते, जाता एकादश कोट्योऽष्टषष्टिलक्षा एकविंशतिः सहस्राणि षट् शतानि पंचोत्तराणि ११६८-२१६०५, तेषामेकविंशतिसहस्रैर्नवभिः शतैः षष्ट्यधिकैर्भागो ह्रियते, लब्धानि पंच योजनसहस्राणि त्रीणि शतानि एकोनविंशत्यधिकानि ५३१९ अंशाः षोडश सहस्राणि त्रीणि शतानि पंचषष्ट्यधिकानि १६३६५।२१९६०, एतावत्प्रमाणा सर्वबाह्ये मण्डले मृगशिरःप्रभृतीनां नक्षत्राणां प्रतिमुहूर्त्ते गतिः ॥ २५६ ॥ उक्तं नक्षत्राणां मण्डले २ प्रतिमुहूर्त्तं गतिपरिमाणमधुना सूर्यस्याह—

मंडलपरिरयरासी सट्ठीए भाइयंमि जं लद्धं । सा सूरमुहुत्तगई तहिं तहिं मंडले नियया ॥ २५७ ॥

मण्डलपरिरयराशौ षष्ट्या विभक्ते सति यल्लब्धं सा तस्मिन् मण्डले प्रतिमुहूर्त्तं सूर्यस्य गतिः, तत्र सर्वाभ्यन्तरे मण्डले

परिरयपरिमाणमिदं-तिस्रो लक्षाः पंचदश सहस्राणि नवाशीत्यधिकानि ३१५०८९, एतस्य षष्ट्या भागे हृते लब्धानि पंच योजन-सहस्राणि द्वे शते एकपंचाशदधिके एकोनत्रिंशच्च षष्टिभागा योजनस्य ५२५१-२९।६० एतावत्प्रमाणा सर्वाभ्यन्तरे मण्डले प्रतिमुहूर्त्तं सूर्यस्य गतिः, द्वितीये मण्डले परिरयपरिमाणं त्रीणि लक्षाणि पंचदश सहस्राणि शतमेकं सप्तोत्तरं ३१५१०७, तस्याः षष्ट्या भागे हृते लब्धानि पंच योजनसहस्राणि द्वे शते एकपंचाशदधिके सप्तचत्वारिंशच्च षष्टिभागा योजनस्य ५२५१-४७।६०, एतावती द्वितीये मण्डले सूर्यस्य प्रतिमुहूर्त्तं गतिः, तृतीये मण्डले परिरयपरिमाणं तिस्रो लक्षाः पंचदश सहस्राणि शतमेकं पंचविंशत्यधिकं योजनम् ३१५१२५, एतस्य षष्ट्या भागे हृते लब्धानि द्विपंचाशद् योजनशतानि द्विपंचाशदधिकानि पंच षष्टिभागा योजनस्य ५२५२-५।६०, एतावत्प्रमाणा तृतीये मण्डले प्रतिमुहूर्त्तं सूर्यस्य गतिः, एवं सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामतः सूर्यस्य मण्डले मण्डले गतौ पूर्वपूर्वानन्तरमण्डलविषयगतिपरिमाणापेक्षया किंचिदूना अपि व्यवहारतः परिपूर्णा अष्टादश षष्टिभागाः प्रवर्द्धमानास्तावद्वक्तव्या यावत्सर्वबाह्यं मण्डलं, तस्मिंश्च सर्वबाह्ये मण्डले परिरयपरिमाणमिदं-त्रीणि शतसहस्राणि अष्टादश सहस्राणि त्रीणि शतानि पंचदशोत्तराणि ३१८३१५, तस्य षष्ट्या भागे हृते लब्धानि पंच योजनसहस्राणि त्रीणि शतानि पंचोत्तराणि पंचदश षष्टिभागा योजनस्य ५३०५,१५।६० एतावती सर्वबाह्ये मण्डले सूर्यस्य प्रतिमुहूर्त्तं गतिः, तदेवं सूर्यस्य प्रतिमंडलमुक्तं गतिपरिमाणमिदानीं चन्द्रमसस्तद्विवक्षुः प्रथमतो यावता कालेन अम्भा मण्डलं चन्द्रः पूरयति तावत्कालप्रमाणमाह—

**पावद्वी पुण रूवा तेवीसं अंसगा य बोद्धव्वा । दो चेव एक्कवीसा छेओ पुण तासि बोद्धव्वो ॥ २९८ ॥**

चन्द्रस्य मुहूर्त्तेगतिः

द्वाषष्टिरूपाणि-द्वाषष्टिसंख्या मुहूर्त्ताः एकस्य च मुहूर्त्तस्य त्रयोविंशतिरंशाश्चन्द्रमसः प्रत्येकमण्डलसमाप्तिकालप्रमाणत्वेन ज्ञातव्याः, किंरूपच्छेदकृताः पुनस्ते त्रयोविंशतिरंशाश्चन्द्रमसस्तत्र मण्डल इत्यत आह-छेदः पुनस्तेषामंशानां बोद्धव्यो द्वे शते एकविंशत्यधिके, एतावता कालेन सोमस्तत्तन्मण्डलं भ्रमणेन पूरयति, कथमेतदवसीयते इति चेद् उच्यते, इह युगे सूर्योदयानामष्टादश शतानि त्रिंशदधिकानि १८३० भवन्ति, एतच्च प्रागेवोक्तं, चन्द्रोदयानां सप्तदश शतान्यष्टषष्ट्यधिकानि १७६८, ततोऽत्र त्रैराशिककर्मावकाशो, यदि चन्द्रोदयानां सप्तदशभिः शतैरष्टषष्ट्यधिकैः सूर्योदयानामष्टादश शतानि त्रिंशदधिकानि लभ्यन्ते तत एकेन चन्द्रोदयेन किंप्रमाणः कालो लभ्यते ?, राशित्रयस्थापना १७६८-१८३०-१, अत्रान्त्येन राशिना एककलक्षणेन मध्यमस्य राशेस्त्रिंशदधिकाष्टादशशतप्रमाणस्य गुणनं, जातान्यष्टादशैव शतानि त्रिंशदधिकानि १८३०, तत्र द्वावपि राशी महान्ताविति द्वयोरपि द्वाभ्यामपवर्त्तना, तत्रोपरितनो राशिर्जातो नव शतानि पंचदशोत्तराणि ९१५, अधस्तनोऽष्टौ शतानि चतुरशीत्यधिकानि ८८४, ततः सूर्यः किल षष्ट्या मुहूर्त्तैर्मण्डलं परिसमाप्नोतीति उपरितनो राशिः षष्ट्या गुण्यते, जातानि चतुष्पंचाशत्सहस्राणि नव शतानि ५४९००, ततोऽस्य राशेश्चतुष्केनापवर्त्तना क्रियते, जात उपरितनो राशिस्त्रयोदश सहस्राणि सप्त शतानि पंचविंशत्यधिकानि १३७२५, छेदराशिर्द्वे शते एकविंशत्यधिके २२१, तत्र छेदराशिना उपरितनस्य राशेर्भागे हृते लब्धा द्वाषष्टिर्मुहूर्त्ताः, उपरि चांशा उद्धरन्ति त्रयोविंशतिः ६२-२३।२२१ एतावता कालेन चन्द्रः सर्वाभ्यन्तरं मण्डलं भ्रमणेन परिसमाप्नोति ॥ २५८ ॥ अधुना मण्डले मण्डले प्रतिमुहूर्त्तं गतिपरिमाणमाह—

एएण उ भइयव्वो मंडलरासी हविज्ज जं लद्धं । सा सोममुहुत्तगई तहिं तहिं मंडले नियया ॥ २५९ ॥

ज्योति० मलय० नक्षत्र यथं श्चिनां ति प्राभृतं ॥१६८॥

एतेन-अनन्तरोदितेन परिसमाप्तिकालेन मण्डलराशिः-मण्डलपरिरयराशिर्भक्तव्यः, भक्ते च तस्मिन् यद् भवति लब्धं सा 'सोमस्य' चन्द्रमसस्तस्मिन् तस्मिन् मण्डले नियता मुहूर्त्तगतिः-मुहूर्त्तगतिपरिमाणं, तत्र मण्डलपरिसमाप्तिकालो द्वाषष्टिर्मुहूर्त्ताः एकस्यैकविंशत्यधिकशतद्वयच्छेदकृतास्त्रयोविंशतिरंशाः ततः सवर्णनार्थं मुहूर्त्तोऽपि द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यते, गुणयित्वा चोपरितनास्त्रयोविंशतिरंशाः प्रक्षिप्यन्ते, जातानि त्रयोदश सहस्राणि सप्त शतानि पंचविंशत्यधिकानि १३७२५, सर्वाभ्यन्तरे चन्द्रमण्डलपरिरयपरिमाणं त्रीणि योजनलक्षाणि पंचदश सहस्राणि नवाशीत्यधिकानि ३१५०८९, इह छेदराशिः मुहूर्त्ताधराशिरूपस्ततः परिरयपरिमाणमपि द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यते, जातः षट्को नवकः षट्कस्त्रिकश्चतुष्कः षट्कः षट्को नवकः ६९६३४६६९, तत एतेषां त्रयोदशभिः सहस्रैः सप्तभिः शतैः पंचविंशत्यधिकैर्भागो ह्रियते, हृते च भागे लब्धानि पंच योजनसहस्राणि त्रिसप्तत्यधिकानि, अंशाश्च सप्तविंशतिशतानि चतुश्चत्वारिंशदधिकानि ५०७३-२७४४।१३७२५ एतावती सर्वाभ्यन्तरे मण्डले चन्द्रमसः प्रतिमुहूर्त्तं गतिः, द्वितीये चन्द्रमण्डले परिरयपरिमाणं त्रीणि लक्षाणि पंचदश सहस्राणि त्रीणि शतान्येकोविंशत्यधिकानि ३१५३१९, एतद् द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यते, जातः षट्को नवकः षट्कोऽष्टकः पंचकश्चतुष्को नवको नवकः ६९६८५४९९, एतेषां त्रयोदशभिः सहस्रैः सप्तभिः शतैः पंचविंशत्यधिकैर्भागो ह्रियते, लब्धानि पंच योजनसहस्राणि सप्तसप्तत्यधिकानि अंशाः षट्त्रिंशच्छतानि चतुःसप्तत्यधिकानि ५०७७-३६७४।१३७२५ एतावती द्वितीये मण्डले चन्द्रमसः प्रतिमुहूर्त्तं गतिः, तृतीये मण्डले परिरयपरिमाणं त्रीणि लक्षाणि पंचदश सहस्राणि पंच शतान्येकोनपंचाशदधिकानि ३१५५४९, एतच्छतद्वयेन एकविंशत्यधिकेन गुण्यते, जातः षट्को नवकः सप्तकस्त्रिकः षट्कस्त्रिको द्विको नवकः ६९७३६३२९, एतेषां त्रयोदशभि

चन्द्रस्य मुहूर्त्तगतिः

॥१६८॥

सहस्रैः सप्तभिः शतैः पंचविंशत्यधिकैर्भागो ह्रियते, लब्धानि पंच योजनसहस्राणि अशीत्यधिकानि, अंशास्तु त्रयोदश सहस्राणि त्रीणि शतान्येकोनत्रिंशदधिकानि ५०८०-१३३२९।१३७२५ एतावती तृतीये मण्डले चन्द्रमसः प्रतिमुहूर्त्ते गतिः, एवं सर्वेष्वपि मण्डलेषु परिरयपरिमाणं परिभाव्य भावनीयं यावत्सर्वबाह्यं मण्डलं, तस्मिंश्च सर्वबाह्ये मण्डले परिरयपरिमाणं तिस्रो लक्षा अष्टादश सहस्राणि त्रीणि शतानि पंचदशोत्तराणि ३१८३१५, एतावद् द्वाभ्यां शताभ्यामेकविंशत्यधिकाभ्यां गुण्यते, जातः सप्तकः शून्यं त्रिकश्चतुष्कः सप्तकः षट्क एककः पंचकं ७०३४७६१५, एतेषां त्रयोदशभिः सहस्रैः सप्तभिः शतैः पंचविंशत्यधिकैर्भागो ह्रियते, हृते च भागे लब्धानि पंच सहस्राणि शतमेकं पंचविंशत्यधिकं योजनानामंशा एकोनसप्ततिशतानि नवत्यधिकानि ५१२५-६९९०। १३७२५ एतावती सर्वबाह्ये मण्डले चन्द्रमसः प्रतिमुहूर्त्तं गतिः ॥ २५९ ॥ सम्प्रत्युपसंहारमाह—

नक्खत्तसूरससिणो भणिया एसा उ मंडलंमि गई ।

'एषा' अनन्तरोदितस्वरूपा मण्डले २ नक्षत्रस्य सूर्यस्य शशिनश्च प्रत्येकं गतिर्भणिता ॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां गतिपरिमाणप्रतिपादकं त्रयोदशं प्राभृतं समाप्तम् ॥

उक्तं त्रयोदशं प्राभृतं, संप्रति सूर्यचन्द्रर्तुपरिमाणप्रतिपादकं चतुर्दशं प्राभृतं वक्तुकामस्तदुपक्षेपमाह—

एत्तो उउपरिमाणं वोच्छामि अहाणुपुव्वीए ॥ २६० ॥

'अतः' मण्डलेषु नक्षत्रसूर्यशशिनां प्रतिमुहूर्त्तं गतिपरिमाणप्रतिपादनादनन्तरम् 'ऋतुपरिमाणं' सूर्यर्त्तुपरिमाणं चन्द्रर्त्तुपरिमाणं च 'यथानुपूर्व्या' क्रमेण वक्ष्यामि ॥ २६० ॥ प्रतिज्ञातमेव निर्वाहयितुकामः प्रथमतः सूर्यर्त्तुपरिमाणं प्रतिपादयति—

ऋतुज्ञानाय करणं

बे आइच्चा मासा एकट्ठी ते भवंतऽहोरत्ता । एयं उउपरिमाणं अवगयमाणा जिणा बिंति ॥ २६१ ॥

यौ द्वौ 'आदित्यमासौ' सूर्यमासौ यावदहोरात्रपरिमाणतया एकषष्टिरहोरात्रा भवन्ति, तथाहि-सूर्यस्य मासस्त्रिंशदहोरात्राः एकस्य चाहोरात्रस्य चार्द्धं, ततो द्वौ सूर्यमासावेकषष्टिरहोरात्रा भवन्ति, 'एतत्' एतावत् ऋतोः-सूर्यर्तोः परिमाणम् 'अपगतमाना' मानग्रहणमुपलक्षणम् अपगतसकलक्रोधमानादिवर्गा जिनाः- तीर्थकृतो ब्रुवते ॥ २६१ ॥ साम्प्रतमीप्सितसूर्यर्त्वानयने करणमभिधित्सुराह—

सूरउउस्सानयणे पव्वं पन्नरससंगुणं नियमा । तिहिसंखित्तं संतं बावट्ठीभागपरिहीणं ॥ २६२ ॥
दुगुणेगट्ठीए जुयं बावीससएण भाइए नियमा । जं लद्धं तस्स पुणो छहिं हिय सेसं उऊ होइ ॥ २६३ ॥
सेसाणं अंसाणं बेहि उ भागेहिं तेसिं जं लद्धं । ते दिवसा नायव्वा होंति पवत्तस्स अयणस्स ॥ २६४ ॥

'सूर्यस्य' सूर्यसम्बन्धिन ऋतोरानयने 'पर्व' पर्वसंख्यानं नियमात्पंचदशगुणं कर्त्तव्यं, पर्वणां पंचदशतिथ्यात्मकत्वात्, इयमत्र भावना-यद्यपीह ऋतव आषाढादिप्रभवास्तथाऽपि युगं प्रवर्त्तते श्रावणबहुलपक्षे प्रतिपद आरभ्य ततो युगादित आरब्ध प्रभूतानि यानि पर्वाणि तत्संख्या पंचदशगुणा क्रियते, कृत्वा च पर्वणामुपरि या विवक्षितं दिनमभिव्याप्य तिथयस्तास्तत्र संक्षिप्यन्ते, प्रक्षिप्यन्त इत्यर्थः, ततः '[illegible]' ति तत्सहेत्यानारोपैकेन द्वाषष्टिभागेन [illegible] ये [illegible] अवम-रात्रास्ते [illegible] परिहीनं पर्वसंख्यानं कर्त्तव्यं, ततः 'दुगुणे'ति द्वाभ्यां गुण्यते, गुणयित्वा [illegible]

क्रियते, ततो द्वाविंशेन शतेन भाजिते सति यल्लब्धं तस्य षड्भिर्भागे हृते यच्छेषं स ऋतुरनन्तरातीतो भवति, येऽपि चांशाः शेषा उद्धरितास्तेषां द्वाभ्यां भागे हृते यल्लब्धं ते दिवसाः प्रवर्त्तमानस्य ऋतोर्ज्ञातव्याः, एष करणगाथाऽक्षरार्थः, सम्प्रति करणभावना क्रियते-तत्र युगे प्रथमे दीपोत्सवे केनापि पृष्टं-कः ऋतुरनन्तरमतीतः? को वा सम्प्रति वर्त्तते?, तत्र युगादितः सप्त पर्वाण्यतिक्रान्तानीति सप्त ध्रियन्ते, तानि पंचदशभिर्गुण्यंते, जातं पंचोत्तरं शतं, एतावति च काले द्वाववमरात्रावभूतामिति द्वौ ततः पात्येते, स्थितं पश्चात् त्र्युत्तरं शतं १०३, तद् द्वाभ्यां गुण्यते, जाते द्वे शते षडुत्तरे २०६, तत्रैकषष्टिः प्रक्षिप्यते, जाते द्वे शते सप्तषष्ट्यधिके २६७, तयोर्द्वाविंशेन शतेन भागो ह्रियते, लब्धौ द्वौ, तौ षड्भिर्भागं न सहत इति न तयोः षड्भिर्भागाहारः, शेषास्त्वंशा उद्धरन्ति त्रयोविंशतिः, तेषामर्द्धे जाता एकादश अर्द्धं च, आगतं ऋतुद्वयमाषाढादिस्ततः आगतं द्वावृतू अतिक्रान्तौ, तृतीयश्च ऋतुः सम्प्रति प्रवर्त्तते, तस्य च प्रवर्त्तमानस्यैकादश दिवसा अतिक्रान्ता द्वादशो वर्त्तते इति। तथा युगे प्रथमायामक्षयतृतीयायां केनापि पृष्टं के ऋतवः पूर्वमतिक्रान्ताः? को वा सम्प्रति वर्त्तते?, तत्राक्षयतृतीयायाः प्रथमायाः प्राग् युगस्यादित आरभ्य पर्वाण्यतिक्रान्तान्येकोनविंशतिः, तत एकोनविंशतिं धृत्वा पंचदशभिर्गुण्यते, जाते द्वे शते पंचाशीत्यधिके २८५, अक्षयतृतीयायां किल दृष्टमिति पर्वणामुपरितन्यस्तिस्रस्तिथयः प्रक्षिप्यन्ते, जाते द्वे शते अष्टाशीत्यधिके २८८, एतावति च कालेऽवमरात्राः पंच भवन्ति इति पंच ततः पात्यन्ते, जाते द्वे शते त्र्यशीत्यधिके २८३, ते द्वाभ्यां गुण्येते, जातानि पंच शतानि षट्षष्ट्यधिकानि ५६६, तान्येकषष्टिसहितानि क्रियन्ते, जातानि षट् शतानि सप्तविंशत्यधिकानि ६२७, तेषां द्वाविंशेन शतेन भागो ह्रियते, लब्धाः पंच, पश्चादुद्धरन्ति सप्तदश, तेषामर्द्धे लब्धाः सार्द्धा अष्टौ, आगतं पंच ऋतवोऽतिक्रान्ताः, षष्ठस्य च ऋतोः प्रवर्त्तमानस्याष्टौ दिवसा गता नवमो वर्त्तते। तथा युगे

द्वितीये दीपोत्सवे केनापि पृष्टं-कियन्त ऋतवोऽतिक्रान्ताः ? को वा सम्प्रति वर्त्तते ?, तत्रैतावति काले पर्वाण्यतिक्रान्तानि एकत्रिंशत्, तानि पंचदशभिर्गुण्यन्ते, जातानि चत्वारि शतानि पंचषष्ट्यधिकानि ४६५, अवमरात्राश्चैतावति काले व्यत्यक्रामन्नष्टौ, ततोऽष्टौ पात्यन्ते, स्थितानि शेषाणि चत्वारि शतानि सप्तपंचाशदधिकानि४५७, तानि द्विगुणीक्रियन्ते, जातानि नव शतानि चतुर्दशोत्तराणि ९१४, तेष्वेकषष्टिभागप्रक्षेपे जातानि नव शतानि पंचसप्तत्यधिकानि ९७५, तेषां द्वाविंशेन शतेन भागहरणं, लब्धाः सप्त, उपरिष्टादंशा उद्वरन्ति एकविंशं शतं, तस्य द्वाभ्यां भागे हृते लब्धाः षष्टिः सार्द्धा, सप्तानां च ऋतूनां षड्भिर्भागे हृते लब्ध एकः, एक उपरिष्टात्तिष्ठति, आगतमेकः संवत्सरोऽतिक्रान्तः, एकस्य च संवत्सरस्योपरि प्रथम ऋतुः प्रावृड्नामाऽतिगतो, द्वितीयस्य च षष्टिदिनान्यतिक्रान्तान्येकषष्टितमं प्रवर्त्तत इति, एवमन्यत्रापि भावना कार्या ॥ २६२-२६४ ॥ साम्प्रतममूनामृतूनां नामान्याह—

पाउस वासारत्तो सरओ हेमंत वसंत गिम्हा य । एए खलु छप्पि उऊ जिणवरदिट्ठा मए सिट्ठा ॥ २६५ ॥

प्रथम ऋतुः प्रावृड्नामा द्वितीयो वर्षारात्रस्तृतीयः शरत् चतुर्थो हेमन्तः पंचमो वसन्तः षष्ठो ग्रीष्मः, एते षडपि ऋतव एवंनामानो 'जिनवरदृष्टाः' सर्वज्ञदृष्टा मया 'शिष्टाः' कथिताः ॥ २६५ ॥ सम्प्रतमेतेषामृतूनां मध्ये क ऋतुः कस्यां तिथौ समाप्तिमुपयातीति परस्य प्रश्नावकाशमाशंक्य तत्परिज्ञानाय करणमाह—

ऋतुनामानि तत्र तिथिज्ञाने करणं

इच्छाउऊबिगुणिओ रूवोणो बिगुणिओ उ पव्वाणि । तस्सद्धं होइ तिही जत्थ समत्ता उऊ तीसं ॥ २६६ ॥

यस्मिन् ऋतौ ज्ञातुमिच्छा स ऋतुर्ध्रियते, तत्संख्या ध्रियते इत्यर्थः, ततः स द्विगुणितः क्रियते, द्वाभ्यां गुण्यत इतियावत्, द्विगुणितः सन् रूपोनः क्रियते, ततः पुनरपि स द्वाभ्यां गुण्यते, गुणयित्वा च प्रतिराश्यते, द्विगुणितश्च सन् यावान् भवति तावन्ति

ज्योतिष्क-रण्डे श्रीमलयगिरीयायां वृत्तौ १४ ऋतुपरिमाणप्राभृते

॥१७३॥

पर्वाणि द्रष्टव्यानि, तस्य च द्विगुणीकृतस्य प्रतिराशितस्यार्द्धं क्रियते, तच्चार्द्धं यावद् भवति तावत्यास्तिथयः प्रतिपत्तव्याः, यास्तु युगभाविनस्त्रिंशदपि ऋतवः समाप्ताः-समाप्तिमेयरुरिति करणगाथाक्षरार्थः, सम्प्रति करणभावना विधीयते-किल प्रथम ऋतुर्ज्ञातुमिष्टो, यथा युगे कस्यां तिथौ प्रथमः प्रावृड्लक्षण ऋतुः समाप्तिमुपयातीति, तत्रैकको ध्रियते, स द्वाभ्यां गुण्यते, जाते द्वे रूपे, ते रूपोने क्रियते, जात एककः, एवं स भूयोऽपि द्वाभ्यां गुण्यते, जाते द्वे रूपे, ते प्रतिराश्येते, तयोरर्द्धे जातमेकं रूपमागतं युगादौ द्वे पर्वणी अतिक्रम्य प्रथमायां तिथौ प्रतिपदि प्रथमः प्रावृड्नामा ऋतुः समाप्तिमगमत्। तथा द्वितीये ऋतौ ज्ञातुमिच्छेति द्वौ स्थापितौ, तयोर्द्वाभ्यां गुणने जाताश्चत्वारस्ते रूपोनाः क्रियन्ते जातास्त्रयस्ते भूयो द्वाभ्यां गुण्यन्ते जाताः षट् ते प्रतिराश्यन्ते, प्रतिराशितानां चार्द्धं क्रियते, जातास्त्रयः, आगतं युगादितः षट् पर्वाण्यतिक्रम्य तृतीयायां तिथौ द्वितीय ऋतुः समाप्तिमुपागमत्, तथा तृतीये ऋतौ ज्ञातुमिच्छेति त्रयो ध्रियन्ते, द्वाभ्यां गुण्यन्ते जाताः षट्, ते रूपोनाः कृताः सन्तो जाताः पंच, ते भूयो द्विगुण्यन्ते, जाता दश, ते प्रतिराश्यन्ते, प्रतिराशितानां चार्द्धं लब्धाः पंच, आगतं-युगादित आरभ्य दश पर्वाण्यतिक्रम्य पंचम्यां तिथौ तृतीय ऋतुः समाप्तिमियाय, तथा षष्ठे ऋतौ ज्ञातुमिच्छेति, षट् स्थाप्यन्ते, ते द्वाभ्यां गुण्यन्ते, जाता द्वादश, ते रूपोनाः सन्तो जाता एकादश, ते द्विगुण्यन्ते, जाता द्वाविंशतिः, सा प्रतिराश्यते, प्रतिराशितायाश्चार्द्धं क्रियते, जाता एकादश, आगतं युगादितो द्वाविंशतिं पर्वाण्यतिक्रम्यैकादश्यां तिथौ षष्ठः ऋतुः समाप्नोति, तथा युगे नवमऋतौ ज्ञातुमिच्छेति ततो नव स्थाप्यन्ते, ते द्वाभ्यां गुण्यन्ते, जाता अष्टादश, ते रूपोनाः क्रियन्ते, जाताः सप्तदश, ते भूयो द्विगुण्यन्ते, जाताश्चतुस्त्रिंशत्, सा प्रतिराश्यते, प्रतिराश्य च तस्या अर्द्धं क्रियते, जाताः सप्तदश, आगतं युगादितश्चतुस्त्रिंशत्पर्वाण्यतिक्रम्य द्वितीये संवत्सरे पौषमासे शुक्लपक्षे द्वितीयस्यां तिथौ नवम ऋतुः परि-

ऋतुनामानि तत्र तिथिज्ञाने करणं

॥१७३॥

समाप्तिं गच्छति, तथा त्रिंशत्तमे ऋतौ जिज्ञासेति त्रिंशद्ध्रियते, सा द्विगुण्यते, जाता षष्टिः, सा रूपोना क्रियते, जाता एकोनषष्टिः, सा भूयो द्वाभ्यां गुण्यते, जातमष्टादशोत्तरं शतं, तत् प्रतिराश्यते, प्रतिराश्य च तस्यार्द्धं क्रियते, जाता एकोनषष्टिः, आगतं युगादितोऽष्टादशोत्तरं पर्वशतमतिक्रम्यैकोनषष्टितमायां तिथौ, किमुक्तं भवति ?- पंचमे संवत्सरे प्रथमे आषाढमासे शुक्लपक्षे चतुर्दश्यां त्रिंशत्तम ऋतुः समाप्तिमुपयासीत्, व्यवहारतः प्रथमाषाढपर्यन्त इत्यर्थः ॥ २६६ ॥ सम्प्रति वर्षाकालशीतकालग्रीष्मकालेषु चतुर्मासप्रमाणेषु यस्मिन् पर्वणि कर्म्ममासापेक्षयाऽधिकोऽहोरात्रः सूर्यर्तुपरिसमाप्तौ भवति तत् प्रतिपादयन्नाह—

तइयंमि उ कायव्वं अतिरत्तं सत्तमे उ पव्वंमि । वासाहिमगिम्हकाले चाउम्मासे विहीयंते ॥ २६७ ॥

वर्षाहिमग्रीष्मकालेषु प्रत्येकं 'चतुर्मासेषु' चतुर्मासप्रमाणेषु पृथग् 'अतिरात्राः' अधिका अहोरात्रा विधीयन्ते, तद्यथा-एकस्तृतीये पर्वण्यपरः सप्तमे पर्वणि, इयमत्र भावना-सूर्यर्त्तुचिंतायां कर्ममासापेक्षया वर्षाकाले श्रावणादौ तृतीये पर्वणि गते एकोऽधिकोऽहोरात्रो, द्वितीयः सप्तमे पर्वणि, हेमन्तकालेऽपि एकस्तृतीये पर्वणि द्वितीयः सप्तमे, ग्रीष्मकालेऽपि एकस्तृतीये पर्वणि द्वितीयः सप्तमे ॥ २६३ ॥ अत्राह-पूर्वं पर्वावमरात्रसहितमुक्तमिदानीं त्वधिकरात्रोपेतमिति किमत्र कारणम् ? अत आह—

उउसहियं अतिरत्तं जुगसहियं होइ ओमरत्तं तु । रविसाहियं अइरत्तं ससिसहियं ओमरत्तं तु ॥ २६८ ॥

इह यदि पर्व ऋतुसहितं-सूर्यर्तुसहितं विवक्ष्यते तदा विवक्षितं तृतीयादिकं वर्षाकालादिसम्बन्धि 'अतिरात्रम्' अधिकरात्रं, सूर्यर्तुपरिसमाप्तिचिन्तायां तस्मिन् विवक्षिते तृतीयादौ पर्वणि कर्ममासापेक्षयाऽधिकोऽहोरात्रो भवति, तथाहि-कर्म्ममासस्त्रिंशता दिनैः,

सूर्यमासास्त्रिंशता सार्धेन, मासद्वयात्मकश्च ऋतुः, ततः सूर्यर्तुपरिसमाप्तौ कर्ममासापेक्षयाऽधिकोऽहोरात्रो भवतीति, तथा युगं चन्द्र-चन्द्राभिवर्द्धितचन्द्राभिवर्द्धितरूपं संवत्सरपंचकालकं, ते च पंचापि संवत्सराश्चन्द्रमासापेक्षया, ततो यदि पर्व 'युगरसहितं' चन्द्र-मासोपेतं विवक्ष्यते तदा विवाक्षितं पर्व तृतीयादिकं वर्षाकालादिसम्बन्धि अवमरात्रोपेतं भवति, कर्ममासापेक्षया तस्मिन् तस्मिन् तृतीयादौ पर्वणि नियमादेकोऽहोरात्रः पततीति भावः, एतदेवाह-'रविसहिय' मित्यादि, रविसहितमतिरात्रं, किमुक्तं भवति ?-रविमासनिष्पद्यमानर्तुचिन्तायां तस्मिन् तृतीयादौ वर्षाकालादिसम्बन्धिनि पर्वणि तत्तत्सूर्यर्तुपरिसमाप्तौ कर्ममासापेक्षया एकैकोऽ-धिकोऽहोरात्रः प्राप्यत इति, शशिसहितमवमरात्रं, चन्द्रनिष्पादितास्तिथीरधिकृत्य कर्ममासापेक्षया विवक्षितं तृतीयादिपर्व हीन-रात्रं भवतीत्यर्थः ॥ २६८ ॥ सम्प्रति येषु मासेषु सूर्यर्तुपरिसमाप्तिचिन्तायां पूर्वपूर्वसूर्यर्तुगततिथ्यपेक्षयाऽधिकोऽहोरात्रः परिवर्द्धते तान् प्रतिपादयति-आषाढबहुलपक्षे तथा भाद्रपदे मासे बहुलपक्षे एवं कार्त्तिके पौषे फाल्गुने वैशाखे वाऽतिरात्रं बोद्धव्यं, पूर्वपूर्वसूर्य-र्तुगततिथ्यपेक्षया एतेषु षट्सु मासेष्वप्यधिकोऽहोरात्रो ज्ञातव्यो, न शेषेषु मासेषु, एतदेव सविशेषमाह—

एक्कंतरिया मासा तिही य जासु ता उऊ समप्पंति । आसाढाई मासा भद्दवयाई तिही सव्वा ॥ २६९ ॥

इह सूर्यर्तुचिन्तायां मासा आषाढादयो द्रष्टव्याः, आषाढमासादारभ्य ऋतूनां प्रथमतः प्रवर्त्तमानत्वात् , तिथयः सर्वा अपि भाद्रपदाद्याः, भाद्रपदादिषु मासेषु प्रथमादीनामृतूनां परिसमाप्तत्वात्, तत्र येषु मासेषु यासु वा तिथिषु 'ऋतवः' प्रावृडादयः सूर्यसत्काः परिसमाप्नुवन्ति ते आषाढादयो मासाः ताश्च तिथयो 'भाद्रपदाद्याः' भाद्रपदादिमासानुगताः सर्वा अप्येकान्तरिता

ऋतुसमाप्तिषु मासविषयः

वेदितव्याः, तथाहि-प्रथम ऋतुर्भाद्रपदे मासे समाप्तिमुपैति, तत एकं मासमश्वयुग्लक्षणमपान्तराले मुक्त्वा कार्त्तिके मासे द्वितीय ऋतुः परिसमाप्तिमियर्त्ति, एवं तृतीयः पौषमासे चतुर्थः फाल्गुने पंचमो वैशाखे षष्ठ आषाढे, एवं शेषा अपि ऋतवः षट्सु मासेष्वेकान्तरेषु व्यवहारतः परिसमाप्तिमाप्नुवन्ति, न शेषेषु मासेषु, तथा प्रथम ऋतुः प्रतिपदि समाप्तिमेति, द्वितीयः तृतीयायां तृतीयः पंचम्यां चतुर्थः सप्तम्यां पंचमो नवम्यां षष्ठ एकादश्यां सप्तमस्त्रयोदश्यां अष्टमः पंचदश्यां, एते सर्वेऽपि ऋतवो बहुलपक्षे, ततो नवम ऋतुः शुक्लपक्षे द्वितीयायां दशमश्चतुर्थ्यां एकादशः षष्ठ्यां द्वादशोऽष्टम्यां त्रयोदशो दशम्यां चतुर्दशो द्वादश्यां पंचदश चतुर्दश्यां, एते सप्त ऋतवः शुक्लपक्षे, एते कृष्णशुक्लपक्षभाविनः पंचदशापि ऋतवो युगस्यार्द्धे भवन्ति, तत उक्तक्रमेणैव शेषा अपि पंचदश ऋतवो द्वितीये युगस्यार्द्धे भवन्ति, तद्यथा-षोडश ऋतुर्बहुलपक्षे प्रतिपदि सप्तदशस्तृतीयायामष्टादशः पंचम्यामेकोनविंशतितमः सप्तम्यां विंशतितमो नवम्यामेकविंशतितम एकादश्यां द्वाविंशतितमस्त्रयोदश्यां त्रयोविंशतितमः पंचदश्याम्, एते षोडशादयस्त्रयोविंशतिपर्यन्ता अष्टौ बहुलपक्षे, ततः शुक्लपक्षे द्वितीयायां चतुर्विंशतितमः, पंचविंशतितमश्चतुर्थ्यां षड्विंशतितमः षष्ठ्यां सप्तविंशतितमोऽष्टम्यामष्टाविंशतितमो दशम्यामेकोनत्रिंशत्तमो द्वादश्यां त्रिंशत्तमश्चतुर्दश्यां, एवमेते सर्वेऽपि ऋतवो युगे मासेष्वेकान्तरितेषु तिथिष्वपि चैकान्तरितासु भवन्ति ॥२६९॥ साम्प्रतमेतेषु ऋतुषु चन्द्रनक्षत्रयोगं सूर्यनक्षत्रयोगं च प्रतिपिपादयिषुस्तद्विषयं करणमाह-

**तिन्नि सया पंचहिगा अंसा छेओ सयं च चोत्तीसं । एगाइबिउत्तरगुणो धुवरासी एस बोद्धव्वो ॥ २७० ॥**
**सत्तट्ठि अद्धखेत्ते दुगुणिगुणिया समे दिवड्ढखित्ते । अट्ठासीई पुस्से सोज्झा अभिइम्मि बायाला ॥ २७१ ॥**

ऋतुषु चन्द्र-सूर्य नक्षत्र ज्ञानाय करणं

एयाणि सोहइत्ता जं सेसं तं तु होइ नक्खत्तं । रविसोमाणं नियमा तीसाएँ उऊ समत्तीसु ॥ २७२ ॥

त्रीणि शतानि पंचोत्तराणि 'अंशाः' विभागाः, किंरूपच्छेदकृताः ? इति चेदित्याह-छेदः शतं चतुस्त्रिंशं, किमुक्तं भवति?-चतुस्त्रिंशदधिकशतच्छेदेन छिन्नं यदहोरात्रं तस्य सत्कानि त्रीणि शतानि पंचोत्तराण्यंशानामिति, अयं ध्रुवराशिरेकादिद्व्युत्तरगुण इति ईप्सितेन ऋतुना एकादिना त्रिंशत्पर्यन्तेन द्व्युत्तरेण-एकस्मादारम्य तत ऊर्ध्वं द्व्युत्तरवृद्धेन गुण्यते स्मेति गुणो-गुणितः कर्त्तव्य-स्ततोऽस्माच्छोधनकानि शोधयितव्यानि ॥ २७० ॥ तत्र शोधनकप्रतिपादनार्थमाह इह यन्नक्षत्रमर्द्धक्षेत्रं तत्र सप्तषष्टिः शोध्या, सैव सप्तषष्टिः 'समे' समक्षेत्रे द्विगुणिता सती शोध्या, चतुस्त्रिंशं शतं शोध्यं, 'द्व्यर्धे' द्व्यर्धक्षेत्रे सैव सप्तषष्टिः-त्रिगुणिता सती शोध्या, एकोत्तरे द्वे शते तत्र शोध्ये इति भावः, इह सूर्यस्य पुष्यादीनि नक्षत्राणि शोध्यानि, चन्द्रस्याभिजिदादीनि, तत्र सूर्यनक्षत्रयोगचिन्तायां पुष्ये-पुष्यविषया अष्टाशीतिः शोध्या, चन्द्रनक्षत्रयोगचिन्तायामभिजिति द्विचत्वारिंशत् ॥ २७१ ॥ 'एतानि' अनन्तरोदितानि अर्द्धक्षेत्रसमक्षेत्रद्व्यर्द्धक्षेत्रविषयाणि शोधनकानि शोधयित्वा यदुक्तप्रकारेण नक्षत्रं शेषं भवति-न सर्वात्मना शुद्धिमश्नुते तन्नक्षत्रं 'रविसोमयोः' सूर्यस्य चन्द्रमसश्च नियमाज्ज्ञातव्यं, क्वेत्याह-त्रिंशत्यपि ऋतुसमाप्तिषु, एवं करण-गाथात्रयाक्षरार्थः, सम्प्रति करणभावना क्रियते-तत्र प्रथम ऋतुः कस्मिन् चन्द्रनक्षत्रे समाप्तिमुपैतीति जिज्ञासायामनन्तरोदितः पंचोत्तरत्रिशतीप्रमाणो ध्रुवराशिर्ध्रियते, स एकेन गुण्यते, एकेन गुणितं तदेव भवतीति तावानेव ध्रुवराशिर्जातः, तत्राभिजितो द्विचत्वारिंशच्छुद्धा, स्थिते पश्चाद् द्वे शते त्रिषष्ट्यधिके २६३, ततश्चतुस्त्रिंशेन शतेन श्रवणः शुद्धः, शेषं जातमेकोनत्रिंशं शतं १२९,

॥१७७॥

तेन च धनिष्ठा न शुध्यति, तत आगतमेकोनत्रिंशं शतं चतुस्त्रिंशदधिकशतभागानां धनिष्ठासत्कमवगाह्य चन्द्रः प्रथमतः सूर्यर्तुं समापयति, यदि द्वितीयसूर्यर्तुजिज्ञासा तदा स ध्रुवराशिः पंचोत्तरशतत्रयप्रमाणस्त्रिभिर्गुण्यते, जातानि नव शतानि पंचदशोत्तराणि ९१५, तत्राभिजितो द्वाचत्वारिंशच्छुद्धा, स्थितानि शेषाण्यष्टौ शतानि त्रिसप्तत्यधिकानि ८७३, ततश्चतुस्त्रिंशेन शतेन श्रवणः शुद्धिमुपगतः, स्थितानि शेषाणि सप्त शतानि एकोनचत्वारिंशदधिकानि ७३९, ततोऽपि चतुस्त्रिंशेन शतेन धनिष्ठा शुद्धा, जातानि षट् शतानि पंचोत्तराणि ६०५, ततोऽपि सप्तषष्ट्या शतभिषक् शुद्धा, स्थितानि पश्चात्पंच शतान्यष्टत्रिंशदधिकानि ५३८, तेभ्योऽपि चतुस्त्रिंशेन शतेन पूर्वभद्रपदा शुद्धा, स्थितानि चत्वारि शतानि चतुरधिकानि ४०४, ततो द्वाभ्यां शताभ्यामेकोत्तराभ्यामुत्तरभद्रपदा शुद्धा, स्थिते शेषे द्व्युत्तरे द्वे शते २०३, ताभ्यामपि चतुस्त्रिंशदधिकेन शतेन रेवती शुद्धा, स्थिता पश्चादेकोनसप्ततिः ६९, आगतमश्विनीनक्षत्रस्यैकोनसप्ततिं चतुस्त्रिंशदधिकशतभागानामवगाह्य द्वितीयं सूर्यर्तुं चन्द्रः परिसमापयति, एवं शेषेष्वपि ऋतुषु भावनीयं, त्रिंशत्तमसूर्यर्तुजिज्ञासायां स एव ध्रुवराशिः पंचोत्तरशतत्रयसंख्य एकोनषष्ट्या गुण्यते, जातानि सप्तदश सहस्राणि नव शतानि पंचनवत्यधिकानि १७९९५, तत्र षट्त्रिंशता शतैः षष्ट्यधिकैरेको नक्षत्रपर्यायः शुध्यति, ततः षट्त्रिंशच्छतानि षष्ट्यधिकानि चतुर्भिर्गुणयित्वा ततः शोध्यन्ते, स्थितानि पश्चात् त्रयस्त्रिंशच्छतानि पंचपंचाशदधिकानि ३३५५, ताभ्यां द्वात्रिंशता शतैः पंचविंशत्यधिकैरभिजिदादीनि मूलपर्यन्तानि शुद्धानि, स्थितं पश्चात् त्रिंशदधिकं शतं १३०, तेन च पूर्वाषाढा न शुध्यति, तत आगतं त्रिंशदधिकं शतं चतुस्त्रिंशदधिकशतभागानां पूर्वाषाढासत्कमवगाह्य चन्द्रस्त्रिंशत्तमं सूर्यर्तुं परिसमापयति । सम्प्रति सूर्यनक्षत्रयोगभावना क्रियते-स एव पंचोत्तरशतत्रयप्रमाणो ध्रुवराशिः प्रथमसूर्यर्तुजिज्ञासायामेकेन गुण्यते, एकेन च गणने तदेव भवतीति

ज्योतिष्करण्डे श्रीमलयगिरीयायां वृत्तौ १४ ऋतुपरिमाण प्राभृते

सूर्यर्तुज्ञाने करणं

तावानेव जातः, तत्र पुष्यसत्का अष्टाशीतिः शुद्धा, स्थिते शेषे द्वे शते सप्तदशोत्तरे २१७, ततः सप्तषष्ट्याऽश्लेषा शुद्धा, स्थितं शेषं सार्द्धं शतं १५०, ततोऽपि चतुस्त्रिंशेन शतेन मघा शुद्धा, स्थिताः षोडश, आगतं पूर्वफाल्गुनीनक्षत्रस्य षोडश चतुस्त्रिंशदधिकानि शतं भागानामवगाह्य सूर्यः प्रथममृतुं समापयति, तथा द्वितीयसूर्यर्तुजिज्ञासायां स ध्रुवराशिः पंचोत्तरशतत्रयप्रमाणस्त्रिभिर्गुण्यते, जातानि नव शतानि पंचदशोत्तराणि ९१५, ततोऽष्टाशीत्या पुष्यः शुद्धिमगमत्, स्थितानि शेषाणि पश्चादष्टौ शतानि सप्तविंशत्यधिकानि ८२७, तेभ्यः सप्तषष्ट्याऽश्लेषा शुद्धा, स्थितानि शेषाणि सप्त शतानि षष्ट्यधिकानि ७६०, तेभ्यश्चतुस्त्रिंशदधिकेन शतेन मघा शुद्धा, स्थितानि शेषाणि षट् शतानि षड्विंशत्यधिकानि ६२६, तेभ्यश्चतुस्त्रिंशदधिकेन शतेन पूर्वफाल्गुनी शुद्धा, स्थितानि पश्चाच्चत्वारि शतानि द्विनवत्यधिकानि ४९२, ततोऽपि द्वाभ्यां शताभ्यामेकोत्तराभ्यामुत्तरफाल्गुनी शुद्धा, स्थिते द्वे शते एकनवत्यधिके २९१, ततोऽपि चतुस्त्रिंशेन शतेन हस्तः शुद्धः, स्थितं पश्चात्सप्तपंचाशदधिकं शतं १५७, ततोऽपि चतुस्त्रिंशेन शतेन चित्रा शुद्धा, स्थिता पश्चात् त्रयोविंशतिः, आगतं स्वातेस्त्रयोविंशतिं चतुस्त्रिंशदधिकभागानामवगाह्य सूर्यो द्वितीयमृतुं परिसमापयति, एवं शेषेष्वपि ऋतुषु भावनीयं, त्रिंशत्तमसूर्यर्तुजिज्ञासायां स एव ध्रुवराशिः पंचोत्तरशतत्रयपरिमाण एकोनषष्ट्या गुण्यते, जातानि सप्तदश सहस्राणि नव शतानि पंचनवत्यधिकानि १७९९५, तत्र चतुर्दशभिः सहस्रैः षड्भिः शतैश्चत्वारिंशदधिकैः १४६४० चत्वारः परिपूर्णा नक्षत्रपर्यायाः शुद्धाः, स्थितानि शेषाणि त्रयस्त्रिंशच्छतानि पंचपंचाशदधिकानि ३३५५, तेभ्योऽष्टाशीत्या पुष्यः शुद्धः, स्थितानि पश्चात् द्वात्रिंशच्छतानि सप्तषष्ट्यभ्यधिकानि ३२६७, तेभ्यो द्वात्रिंशता शतैरष्टापंचाशदधिकैः ३२५८ अश्लेषादीनि मृगशिरःपर्यन्तानि नक्षत्राणि शुद्धानि, स्थिताः शेषा नव ९, तेन चार्द्रा

॥१७९॥ ॥१७९॥

ज्योतिष्करण्डे श्रीमलयगिरीयायां वृत्तौ १४ ऋतुपरिमाण प्राभृते

॥१८०॥

चन्द्रर्तुज्ञाने करणं

न शुध्यति, तत आगतं-नव चतुस्त्रिंशदधिकशतभागान् आर्द्रासत्कानवगाह्य सूर्यस्त्रिंशत्तमं स्वमृतुं परिसमापयति ॥ २७२ ॥ तदेवमुक्ताः सूर्यर्त्तवः, सम्प्रति चन्द्रर्तुप्रतिपादनार्थमाह-

चत्तारि उउसयाइं बिउत्तराइं जुगंमि चंदस्स । तेसिंपि य करणविहिं वोच्छामि अहाणुपुव्वीए ॥ २७३ ॥

इहैकस्मिन् नक्षत्रपर्याये षड् ऋतवो भवन्ति, यथा सूर्यस्य, चन्द्रस्यापि च नक्षत्रपर्याया युगे सप्तषष्टिसङ्ख्याः, ततः सप्तषष्टिः षड्भिर्गुण्यते, जातानि चत्वारि शतानि द्व्युत्तराणि, एतावन्तो युगे चन्द्रस्य ऋतवो भवन्ति, तेषामपि चन्द्रर्तूनां परिज्ञानाय करणविधिं 'यथानुपूर्व्या' क्रमेण वक्ष्यामि ॥ २७३ ॥ तत्र प्रतिज्ञातमर्थं निर्वाहयितुकामः प्रथमतश्चन्द्रर्तुपरिमाणमाह—

चन्दस्सउउपरिमाणं चत्तारि य केवला अहोरत्ता । सत्तत्तीसं अंसा सत्तट्ठिकएण छेएण ॥ २७४ ॥

चंदउऊआणयणे पव्वं पन्नरससंगुणं नियमा । तिहिसंखित्तं संतं बावट्ठीभागपरिहीणं ॥ २७५ ॥

चोत्तीससयाभिहयं पंचुत्तरतिसयसंजुयं विभए । छहि उ दसुत्तरेहि य सएहिं लद्धा उऊ होइ ॥ २७६ ॥

'चन्द्रस्य' चन्द्रसम्बधिन ऋतोः परिमाणं चत्वारः 'केवलाः' परिपूर्णा अहोरात्राः सप्तषष्टिच्छेदकृतेन च छेदेन सप्तत्रिंशदंशाः, किमुक्तं भवति?-सप्तत्रिंशत्सप्तषष्टिभागा दिनस्य, तथाहि-एकस्मिन् नक्षत्रपर्याये षड् ऋतव इति प्रागेव भावितं, नक्षत्रपर्यायस्य चन्द्रविषयस्य परिमाणं सप्तविंशतिरहोरात्राः एकस्य चाहोरात्रस्यैकविंशतिः सप्तषष्टिभागाः, तत्राहोरात्राणां षड्भिर्भागे हृते लब्धानि चत्वारि दिनानि, त्रीणि शेषाणि तिष्ठन्ति, तानि सप्तषष्टिभागकरणार्थं सप्तषष्ट्या गुण्यन्ते, जाते द्वे शते एकोत्तरे ॥१८०॥

२०१, तत उपरितना एकविंशतिः सप्तषष्टिभागाः प्रक्षिप्यन्ते, जाते द्वे शते द्वाविंशे, तेषां षड्भिर्भागे हृते लब्धाः सप्तत्रिंशत् सप्त षष्टिभागा इति । सम्प्रति चन्द्रर्त्तोरानयनाय करणमाह—विवक्षितस्य चन्द्रर्त्तोरानयने कर्त्तव्ये युगादितो यत् पर्वसंख्यानमतिक्रान्तं तत् पञ्चदशगुणं नियमात्कर्त्तव्यं, ततः 'तिथिसङ्क्षिप्त'मिति यास्तिथयः पर्वणामुपरि विवक्षितात् दिनात् प्रागतिक्रान्तास्तास्तत्र संक्षिप्यन्ते, ततो द्वाषष्टिभागैः—द्वाषष्टिभागनिष्पन्नैरवमरात्रैः परिहीनं विधेयं, तदेवंभूतं सचतुस्त्रिंशेन शतेनाभिहतं—गुणितं कर्त्तव्यं, तदनन्तरं च पञ्चोत्तरैस्त्रिभिः शतैः संयुक्तं सत् षड्भिर्दशोत्तरैः शतैर्विभजेत्, विभक्ते च सति ये लब्धा अङ्कास्ते ऋतवो भवन्ति ज्ञातव्याः, एष करणगाथात्रयाक्षरार्थः, सम्प्रति करणभावना क्रियते—कोऽपि पृच्छति युगादितः प्रथमे पर्वणि पंचम्यां कश्चन्द्रर्तुर्वर्त्तते ?, तत्रैकमपि पर्व परिपूर्णमत्र नाद्याप्यभूदिति युगादितो दिवसा रूपोना ध्रियन्ते, ते चात्र चत्वारः, ततस्ते चतुस्त्रिंशेन शतेन गुण्यन्ते, जातानि पंच शतानि षट्त्रिंशदधिकानि ५३६, तत्र भूयस्त्रीणि शतानि पंचोत्तराणि प्रक्षिप्यन्ते, जातान्यष्टौ शतान्येकचत्वारिंशदधिकानि ८४१, तेषां षड्भिः शतैर्दशोत्तरैर्भागो ह्रियते, लब्धः प्रथम ऋतुः, अंशा उद्वरन्ति द्वे शते एकत्रिंशदधिके २३१, तेषां चतुस्त्रिंशेन शतेन भागहरणे लब्ध एकः, अंशानां च चतुस्त्रिंशेन शतेन भागे हृते यल्लभ्यते ते दिवसा ज्ञातव्याः, शेषास्त्वंशा उद्वरन्ति सप्तनवतिस्तेषां द्विकेनापवर्त्तनायां लब्धाः सार्द्धा अष्टाचत्वारिंशत् सप्तषष्टिभागाः, आगतं युगादितः पंचम्यां प्रथमः प्रावृड्लक्षण ऋतुरतिक्रान्तो द्वितीयस्यैको दिवसो गतो, द्वितीयस्य च सार्द्धा अष्टचत्वारिंशत्सप्तषष्टिभागाः । तथा कोऽपि पृच्छति-युगादितो द्वितीयपर्वणि एकादश्यां कश्चन्द्रर्त्तुः? इति, तत्रैकं पर्वातिक्रान्तमिति एको ध्रियते, स पंचदशभिर्गुण्यते, जाताः पंचदश, एकादश्यां किल पृष्टमिति तस्याः प्राक्तन्या दश

ये दिवसास्ते प्रक्षिप्यन्ते, जाता पंचविंशतिः, सा चतुस्त्रिंशेन शतेन गुण्यते, जातानि त्रयस्त्रिंशच्छतानि पंचाशदधिकानि ३३५०, तेषु त्रीणि शतानि पंचोत्तराणि प्रक्षिप्यन्ते, जातानि षट्त्रिंशच्छतानि पंचपंचाशदधिकानि ३६५५, तेषां षड्भिः शतैर्दशोत्तरैर्भागो ह्रियते, लब्धाः पंचांशाः, अवतिष्ठन्ति षट् शतानि पंचोत्तराणि ६०५, तेषां चतुस्त्रिंशेन शतेन भागे हृते लब्धाश्चत्वारो दिवसाः ४, शेषास्त्वंशा उद्वरन्ति एकोनसप्ततिः ६९, तस्या द्विकेनापवर्त्तनायां लब्धाः सार्द्धाश्चतुस्त्रिंशत्सप्तषष्टिभागाः, आगतं पंच ऋतवोऽतिकान्ताः, षष्ठस्य च ऋतोश्चत्वारो दिवसाः, पंचमस्य च दिवसस्य सार्द्धाश्चतुश्चत्वारिंशत् सप्तषष्टिभागाः, एवमन्यस्मिन्नपि दिवसे चन्द्रर्तुरवगन्तव्यः ॥ २७४-२७५-२७६ ॥ सम्प्रति चन्द्रर्तुपरिसमाप्तिदिवसानयनाय करणमाह—

**रविधुवरासी पुव्वं व गुणिय भइए सगेण छेएण । जं लद्धं सो दिवसो सोमस्स उउसमत्तीए ॥ २७७ ॥**

इह यः पूर्वं सूर्यर्तुप्रतिपादने ध्रुवराशिरभिहितः पंचोत्तराणि त्रीणि शतानि चतुस्त्रिंशदधिकशतभागानां तस्मिन् पूर्वमिव गुणिते, किमुक्तं भवति ?- ईप्सितेन एकादिना द्व्युत्तरचतुःशतपर्यंतेन द्व्युत्तरवृद्धेन एकस्मादारभ्य तत ऊर्ध्वं द्व्युत्तरवृध्ध्या प्रवर्द्धमानेन गुणिते 'स्वकेन' आत्मीयेन छेदेन चतुस्त्रिंशदधिकशतरूपेण भक्ते सति यल्लब्धं स सोमस्य-चन्द्रस्य ऋतोः समाप्तौ दिवसो ज्ञातव्यो, यथा केनापि पृष्टं-चन्द्रस्य ऋतुः प्रथमः कस्यां तिथौ परिसमाप्तिं गतः ? इति, तत्र ध्रुवराशिः पंचोत्तरशतत्रयप्रमाणो ध्रियते ३०५, स एकेन गुण्यते, जातस्तावानेव ध्रुवराशिः, तस्य स्वकीयेन छेदेन चतुस्त्रिंशदधिकशतप्रमाणेन भागो ह्रियते, लब्धौ द्वौ, शेषा तिष्ठति सप्तत्रिंशत् , तस्या द्विकेनापवर्त्तना क्रियते, जाताः सार्द्धा अष्टादश, आगतं युगादितो द्वौ दिवसावति-

क्रम्य तृतीये दिवसे सार्धेष्वष्टादशसु सप्तषष्टिभागेषु गतेषु प्रथमश्चन्द्रर्तुः परिसमाप्तिं गच्छति, द्वितीयचन्द्रर्तुपरिसमाप्तिजिज्ञासायां स ध्रुवराशिः पंचोत्तरशतत्रयप्रमाणस्त्रिभिर्गुण्यते, जातानि नव शतानि पंचदशोत्तराणि ९१५, तेषां चतुस्त्रिंशदधिकेन शतेन भागो ह्रियते, लब्धाः षट्, शेषमुद्धरति एकादशोत्तरं शतं १११, तस्य द्विकेनापवर्त्तनायां लब्धाः सार्द्धाः पंचपंचाशत् सप्तषष्टिभागाः, आगतं युगादितः षट्सु दिवसेष्वतिक्रान्तेषु सप्तमस्य च दिवसस्य सार्द्धेषु पंचपंचाशत्संख्येषु सप्तषष्टिभागेषु गतेषु द्वितीयचन्द्रर्तुः परिसमाप्तिं गच्छति, द्व्युत्तरचतुःशततमर्तुजिज्ञासायां स ध्रुवराशिः पंचोत्तरशतत्रयप्रमाणोऽष्टभिः शतैस्त्र्युत्तरैर्गुण्यते, द्व्युत्तरवृध्ध्या द्व्युत्तरचतुःशततमस्य त्र्युत्तराष्टशतप्रमाण एव राशिर्भवति, तथाहि-यस्यैकस्मादूर्ध्वं द्व्युत्तरवृध्ध्या राशिर्लभ्यते तस्य स द्विगुणो रूपोनो भवति, यथा द्विकस्य त्रीणि त्रिकस्य पंच चतुष्कस्य सप्त, अत्रापि च द्व्युत्तरचतुःशततमप्रमाणस्य राशेर्द्व्युत्तरवृध्ध्या राशिश्चिन्त्यते ततोऽष्टौ शतानि त्र्युत्तराणि भवन्ति, एवंभूतेन च राशिना गुणने जाते द्वे लक्षे चतुश्चत्वारिंशत्सहस्राणि नव शतानि पंचदशोत्तराणि २४४९१५, तेषां चतुस्त्रिंशेन शतेन भागो ह्रियते, लब्धान्यष्टादश शतानि सप्तविंशत्यधिकानि १८२७, अथाधोद्धरन्ति सप्तनवतिस्तस्या द्विकेनापवर्त्तनात् लब्धाः सार्द्धा अष्टचत्वारिंशत्सप्तषष्टिभागाः, आगतं युगादितोऽष्टादशसु दिवसशतेषु सप्तविंशत्यधिकेष्वतिक्रान्तेषु ततः परस्य च दिवसस्य सार्द्धेष्वष्टाचत्वारिंशत्संख्येषु सप्तषष्टिभागेषु द्व्युत्तरचतुःशततमस्य चन्द्रर्त्तोः परिसमाप्तिरिति ॥ २७७ ॥ सम्प्रति चन्द्रर्तुषु नक्षत्रयोगपरिज्ञानाय करणमाह—

चन्द्रर्तुसमाप्तौ तिथिज्ञानाय करणं ॥१८३॥

सो चेव धुवो रासी गुणरासीवि य हवंति ते चेव । नक्खत्तसोहणाणि य परिजाणसु पुव्वभणियाणि ॥२७८॥

युगे चन्द्रर्तोर्नक्षत्रयोगपरिज्ञानार्थं स एव-पंचोत्तरशतत्रयप्रमाणो ध्रुवराशिर्वेदितव्यः, गुणराशयोऽपि-गुणकारराशयोऽप्येकादिका द्व्युत्तरवृद्धा त एव भवन्ति ज्ञातव्या ये पूर्वमुद्दिष्टाः, नक्षत्रशोधनान्यपि च परिजानीहि तान्येव यानि पूर्वं भणितानि-द्विचत्वारिंशत्प्रभृतीनि, ततः पूर्वप्रकारेण विवक्षिते चन्द्रर्तौ नियतो नक्षत्रयोग आगच्छति, तत्र प्रथमे चन्द्रर्तौ कश्चन्द्रनक्षत्रयोगः १ इति जिज्ञासायां स एव पंचोत्तरशतत्रयप्रमाणो ध्रुवराशिर्ध्रियते ३०५, स एकेन गुण्यते, एकेन गुणितः सन् स तावानेव भवति, ततोऽभिजितो द्वाचत्वारिंशत् शुद्धा, शेषे तिष्ठतो द्वे शते त्रिषष्ट्यधिके२६३, ततश्चतुस्त्रिंशेन शतेन श्रवणः शुद्धः, स्थितं पश्चादेकोनत्रिंशं शतं १२९, तस्य द्विकेनापवर्त्तनाज्जाताः सार्द्धाश्चतुःषष्टिः सप्तषष्टिभागाः, आगतं धनिष्ठायाः सार्धान् चतुःषष्टिसप्तषष्टिभागानवगाह्य चन्द्रः प्रथमं स्वमृतुं परिसमापयति, द्वितीयचन्द्रर्तुजिज्ञासायां स एव ध्रुवराशिः पंचोत्तरशतत्रयप्रमाणस्त्रिभिर्गुण्यते, जातानि नव शतानि पंचदशोत्तराणि ९१५, तत्राभिजितो द्वाचत्वारिंशत् शुद्धा, स्थितानि शेषाण्यष्टौ शतानि त्रिसप्तत्यधिकानि ८७३, ततश्चतुस्त्रिंशेन शतेन श्रवणः शुद्धिमुपगतः, स्थितानि शेषाणि सप्त शतान्येकोनचत्वारिंशदधिकानि ७३९, ततोऽपि चतुस्त्रिंशेन शतेन धनिष्ठा शुद्धा, जातानि षट् शतानि पंचोत्तराणि ६०५, ततोऽपि सप्तषष्ट्या शतभिषक् शुद्धा, स्थितानि पश्चात् पंच शतान्यष्टात्रिंशदधिकानि ५३८, एतेभ्योऽपि चतुस्त्रिंशेन शतेन पूर्वभद्रपदा शुद्धा, स्थितानि चत्वारि शतानि चतुरधिकानि ४०४, तेभ्योऽपि द्वाभ्यां शताभ्यामेकोत्तराभ्यामुत्तरभद्रपदा शुद्धा, स्थिते शेषे द्वे शते त्र्युत्तरे २०३, ताभ्यामपि चतुस्त्रिंशेन शतेन रेवती शुद्धा, स्थिता पश्चादेकोनसप्ततिः ६९, आगतमश्विनीनक्षत्रस्यैकोनसप्ततिं चतुस्त्रिंशदधिकशतभागानवगाह्य द्वितीयं स्वमृतुं चन्द्रः परिनिष्ठापयति, तथा तृतीयचन्द्रर्तुजिज्ञासायां स एव ध्रुवराशिः पंचोत्तरशतत्रयप्रमाणो ध्रियते, धृत्वा चाष्टभिः शतैः-पंचभिर्गुण्यते, जाते

द्वे लक्षे चतुश्चत्वारिंशत्सहस्राणि नव शतानि पंचदशोत्तराणि २४४९१५, तत्रार्द्धक्षेत्रेषु षट्सु नक्षत्रेषु प्रत्येकं सप्तषष्टिरंशा अध्यर्द्धक्षेत्रेषु षट्सु नक्षत्रेषु प्रत्येकं द्वे द्वे शते एकोत्तरे अंशानां, पंचदशसु समक्षेत्रेषु प्रत्येकं चतुस्त्रिंशं शतमिति, षट् सप्तषष्ट्या गुण्यन्ते, जातानि चत्वारि शतानि द्व्युत्तराणि ४०२, तथा षट् एकोत्तरेण शतद्वयेन गुण्यन्ते, जातानि द्वादश शतानि षडुत्तराणि १२०६, तथा चतुस्त्रिंशं शतं पंचदशभिर्गुण्यते, जातानि विंशतिशतानि दशोत्तराणि २०१०, एते च त्रयोऽपि राशय एकत्र मील्यन्ते, मीलयित्वा तेष्वभिजितो द्वाचत्वारिंशत् प्रक्षिप्यन्ते, जातानि षट्त्रिंशच्छतानि षष्ट्यधिकानि ३६६०, एतावानेको नक्षत्रपर्यायः, तत एतेन पूर्वस्य राशेर्भागो ह्रियते, लब्धाः षट्षष्टिर्नक्षत्रपर्यायाः, पश्चादवतिष्ठन्ते पंचपंचाशदधिकानि त्रयस्त्रिंशच्छतानि ३३५५, तत्राभिजितो द्वाचत्वारिंशत् शुद्धा, स्थितानि शेषाणि त्रयस्त्रिंशच्छतानि त्रयोदशाधिकानि ३३१३, तेषां त्रिभिः सहस्रैस्त्र्यशीत्यधिकैरनुराधान्तानि नक्षत्राणि शुद्धानि, शेषं तिष्ठतो द्वे शते एकत्रिंशदधिके २३१, ततः सप्तषष्ट्या ज्येष्ठा शुद्धा, स्थितं चतुःषष्ट्यधिकं शतं १६४, ततोऽपि चतुस्त्रिंशेन शतेन मूलं शुद्धं, स्थिता पश्चात्त्रिंशत् ३०, आगतं पूर्वाषाढानक्षत्रस्य त्रिंशतं चतुस्त्रिंशदधिकशतभागानामवगाह्य द्व्युत्तरचतुःशततमं स्वऋतुं चन्द्रः परिसमापयति ॥ २७८॥

इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां चतुर्दशं ऋतुपरिमाणप्रतिपादकं प्राभृतं परिसमाप्तम् ॥

उक्तमृतुपरिमाणप्रतिपादकं चतुर्दशं प्राभृतं, सम्प्रति विषुवत्प्रतिपादकं पंचदशं प्राभृतं विवक्षुराह—

आसोयकत्तियाणं मज्झे चइत्ताहचित्तमज्झे य । एत्थ सममहोरत्तं तं विसुवं अयणमज्झेसु ॥ २७९ ॥

अश्वयुक्कार्त्तिकयोर्मासयोर्मध्ये तथा वैशाखचैत्रयोर्मध्ये 'अत्र' अस्मिन्नन्तरे सममहोरात्रं भवति, तच्च पूर्वपुरुषपरिभाषया विषुवमिति व्यवह्रियते, तथा चोक्तमभिधानकोशे-"समरात्रिंदिवः कालो, विषुवत् विषुवं च तत्" इत्यम्भूतानि विषुवाणि 'अयनमध्येषु' अयनमध्यभागेषु भवन्ति, इयमत्र भावना-अश्वयुग्मासानन्तरं कार्तिकमासे यथायोगं दक्षिणायनविषुवानां सम्भवः, तथा चैत्रमासानन्तरं वैशाखे यथासंभवमुत्तरायणविषुवसंभवः, तत एतस्मिन्नवकाशे समाहोरात्रसम्भवो, यथा पंचदशमुहूर्त्तप्रमाणो दिवसो भवति पंचदशमुहूर्त्तप्रमाणा च रात्रिः, तच्चेत्थंभूतं सममहोरात्रं मण्डलमध्यभागगत एव रवौ भवति, तद्यथा-सर्वाभ्यन्तरान्मण्डलाद् द्विनवतितमे मण्डले सर्वबाह्यादपि मण्डलाद् द्विनवतितम इति, इत्थम्भूतं च द्विनवतितमं मण्डलं यदा सूर्य उपसंक्रम्य चारं चरति तदा स कालो व्यवहारतो विषुवमित्याख्यायते, निश्चयतस्तु यस्मिन्नहोरात्रे समो दिवसः समा रात्रिस्तस्मिन्नस्तप्राये सूर्ये यो रात्रिप्रवेशकालः सार्द्धद्विनवतितममण्डलसंभवी स कालो विषुवमिति, तथा चोक्तं मूलटीकायां- "रविमण्डलमज्झनाम विसुवं"ति ॥ २७९ ॥ सम्प्रति नैश्चयिकमेव विषुवकालप्रमाणमनन्तरोक्तं सूत्रकृदुपदर्शयति—

पन्नरसमुहुत्तदिणो दिवसेण समा य जा हवइ राई। सो होइ विसुवकालो दिणराईणं तु संधिम्मि ॥ २८० ॥

यो भवति पंचदशमुहूर्त्तप्रमाणो दिवसो या च दिवसेन समा रात्रिः, पंचदशमुहूर्त्तप्रमाणेत्यर्थः, [illegible] द्विनवतितमेऽपि मण्डले समौ रात्रिदिवसौ न भवतः, कलया न्यूनाधिकभावात्, परं सा कला न विवक्षितेति समौ रात्रिदिवसौ तत्र गण्येते, इत्थम्भूतयो रात्रिदिवसयोः सन्धौ यः कालः स विषुवकालः ॥२८०॥ साम्प्रतं कतिपर्वातिक्रमे कस्यां तिथावीप्सितं विषुवं भवतीतीप्सितविषुवानयनाय करणमाह—

इच्छियविसुवा विगुणा रूवूणा छग्गुणा भवेपव्वा । पव्वद्धे होंति तिही नायव्वा सव्वविसुवेसु ॥ २८१ ॥

युगमध्ये ईप्सितानि-विवक्षितानि यानि विषुवानि तानि ध्रियंते, किमुक्तं भवति ?-तत्संख्या ध्रियते, इति, धृत्वा च तानि द्विगुणानि क्रियन्ते, ततो रूपोनानि, तदनन्तरं च षड्गुणानि कर्त्तव्यानि, षड्भिश्च गुणने यदागच्छति तानि पर्वाणि ज्ञातव्यानि, पर्वणां चार्द्धे यद् भवति तास्तिथयः सर्वेषु विषुवेषु यथायोगं ज्ञातव्याः, एष करणगाथाक्षरार्थः, सम्प्रति करणभावना क्रियते-कतिपर्वातिक्रमे कस्यां तिथौ प्रथमं विषुवमिति जिज्ञासायां रूपमेकं स्थाप्यते, तद् द्विगुणं क्रियते, जाते द्वे रूपे, ते रूपोने क्रियेते, स्थितं भूय एकं रूपं, तस्य षड्भिर्गुणने जाताः षट्, ते प्रतिराश्यन्ते, प्रतिराश्य च तेषामर्द्धं क्रियते, जातास्त्रयः, आगतं षट्पर्वातिक्रमे तृतीयस्यां तिथौ प्रथमं विषुवमिति, तथा द्वितीयं विषुवं कतिपर्वातिक्रमे कस्यां तिथौ भवति ? इति यदि जिज्ञासा तदा द्वे रूपे ध्रियेते, ते द्विगुणे जातानि चत्वारि, तानि रूपोनानि क्रियन्ते, स्थितानि पश्चात्त्रीणि, तानि षड्भिर्गुण्यंते, जातान्यष्टादश, तानि प्रतिराश्यन्ते, तेषां च प्रतिराशितानामर्द्धं नव, आगतं द्वितीयं विषुवमष्टादशपर्वातिक्रमे नवम्यां तिथाविति, तथा कतिपर्वातिक्रमे कस्यां तिथौ तृतीयं विषुवमिति जिज्ञासायां त्रीणि रूपाणि ध्रियन्ते, तानि च द्वाभ्यां गुण्यंते, जातानि षट्, तेषामेकरूपापहारे स्थितानि पश्चात्पञ्च, तानि षड्भिर्गुण्यंते, जाता त्रिंशत्, सा प्रतिराश्यते, प्रतिराशितायाश्च तस्या अर्द्धं पञ्चदश, आगतं त्रिंशत्पर्वातिक्रमे पञ्चदश्यां तृतीयं विषुवमिति, तथा दशमं विषुवं कतिपर्वातिक्रमे कस्यां तिथौ भवति? इति यदि ज्ञातुमिच्छा तदा दशको ध्रियते, स द्विगुण्यते, जाता विंशतिः, तस्या एकं रूपमपहियते, जाता एकोनविंशतिः, सा

षड्भिर्गुण्यते, जातं चतुर्दशोत्तरं शतं, तत्प्रतिराश्यते, तस्यार्द्धं सप्तपञ्चाशत्, तस्याः पर्वानयनाय पञ्चदशभिर्भागो ह्रियते, लब्धानि त्रीणि पर्वाणि, तानि पर्वराशौ प्रक्षिप्यन्ते, पश्चादवतिष्ठन्ते च द्वादश, तत आगतं सप्तदशोत्तरपर्वशतातिक्रमे द्वादश्यां दशमं विषुवमिति ॥ २८१ ॥ अत्रैवार्थे करणान्तरमाह—

रूवूणविसुवगुणिए छलसीइसय पक्खिववाहि तेणउई । पन्नरसभाइ लद्धा मव्वा सेसा तिही होइ ॥ २८२ ॥

यद्विषुवं ज्ञातुमिष्टं तेन रूपोनेन-तत्संख्यया रूपोनया षडशीत्यधिकं शतं गुण्यते, गुणिते च तस्मिन् त्रिनवतिं प्रक्षिप, ततः पंचदशभिर्भाजिते सति येऽङ्का लब्धास्तानि पर्वाणि ज्ञातव्यानि, शेषास्त्वंशास्तिथयः, एष करणगाथाऽक्षरार्थः, भावना त्वियं-विषुवं प्रथमं कतिपर्वातिक्रमे कस्यां तिथौ भवति ? इति जिज्ञासायां रूपं स्थाप्यते, तदेकरूपहीनं क्रियते, जातमाकाशं, तेन षडशीत्यधिकं शतं गुण्यते, जातं शून्यं 'खेन गुणने ख'मिति वचनप्रामाण्यात् , ततः शून्ये तस्मिन् त्रिनवतिः प्रक्षिप्यते, तस्याः पंचदशभिर्भागे हृते लब्धाः षट्, शेषास्तिष्ठन्ति त्रीणि, आगतं षट्पर्वातिक्रमे तृतीयस्यां तिथौ प्रथमं विषुवमिति, तृतीयविषुवचिंतायां त्रीणि रूपाणि ध्रियन्ते, तेभ्यो रूपापहारे जाते द्वे रूपे, ताभ्यां षडशीत्यधिकं शतं गुण्यते, जातानि त्रीणि शतानि द्विसप्तत्यधिकानि ३७२, अत्र त्रिनवतिः प्रक्षिप्ता, जातानि चत्वारि शतानि पंचषष्ट्यधिकानि ४६५, एतेषां पंचदशभिर्भागो ह्रियते, लब्धा एकत्रिंशत्, आगतं त्रिंशत्पर्वातिक्रमे पंचदश्यां तृतीयं विषुवमिति ॥ २८२ ॥ भूयः प्रकारान्तरेणात्रैवार्थे करणमाह—

इगतीसा ओयगुणा पंचहि भइयव्व तिगुण अंसा उ । तिहिओ भवंति तव्वेसु चेव विसुवेसु नायव्वा ॥ २८३ ॥

एकत्रिंशद् यथोत्तरमोजोगुणा- विषमगुणाः प्रथमतः कर्त्तव्यास्तद्यथा- प्रथमविषुवचिन्तायामेकगुणा द्वितीयविषुवचिंतायां त्रिगुणाः तृतीयविषुवचिन्तायां पंचगुणाः चतुर्थविषुवचिंतायां सप्तगुणाः पंचमविषुवचिन्तायां नवगुणा एवं यावद्दशमविषुवचिन्तायामेकोनविंशतिगुणाः, ततः पंचभिर्भक्तव्याः, तथा च सति यल्लभ्यते तानि पर्वाण्यवसेयानि, शेषास्त्वंशा उद्धरितास्त्रिगुणिताः सन्तो यावन्तो भवन्ति तावत्प्रमाणास्तिथयः सर्वेषु विषुवेषु ज्ञातव्याः, तद्यथा-प्रथमविषुवचिन्तायामेकत्रिंशत्, एकेन गुणितं तदेव भवतीति जाता एकत्रिंशदेव, तस्याः पंचभिर्भागे हृते लब्धाः षड्, एकः पश्चादुद्धरति, स त्रिगुणः क्रियते, जातास्त्रयः, आगतं षड्पर्वातिक्रमे तृतीयस्यां तिथौ प्रथमं विषुवमिति, तृतीयविषुवचिन्तायामेकत्रिंशत् पंचभिर्गुण्यते, जातं पंचपंचाशदधिकं शतं १५५, तस्य पंचभिर्भागो ह्रियते, लब्धा एकत्रिंशत्, आगतं त्रिंशत्पर्वातिक्रमे पंचदश्यां तृतीयं विषुवमिति, तथा दशमविषुवचिन्तायामेकत्रिंशत् एकोनविंशत्या गुण्यते, जातानि पंच शतानि नवाशीत्यधिकानि ५८९, तेषां पंचदशभिर्भागो ह्रियते, लब्धं सप्तदशोत्तरं शतं, शेषास्तिष्ठन्ति चत्वारस्ते त्रिभिर्गुण्यन्ते, जाता द्वादश, सप्तदशोत्तरपर्वशतातिक्रमे द्वादश्यां दशमं विषुवमिति ॥ २८३ ॥ पुनरप्यस्यैवार्थे प्रकारान्तरेण करणमाह—

पव्वा य छक्कादिका दुवालसाहिय दसावसाणा उ। तिगमाइगावि य तिही छक्कुत्तरा सव्वविसुवेसुं ॥ २८४ ॥

इह विषुवेषु पर्वचिन्तायां षडादिकानि यथोत्तरं द्वादशाधिकानि तावत् ज्ञेयानि यावद् 'दशावसानानि' दशसंख्यानि विषुवाणि भवन्तीत्यर्थः, तथा पर्वणामुपरि तिथिचिन्तायां 'त्रिकादिका' त्रिप्रभृतिका यथोत्तरं षडुत्तरास्तिथयः सर्वेषु विषुवेषु तावद्-

यसेया यावत्तानि विषुवानि दशसंख्यानि भवन्ति, तद्यथा-प्रथमं विषुवं पद्पर्वातिक्रमे तृतीयस्यां तिथौ, द्वितीयविषुवचिन्तायां प्रागुक्तपर्वसंख्याने द्वादश प्रक्षिप्यन्ते, तिथिसंख्यायां पद्, तत आगतं-द्वितीयं विषुवमष्टादशपर्वातिक्रमे नवम्यां, ततो भूयोऽपि तृतीयविषुवचिन्तायामनन्तरोक्तपर्वसंख्याने द्वादश प्रक्षिप्यन्ते, तिथिचिन्तायां पद्, तत आगतं-तृतीयं विषुवं त्रिंशत्पर्वातिक्रमे पंचदश्यां, चतुर्थविषुवचिन्तायां पुनरप्यनन्तरोक्तपर्वसंख्याने द्वादश प्रक्षिप्यन्ते, तिथिचिन्तायां पद्, ततस्तिथय एकविंशतिर्भवन्ति, पंचदशभिश्च लब्धमेकं पर्व, तत् पर्वराशौ प्रक्षिप्यते, आगतं-त्रिचत्वारिंशत्पर्वातिक्रमे पष्ठ्यां तिथौ चतुर्थं विषुवमिति, एवं पंचमादीन्यपि दशमपर्यन्तानि विषुवाणि भावनीयानि ॥ २८४ ॥ तत्र पर्वसंख्यानसंग्राहिकेयं गाथा—

छक्कव्वारस तीसा तेयाला पंचवण्ण अट्ठट्ठी । तह य असीइ बिणउई पंचहिय सयं च सत्तरसं ॥ २८५ ॥

प्रथमं विषुवं पद् पर्वाण्यतिक्रम्य द्वितीयं द्वादश तृतीयं पर्वणां त्रिंशतं चतुर्थं त्रिचत्वारिंशतं पंचमं (पंच) पंचाशतं पष्ठमष्टषष्टिं सप्तममशीतिं अष्टमं द्विनवतिं नवमं पंचाधिकं शतं दशमं सप्तदशोत्तरं शतम् ॥ २८५ ॥ सम्प्रति पर्वोपरि तिथिसंख्यानसंग्राहिकां गाथामाह—

तइया नवमी य तिही पन्नरसी छट्ठि बारसी चेव । जुगपुव्वद्धे एया ता चेव हवंति पच्छद्धे ॥ २८६ ॥

युगपूर्वार्द्धे यानि पंच विषुवाणि तेषु यथाक्रममिमाः पर्वोपरि तिथयः, तद्यथा-तृतीया नवमी पंचदशी पष्ठी द्वादशी, किमुक्तं भवति ?-तृतीयस्यां प्रथमं विषुवं द्वितीयं नवम्यां तृतीयं पंचदश्यां चतुर्थं पष्ठ्यां पंचमं द्वादश्याम्, एता एव तिथयः क्रमेण

युगस्य यथार्द्धेऽपि भवन्ति, तद्यथा-षष्ठं विषुवं तृतीयस्यां सप्तमं नवम्यामष्टमं पंचदश्यां नवमं षष्ठ्यां दशमं द्वादश्यामिति, एवं-भूततिथ्यानयनार्थं चामुं प्रकारं पूर्वसूरयः परिभाषन्ते-इहायनगतदिवसराशेस्त्र्यशीत्यधिकशतप्रमाणस्य दश विषुवाणि किल युगे भवन्तीति दशभिर्भागो ह्रियते, लब्धा अष्टादश, ते त्यज्यन्ते, प्रयोजनाभावात्, शेषा उद्धरन्ति त्रयस्ते प्रथमाविषुवादारभ्य यथोत्तरं द्व्युत्तरेण ओजसा गुण्यन्ते, तद्यथा-प्रथमविषुवचिन्तायां ते त्रय एकेन गुण्यन्ते, द्वितीयविषुवचिन्तायां त्रिभिस्तृतीयविषुवचिंतायां सप्तभिः, एवं यावद्दशमविषुवचिन्तायामेकोनविंशत्या, गुणयित्वा च पंचदशभिः पर्वाणि कृत्वा याः शेषास्तिथय उद्धरन्ति ता गुण्यन्ते, ततो यथोक्तास्तिथयो भवन्ति, तद्यथा-प्रथमविषुवचिन्तायां ते त्रय एकेन गुण्यन्ते, एकेन गुणितं तदेव भवतीति तत आगतं प्रथमं विषुवं तृतीयस्यां तिथौ, द्वितीयविषुवचिन्तायां ते त्रयस्त्रिभिर्गुण्यन्ते, जाता नव, आगतं द्वितीयं विषुवं नवम्यामिति, तृतीयविषुवचिन्तायां ते त्रयः पंचभिर्गुण्यन्ते, जाताः पंचदश, आगतं तृतीयं विषुवं पंचदश्यां, चतुर्थविषुवचिन्तायां ते त्रयः सप्तभिर्गुण्यन्ते, जाता एकविंशतिः, तत्र पंचदशभिः पर्व कृतं, शेषास्तिष्ठन्ति षड्, आगतं चतुर्थविषुवं षष्ठ्यामिति, एवं सर्वत्रापि भावनीयं ॥२८६॥ सम्प्रति केन नक्षत्रेण सह योगे किं विषुवमिति चिन्त्यते, तत्र यदि दशभिर्विषुवैः सप्तषष्टिश्चन्द्रपर्याया लभ्यन्ते ततो द्विभागविषुवेन कति चन्द्रपर्याया लभ्यन्ते?, राशित्रयस्थापना १०-६७-१, अत्रान्त्येन राशिना एककलक्षणेन मध्यमस्य राशेः सप्तषष्टिरूपस्य गुणनं, जाता सप्तषष्टिरेव, विषुवं चायनस्य द्विभागरूपमिति दश द्वाभ्यां गुण्यन्ते, जाता विंशतिः, तया सप्तषष्टेर्भागो ह्रियते, लब्धास्त्रयो नक्षत्रपर्यायाः, शेषास्तिष्ठन्ति सप्त, ते पर्यायरूपं भागं न प्रयच्छन्तीति अष्टादशभिः शतैस्त्रिंशैः सप्तषष्टिभागैर्गुणयिष्याम इति विंशतिलक्षणच्छेदराशिगतेन शून्येन सह शून्यस्यापवर्त्तनायां जातं त्र्यशीत्यधिकं शतं १८३, तेन सप्त गुण्यन्ते,



॥१९१॥

जातानि द्वादश शतानि एकाशीत्यधिकानि १२८१, छेदराशिश्च विंशतिलक्षणोऽन्त्यशून्यापवर्त्तनाज्जातो द्विकः, तेन सप्तषष्ट्यादयः समक्षेत्रादिनक्षत्रभागा गुण्यन्ते, जातानि चतुस्त्रिंशदधिकशतादीनि शोधनकानि, तत्राभिजितो द्वाचत्वारिंशच्छुद्धा, स्थितानि शेषाणि द्वादश शतानि एकोनचत्वारिंशदधिकानि १२३९, ततः षड्भिः शतैः सप्तत्यधिकैः ६७० उत्तरभाद्रपदान्तानि पंच नक्षत्राणि शुद्धानि, स्थितानि पश्चात्पंच शतान्येकोनसप्तत्याधिकानि ५६९, ततश्चतुस्त्रिंशदधिकेन शतेन रेवती शुद्धा, स्थितानि चत्वारि शतानि पंचत्रिंशदधिकानि४३५, ततोऽपि चतुस्त्रिंशदधिकेन शतेनाश्विनी शुद्धा, शेषाणि तिष्ठन्ति त्रीणि शतानि एकोत्तराणि३०१, ततः सप्तषष्ट्या भरणी शुद्धा, स्थिते पश्चाद् द्वे शते चतुस्त्रिंशदधिके २३४, ततोऽपि चतुस्त्रिंशदधिकेन शतेन कृत्तिका शुद्धा, शेषं तिष्ठति शतम्, आगतं श्रवणादीनि कृत्तिकापर्यंतानि नव नक्षत्राण्यतिक्रम्य दशमस्य रोहिणीनक्षत्रस्य चतुस्त्रिंशदधिकशतभागानां शतमवगाह्य प्रथमं विषुवं भवतीति। द्वितीयं विषुवं कस्मिन् चन्द्रनक्षत्रे भवति ? इति यदि ज्ञातुमिच्छा तदा पूर्वक्रमेण त्रैराशिकमनुसर्त्तव्यं, तद्यथा-यदि दशभिर्विषुवैः सप्तषष्टिश्चन्द्रनक्षत्रपर्याया लभ्यन्ते ततो द्वाभ्यां विषुवाभ्यां कति चन्द्रनक्षत्रपर्यायान् लभामहे?, राशित्रयस्थापना १०-६७-२; इह द्वितीयं विषुवं त्रिभिरयनविभागैर्भवतीत्यतो राशिस्त्रिकरूपः स्थाप्यते, तेन चान्त्येन राशिना त्रिकलक्षणेन मध्यमः सप्तषष्टिरूपो राशिर्गुण्यते, जाते द्वे शते एकोत्तरे२०१, विषुवं चायनस्य द्विभागरूपमित्यादिराशिर्दशकलक्षणो द्वाभ्यां गुण्यते, जाता विंशतिः, तया भागो ह्रियते, लब्धा दश चन्द्रनक्षत्रपर्यायाः, शेषस्तिष्ठत्येकः, स पर्यायभागं न प्रयच्छतीति अष्टादशभिः शतैस्त्रिंशैः सप्तसप्टिभागैर्गुणयिष्याम इति विंशतिलक्षणच्छेदराशिगतेन शून्येन सह शून्यस्यापवर्त्तनायां जातं त्र्यशीत्यधिकं शतं १८३, तेनैकको गुण्यते, जातं त्र्यशीत्यधिकमेव शतम्, एकेन गुणितं तदेव भवतीति वचनात्, ततोऽभिजितो द्वाचत्वारिंशत् शुद्धा,

॥१९२॥

शेषं तिष्ठत्येकचत्वारिंशदधिकं शतं १४१, ततोऽपि चतुस्त्रिंशदधिकेन शतेन श्रवणः शुद्धः, शेषास्तिष्ठन्ति सप्त, आगतं श्रवणनक्षत्रमतिक्रम्य धनिष्ठानक्षत्रस्य वसुदेवताकस्य सप्त चतुस्त्रिंशदधिकशतभागानवगाह्य द्वितीयं विषुवं प्रवर्त्तेत इति। तथा चतुर्थं विषुवं कस्मिन् चन्द्रनक्षत्रे भवतीति जिज्ञासायां त्रैराशिकं, यदि दशभिर्विषुवैः सप्तषष्टिश्चन्द्रनक्षत्रपर्याया लभ्यन्ते ततः सप्तभिर्विषुवद्विभागैः कति पर्याया लभ्यन्ते ?, राशित्रयस्थापना १०-६७-७, अत्रान्त्येन राशिना सप्तकलक्षणेन मध्यमस्य राशेर्गुणनं, जातानि चत्वारि शतान्येकोनसप्तत्यधिकानि ४६९, तेषां विंशत्या भागो ह्रियते, लब्धास्त्रयोविंशतिपर्यायाः, शेषा उद्धरिता नव प्रागुक्तयुक्त्या त्र्यशीत्यधिकेन शतेन गुण्यन्ते, जातानि षोडश शतानि सप्तचत्वारिंशदधिकानि १६४७, ततोऽभिजितो द्वाचत्वारिंशत् शुद्धा, स्थितानि शेषाणि षोडश शतानि पंचोत्तराणि १६०५, तेभ्यश्चतुर्दशभिः शतैश्चतुःसप्तत्यधिकैः १४७४ मृगशिरःपर्यन्तान्येकादश नक्षत्राणि शुद्धानि, स्थितं पश्चादेकत्रिंशदधिकं शतं १३१, ततोऽपि सप्तषष्ट्याऽऽर्द्रा शुद्धा, स्थिता शेषा चतुष्षष्टिः, आगतं श्रवणादीन्यार्द्रापर्यन्तानि द्वादश नक्षत्राण्यतिक्रम्य पुनर्वसुनक्षत्रस्य चतुस्त्रिंशदधिकशतभागानां चतुष्षष्टिसंख्यानवगाह्य चतुर्थं विषुवद् प्रवर्तते इति। एवं सर्वाण्यपि विषुवनक्षत्राणि भावनीयानि, तत्संग्राहिका चेयं गाथा—

रोहिणि वासव साई अदीइ अभिवड्ढ मित्त पिउदेवा। आसिणिवीसूदेवा अज्जमणा इह विसुवारिक्खा ॥२८७॥

'इह' इति अमूनि यथाक्रमं विषुवाणां नक्षत्राणि, तद्यथा-प्रथमस्य विषुवस्य प्रवृत्तावादौ नक्षत्रं रोहिणी द्वितीयस्य वासवं वसुदेवतोपलक्षितं धनिष्ठानक्षत्रं तृतीयस्य स्वातिश्चतुर्थस्यादितिदेवतोपलक्षितं पुनर्वसुनक्षत्रं पंचमस्याभिवृद्धिदेवतोपलक्षितमुत्तरा-

भाद्रपदनक्षत्रं पष्ठस्य मित्रो-मित्रदेवतोपलक्षितमनुराधानक्षत्रं सप्तमस्य पितृदेवता मघा अष्टमस्याश्विनी नवमस्य विष्वग्देवा उत्तरापाढाः दशमस्यार्यमा-अर्यमदेवोपलक्षितमुत्तरफाल्गुनीनक्षत्रमिति ॥२८७॥ सम्प्रत्येतेष्वेव विपुवेपु सूर्यनक्षत्रं प्रतिपिपादयिपुराह-

दक्खिणअयणे सूरो पंच विसुवाणि वासुदेवेण । जोएइ उत्तरेणावि आइच्चो आसदेवेण ॥ २८८ ॥

दक्षिणायने वर्त्तमानः सूर्यः पंचापि विपुवाणि वासुदेवेन-स्वातिनक्षत्रेण योजयति 'उत्तरेणापि' उत्तरस्यामपि दिशि गच्छन्नादित्यः पंचापि विपुवाणि 'अश्वदेवेन' अश्वदेवोपलक्षितेनाश्विनीनक्षत्रेण योजयति, किमुक्तं भवति ?- पंचापि दक्षिणायनविपुवाणि स्वातिनक्षत्रेण सह योगे प्रवर्त्तन्ते, पंचापि चोत्तरायणविपुवाण्यश्विनीनक्षत्रेण योग इति, तत्रेयं भावना-यदि दशभिर्विपुवैः पंच सूर्यपर्याया लभ्यन्ते ततोऽयनद्विभागरूपे प्रथमे विपुवे किं लभामहे?, राशित्रयस्थापना १०-५-१, अत्रान्त्येन राशिना एककलक्षणेन मध्यमस्य पंचकरूपस्य राशेर्गुणनाज्जाताः पंचैव, आद्यश्च राशिः विपुवरूपो, विपुवं च प्रथममयनद्विभाग इति द्वाभ्यां गुण्यते, जाता विंशतिः, तया पूर्वराशेर्भागो ह्रियते, लब्ध एकश्चतुर्भागः, एतं नियतनक्षत्रपरिमाणानयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैर्गुणयिष्याम इति गुणकारराशेरर्द्धेनापवर्त्तनाज्जातानि नव शतानि पंचदशोत्तराणि ९१५, तैरेकोऽनन्तरोक्तश्चतुर्थभागो गुण्यते, जातानि तान्येव नव शतानि पंचदशोत्तराणि, तेभ्योऽष्टाशीत्या पुष्यः शुद्धः, स्थितानि पश्चादष्टौ शतानि सप्तविंशत्यधिकानि ८२७, तेषां चतुस्त्रिंशदधिकेन शतेन भागो ह्रियते, लब्धाः षट्, पश्चात्तिष्ठति त्रयोविंशतिः, आगतमश्लेषादीनि चित्रापर्यन्तानि षट् - नक्षत्राण्यतिक्रम्य स्वातिनक्षत्रस्य चतुस्त्रिंशदधिकशतभागानां त्रयोविंशतिभागानवगाह्य प्रथमं विपुवं सूर्यः प्रवर्त्तयति । यदा तृतीयविपुवविषया

चिंता क्रियते यदा तृतीयं विषुवं पंचानामयनद्विभागानामतिक्रमे भवति तत एवं त्रैराशिककर्म्म, यदि दशभिर्विषुवैः पंच सूर्यपर्याया लभ्यन्ते ततः पंचभिरयनद्विभागैः किं लभ्यते?, राशित्रयस्थापना १०-५-५, अत्रान्त्येन राशिना पंचकलक्षणेन मध्यमस्य पंचकरूपस्य राशेर्गुणनाज्जाता पंचविंशतिः, ततः पूर्ववदाद्यो राशिर्द्वाभ्यां गुण्यते, जाता विंशतिः, तया भागो ह्रियते, लब्धः एकः परिपूर्णः पर्यायः, पश्चादेकश्चतुर्थभागोऽवतिष्ठते, ततः पूर्वक्रमेणात्रापि तृतीये विषुवे स्वातिनक्षत्रलाभः, एवमुक्तनीत्या परिभाव्यमानानि पंचापि दक्षिणायनविषुवाणि स्वातिनक्षत्र एव लभ्यन्ते, नान्यत्रेति । सम्प्रत्युत्तरायणविषुवविषया भावना क्रियते, उत्तरायणविषयाणि च विषुवाण्यमूनि, तद्यथा-द्वितीयं चतुर्थं षष्ठमष्टमं दशमं च, द्वितीयं च विषुवं त्रयाणामयनद्विभागानामन्ते भवति, चतुर्थं सप्तानां षष्ठमेकादशानामष्टमं पंचदशानां दशममेकोनविंशतेः, तत्रैवं त्रैराशिककर्म-यदि दशभिर्विषुवैः पंच सूर्यनक्षत्रपर्याया लभ्यन्ते ततस्त्रिभिरयनद्विभागैः किं लभामहे ? राशित्रयस्थापना १०-५-३, अत्रान्त्येन राशिना त्रिकलक्षणेन मध्यमः पंचकलक्षणो राशिर्गुण्यते, जाताः पंचदश, आद्यश्च दशरूलक्षणो राशिः पूर्ववद् द्वाभ्यां गुण्यते, जाता विंशतिस्तया भागो ह्रियते, लब्धास्त्रयश्चतुर्भागाः, तानष्टादशभिः शतैस्त्रिंशदधिकैर्गुणयिष्याम इति तस्य गुणकारराशेरर्द्धेनापवर्त्तनाज्जातानि नव शतानि पंचदशोत्तराणि ९१५, तैरनन्तरोक्तास्त्रयो गुण्यन्ते, जातानि सप्तविंशतिः शतानि पंचचत्वारिंशदधिकानि २७४५, तेभ्योऽष्टाशीत्या पुष्यः शुद्धः, स्थितानि पश्चात् षड्विंशतिशतानि सप्तपंचाशदधिकानि २६५७, तेषां चतुस्त्रिंशदधिकेन शतेन भागहरणं, लब्धा एकोनविंशतिः, शेषं तिष्ठत्येकादशोत्तरं शतं १११, तेभ्योऽभिजितो द्वाचत्वारिंशत् शुद्धा, शेषास्तिष्ठन्त्येकोनसप्ततिः ६९, तत्रैकोनविंशतिमध्यात् त्रयोदशभिरश्लेषादीन्युत्तराषाढापर्यंतानि नक्षत्राणि शुद्धानि, अभिजिन्नक्षत्रं प्रागेव शोधितं, ततः पंच

नक्षत्राणि शुद्धानि, एकेन च शेषेण रेवती, आगतमश्विनीनक्षत्रस्य चतुस्त्रिंशदधिशतभागानामेकोनसप्ततिभागानवगाह्य सूर्यो द्वितीयं विषुवं प्रवर्त्तयति। तथा चतुर्थविषुवचिन्तायामेवं त्रैराशिकं-यदि दशभिर्विषुवैः पंच सूर्यनक्षत्रपर्याया लभ्यन्ते ततः सप्तभिरयनद्विभागैः किं लभ्यमिति, राशित्रयस्थापना १०-५-७ अत्रान्त्येन राशिना मध्यमराशेर्गुणनं, जाता पंचत्रिंशत् ३५, तस्याः पूर्वोक्तयुक्त्या विंशत्या भागो ह्रियते, लब्ध एकः सूर्यनक्षत्रपर्यायः, पश्चादवतिष्ठंते पंचदश, ते च त्रयः पर्यायचतुर्भागास्ततस्ते प्रागुक्तयुक्त्या नवभिः शतैः पंचदशाधिकैर्गुण्यंते, जातानि सप्तविंशतिः शतानि पंचचत्वारिंशदधिकानि २७४५, ततः पूर्वोक्तप्रकारेण तावद्वक्तव्यं यावदागतमश्विननिक्षत्रस्य चतुस्त्रिंशदधिकशतभागानामेकोनसप्ततिभागानवगाह्य सूर्यश्चतुर्थं विषुवं प्रवर्त्तयति, एवमुक्तनीत्या परिभाव्यमानानि पंचाप्युत्तरायणविषुवाण्यश्विनीनक्षत्र एव यथोदितभागातिक्रमे प्रवर्त्तन्त इति ॥ २८७ ॥ तदेवं दक्षिणोत्तरायणविषुवेषु नक्षत्राणि प्रतिपाद्य लग्नं प्रतिपादयितुमाह—

लग्गं च दक्खिणायण विसुवेसुवि अस्स उत्तरं अयणे। लग्गं साई विसुवेसु पंचसुवि दक्खिणं अयणे ॥ २८८ ॥
दक्खिणअयणे विसुवेसु नहयलेऽभिजि रसायले पुस्से। उत्तरअयणे अभिई रसायले नहयले पुस्से ॥ २८९ ॥

दक्षिणायनगतेषु पंचस्वपि विषुवेषु 'अस्से' अश्वदेवोपलक्षितेऽश्विनीनक्षत्रे लग्नं भवति, किमुक्तं भवति ?- पंचापि दक्षिणायनविषुवाणि मेषलग्ने प्रवर्त्तन्त इति, तथाहि-यदि दशभिर्विषुवैरष्टादश शतानि पंचत्रिंशदधिकानि लग्नपर्यायाणां भवन्ति ततोऽयनद्विभागरूपे प्रथमे विषुवे किं लग्नं भवति ? इति, राशित्रयस्थापना १०-१८३५-१, अत्रान्त्येन राशिना एककलक्षणेन मध्यो

राशिर्गुण्यते, गुणितश्च सन् स तावानेव भवति, एकेन गुणितं तदेव भवतीतिन्यायात्, विषुवं चायनद्विभागरूपं भवतीति विषुवपरिमाणच्छदायो राशिर्गुण्यते(द्वाभ्यां), जाता विंशतिः, तया भागो ह्रियते, लब्धा एकनवतिः पर्यायाः, शेषास्तिष्ठन्ति पंचदश, तेषां पंचकेनापवर्त्तनाज्जातास्त्रयः, ततो नक्षत्रानयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैर्गुणयिष्याम इति गुणकारराशेरर्द्धेनापवर्त्तनाज्जातानि नव शतानि पंचदशाधिकानि ९१५, तैस्त्रयो गुण्यन्ते, जातानि सप्तविंशतिशतानि पंचचत्वारिंशदधिकानि २७४५, तेभ्योऽष्टाशीत्या पुष्यः शुद्धः, स्थितानि पश्चात् षड्विंशतिशतानि सप्तपंचाशदधिकानि २६५७, तेषां चतुस्त्रिंशदधिकेन शतेन भागहरणं, लब्धा एकोनविंशतिः, शेषं तिष्ठति एकादशोत्तरं शतं १११, तस्मादभिजितो द्वाचत्वारिंशत् शुद्धा, शेषा तिष्ठत्येकोनसप्ततिः ६९, अत्रैकोनविंशतिमध्यात् त्रयोदशभिरश्लेषादीन्युत्तरभाद्रपदापर्यन्तानि नक्षत्राणि शुद्धानि, अभिजिन्नक्षत्रं च प्रागेव शोधितं, ततः पंचभिः श्रवणादीन्युत्तरभाद्रपदापर्यन्तानि पंच नक्षत्राणि शुद्धानि, एकेन च शेषेण रेवती शुद्धा, आगतमश्विनीनक्षत्रस्य चतुस्त्रिंशदधिकशतभागामेकोनसप्ततिसंख्येषु प्रथमं विषुवं भवति । द्वितीयविषुवचिंतायामेवं त्रैराशिकं- यदि दशभिर्विषुवैरष्टादशशतानि पंचत्रिंशदधिकानि लग्नपर्यायाणां लभ्यन्ते ततः पंचभिरयनद्विभागैः किं लभ्यामिति, राशित्रयस्थापना १०-१८३५-५, अत्रान्त्येन राशिना मध्यराशेर्गुणनं, जातान्येकनवतिशतानि पंचसप्तत्यधिकानि ९१७५, ततः प्रागुक्तयुक्त्याऽऽद्यो राशिर्द्वाभ्यां गुण्यते, जाता विंशतिः, तया भागो ह्रियते, लब्धानि लग्नपर्यायाणां चत्वारि शतान्यष्टपंचाशदधिकानि ४५८, न तैः प्रयोजनं, शेषास्तिष्ठन्ति पंचदश, ततः प्रागुक्तगणितक्रमेणागतमश्विनीनक्षत्रस्य लग्नप्रवर्त्तकस्य चतुस्त्रिंशदधिकशतभागानामेकोनसप्ततिसंख्येषु भागेषु द्वितीयं विषुवं प्रवर्त्तते। एवं पंचस्वपि दक्षिणायनविषुवेषु लग्नं भावनीयं। साम्प्रतमुत्तरायण-

विषुवलग्नभावना क्रियते-यदि दशभिर्विषुवैरष्टादश शतानि पंचत्रिंशदधिकानि लग्नपर्यायाणां भवन्ति ततस्त्रिभिरयनार्धभागैः किं लभ्यमिति, राशित्रयस्थापना १०-१८३५-३, अत्रान्त्येन राशिना मध्यस्य राशेर्गुणनं, जातानि पंचपंचाशच्छतानि पंचोत्तराणि ५५०५, ततः प्रागुक्तयुक्त्याऽऽद्यो राशिर्द्वाभ्यां गुण्यते, जाता विंशतिः, तया भागो ह्रियते, लब्धे द्वे शते पंचसप्तत्यधिके २७५लग्नपर्यायाणां, न च तैः प्रयोजनं, शेषास्तिष्ठन्ति पंच, स च किल एकश्चतुर्भाग इत्येकः स्थाप्यते, ततः प्रागुक्तयुक्त्या स नवभिः शतैः पंचदशोत्तरैर्गुण्यते, जातानि नव शतानि पंचदशोत्तराणि ९१५, तेभ्योऽष्टाशीत्या पुष्यः शुद्धः, स्थितानि पश्चादष्टौ शतानि सप्तविंशत्यधिकानि ८२७, तेषां चतुस्त्रिंशदधिकेन शतेन भागो ह्रियते, लब्धाः षट्, पश्चात्तिष्ठति त्रयोविंशतिः, षड्भिश्चाश्लेषादीनि चित्रापर्यन्तानि षड् नक्षत्राणि शुद्धानि, आगतं स्वातिनक्षत्रस्य लग्नप्रवर्चकस्य चतुस्त्रिंशदधिकशतभागानामेकोनसप्ततिसंख्येषु भागेषु गतेषु द्वितीयं विषुवं प्रवर्त्तते। चतुर्थविषुवचिंतायामेकं त्रैराशिकं-यदि दशभिर्विषुवैरष्टादशशतानि पंचत्रिंशदधिकानि लग्नपर्यायाणां लभ्यन्ते ततः सप्तभिरयनार्द्धभागैः किं लभ्यमिति, राशित्रयस्थापना १०-१८३५-७, अत्रान्त्येन राशिना मध्यराशिर्गुण्यते, जातानि द्वादश सहस्राण्यष्टौ शतानि पंचचत्वारिंशदधिकानि १२८४५, तेषां विंशत्या भागो ह्रियते, लब्धानि षट् शतानि द्विचत्वारिंशदधिकानि लग्नपर्यायाणां ६४२, शेषास्तिष्ठन्ति पंच, ततः प्रागुक्तगणितक्रमेणागतं स्वातिनक्षत्रस्य लग्नप्रवर्चकस्य चतुस्त्रिंशदधिकशतभागानामेकोनसप्ततिसंख्येषु भागेषु गतेषु चतुर्थं विषुवं प्रवर्त्तते, एवं पंचस्वप्युत्तरायणविषुवेषु लग्नं भावनीयम्। इह यदा सूर्यो दक्षिणायनविषुवेऽश्विन्यां वर्त्तते तदा पाश्चात्यं लग्नं स्वातौ, स्वात्यश्विन्योश्च मध्येऽभिजिद्वर्त्तते स्म भाविद्वितीयार्द्धमध्ये च भावी पुष्यः, ततो दक्षिणायनविषुवेषु पंचस्वपि अभिजित् नभस्तले

अतिक्रान्तपाश्चात्यार्द्धवर्तित्वात्, पुष्यो रसातले भाव्युत्तरार्द्धमध्यभावित्वात्, यदा तु रविरुत्तरायणविषुवे स्वातौ वर्त्तते तदा पाश्चात्यं लग्नमश्विन्यां, स्वात्यश्विन्योश्च मध्ये च पुष्यो, भाविद्वितीयार्धमध्ये भावि लग्नमभिजित्, तत उत्तरायणविषुवेषु पंचस्वपि पुष्यो नभस्तलेऽतिक्रान्तपाश्चात्यार्द्धे गतत्वात्, अभिजिद्रसातले, भाव्युत्तरार्द्धमध्यभावित्वात् ॥२८९॥ तदेवमुक्तं विषुवगतं लग्नं, सम्प्रति कः कालो निश्चयतो विषुवस्येति प्ररूपयति-

**मंडलमज्झत्थंमि य अचक्खुविसयं गयंमि सूरंमि । जो खलु मत्ताकालो सो कालो होइ विसुवस्स ॥२९०॥**

मण्डलमध्यमस्थे, सार्द्धद्विनवतिमण्डलमध्यभागवर्त्तिनीत्यर्थः, अचक्षुर्विषयगते कलया चक्षुर्विषयमतीतो व्यवहारतश्चक्षुर्विषयातीत इति विवक्षितः, तस्मिन् सूर्ये यः खलु 'मात्राकालो' दिवसरात्रिमध्यगतसन्धिरूपः स विषुवस्य कालो वेदितव्यः, तथाहि-यदि दशभिर्विषुवैरष्टादश सूर्योदयशतानि त्रिंशदधिकानि लभ्यन्ते ततोऽयनाद्विभागरूपे विषुवे किं लभामहे ? १०-१८३०-१; अत्रान्त्येन राशिना मध्यस्य राशेर्गुणनं, जातानि तान्येवाष्टादश शतानि त्रिंशदधिकानि १८३०, आद्यश्च राशिः प्रागुक्तयुक्त्या द्वाभ्यां गुण्यते, जाता विंशतिः, तया भागो ह्रियते, लब्धा एकनवतिः, एकश्च द्विभागोऽहोरात्रस्य, तत आगतमर्थापत्त्या द्विनवतितमेऽहोरात्रे दिवसस्य रात्रेश्च यः सन्धिरूपो मात्राकालः स निश्चयतो विषुवकालः, न त्वत्र संदेहः, किमयं सूर्योदयसन्धिरित्याभिधीयते किं वाऽस्तमयसन्धिः ?, उच्यते, अस्तमयसन्धिर्यतो दिवसादिरहोरात्रः, तथा चोक्तं-'दिवसादिरहोरात्र' इति, ततो दिवसोऽतिक्रान्तोऽस्तमयश्च प्रवर्त्तत इत्यस्तमयसन्धिरेवाभिधीयते ॥ २९० ॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां विषुवप्रतिपादकं पंचदशं प्राभृतं समाप्तम् ॥

तदेवमुक्तं पंचदशं प्राभृतं, सम्प्रति व्यतिपातप्रतिपादकं पोडशकं प्राभृतं विवक्षुराह—

अयणाणं संबंधे रविसोमाणं तु वेहि य जुगम्मि । जं हवइ भागलद्धं वइवाया तत्तिया होंति ॥ २९१ ॥ बावत्तरीपमाणो फलरासी ।

इह सूर्याचन्द्रमसौ स्वकीयेऽयने वर्त्तमानौ यत्र परस्परं व्यतिपततः स कालो व्यतिपातः, तत्र 'रविसोमयोः' सूर्याचन्द्रमसोः 'युगे' युगमध्येऽयनानि तेषां परस्परं 'सम्बन्धे' एकत्र मीलने कृते सति द्वाभ्यां भागो ह्रियते, हृते च भागे यद् भवति भागलब्धं 'तावन्तः' तावत्प्रमाणा एकस्मिन् युगे व्यतिपाता भवंति, स च भागलब्धकराशिर्द्वासप्ततिप्रमाणः, तथाहि-सूर्यस्यायनानि दश चन्द्रस्यायनानां चतुस्त्रिंशदधिकं शतं, तयोरेकत्र मीलने जातं चतुश्चत्वारिंशदधिकं शतं १४४, तस्य द्वाभ्यां भागो ह्रियते, लब्धा द्वासप्ततिरेव, तावत्प्रमाणा युगमध्ये व्यतिपाताः ॥ २९१ ॥ साम्प्रतमीप्सितव्यतिपातानयनाय करणमाह—

इच्छिते उ जुगभेए । इच्छियवइवायंपि य इच्छं काऊण आणेहि ॥ २९२ ॥

जं भवइ भागलद्धं तं इच्छं निद्दिसाहि सव्वत्था । सेसेवि तस्स भेए फलरासिस्साणए सिग्घं ॥ २९३ ॥

'ईप्सिते' विवक्षिते 'युगभेदे' युगविशेषे इच्छाम्-ईप्सितव्यतिपातविषयां कृत्वा ईप्सितं व्यतिपातमप्यानय । कथमित्याह-तत्र यद् भवति भागेन-द्वासप्तत्यादिभागहारेण लब्धं तं-तत्संख्यं 'इच्छं'ति ईप्सितं व्यतिपातं निर्दिशेत् । शेषानपि युगभेदान् मुहूर्तादिरूपान् 'फलरासिस्स'त्ति तृतीयार्थे षष्ठी फलराशिना द्वासप्ततिलक्षणेन शीघ्रमानय । एष करणगाथाक्षरार्थः, सम्प्रति भाव-

15980

ना क्रियते-यदि द्वासप्ततिसहस्रैर्व्यतिपातैश्चतुर्विंशत्यधिकं पर्वशतं लभ्यते तत एकस्मिन् व्यतिपाते किं लभामहे ?, राशित्रयस्थापना७२-१२४-१ अत्रान्त्येन राशिना एककलक्षणेन मध्यराशिश्चतुर्विंशत्यधिकशतप्रमाणो गुण्यते, जातं तदेव चतुर्विंशत्यधिकं शतं १२४, तस्य द्वासप्तत्या भागो ह्रियते, लब्धमेकं पर्व, पश्चादवतिष्ठते द्विपञ्चाशत्, सा पञ्चदशभिर्गुण्यते, जातानि सप्त शतान्यशीत्यधिकानि, तेषां द्वासप्तत्या भागहारे लब्धा दश तिथयः, शेषा षष्टिः, सा मुहूर्त्तकरणार्थं त्रिंशता गुण्यते, जातान्यष्टादश शतानि १८००, तेषां द्वासप्तत्या भागहरणे लब्धाः परिपूर्णाः पंचविंशतिर्मुहूर्त्ताः, पश्चान्न किमपि तिष्ठति, आगतमेकस्मिन् पर्वणि दशसु च तिथिषु गतास्वेकादश्यां पंचविंशतौ मुहूर्त्तेषु प्रथमो व्यतीपातः समाप्तदिति, तथा यदि द्वासप्ततिसहस्रैर्व्यतिपातैश्चतुर्विंशत्यधिकं पर्वशतं लभ्यते ततः पंचभिर्व्यतिपातैः किं लभ्यम् ? इति, राशित्रयस्थापना ७२-१२४-५, अत्रान्त्येन राशिना पंचकलक्षणेन मध्यराशेर्गुणनं, जातानि षट् शतानि विंशत्यधिकानि ६२०, तेषां द्वासप्तत्या भागो ह्रियते, लब्धान्यष्टौ पर्वाणि ८, शेषास्तिष्ठन्ति चतुश्चत्वारिंशत् ४४, सा तिथ्यानयनाय पंचदशभिर्गुण्यते, जातानि षट् शतानि षष्ट्यधिकानि ६६०, तेषां द्वासप्तत्या भागहारे लब्धा नव ९, शेषास्तिष्ठन्ति द्वादश, ते मुहूर्त्तानयनाय त्रिंशता गुण्यन्ते, जातानि त्रीणि शतानि षष्ट्यधिकानि ३६०, तेषां द्वासप्तत्या भागे हृते लब्धाः परिपूर्णाः पंच मुहूर्त्ताः, पश्चान्न किमपि तिष्ठति, आगतमष्टसु पर्वसु गतेषु नवमस्य च पर्वणो नवसु तिथिषु गतासु दशम्यां तिथौ पंचसु मुहूर्त्तेषु पंचमो व्यतिपातः समाप्तः, एवं सर्वेऽपि व्यतीपाताः । ( संप्रति चन्द्रनक्षत्रव्यतिपात ) परिज्ञानार्थमुपक्रम्यन्ते, यदि द्वासप्ततिसहस्रैर्व्यतीपातैः सप्तषष्टिश्चन्द्रनक्षत्रपर्याया लभ्यन्ते तत एकस्मिन् व्यतिपाते किं लभेयमिति, राशित्रयस्थापना ७२ ६७-१, अत्रान्त्येन राशिना एककलक्षणेन मध्यमराशेः सप्तषष्टिरूपस्य गुणनात् जातः सप्तषष्टिरेव, तस्या द्वासप्त-

त्या भागो ह्रियते, सा च स्तोकत्वाद्भागं न प्रयच्छति, ततो नक्षत्रानयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैर्गुणयिष्याम इत्यस्य गुणकारराशेश्छेदराशेश्च द्वासप्ततिरूपस्य षट्केनापवर्त्तना, तत्र जातो गुणकारराशिस्त्रीणि शतानि पंचोत्तराणि ३०५, छेदराशिर्द्वादश, गुणकारराशिना च सप्तषष्टिर्गुण्यते, जातानि विंशतिसहस्राणि चत्वारि शतानि पंचत्रिंशदधिकानि २०४३५, छेदराशिरपि द्वादशलक्षणः सप्तषष्ट्या गुण्यते, जातान्यष्टौ शतानि चतुरुत्तराणि ८०४, ये चाभिजितः सप्तषष्टिभागा एकविंशतिस्तेऽपि द्वादशभिर्गुण्यन्ते, जाते द्वे शते द्विपंचाशदधिके २५२, ते उपरितनराशेः शोध्यन्ते, स्थितानि पश्चाद्विंशतिः सहस्राणि शतमेकं त्र्यशीत्याधिकं २०१८३, तेषामष्टभिः शतैश्चतुरुत्तरैर्भागो ह्रियते, लब्धा पंचविंशतिः, शेषास्तिष्ठन्ति त्र्यशीतिः संप्रति मुहूर्त्ता आनेतव्याः, मुहूर्त्ताश्च अहोरात्रे त्रिंशत्, तस्याः षट्केनापवर्त्तनायां जाताः पंच, छेदराशिरपि षट्केनापवर्त्तितो जातश्चतुस्त्रिंशदधिकं शतं १३४, तत्र त्र्यशीतिः पंचभिर्गुणिता जातानि चत्वारि शतानि पंचदशोत्तराणि ४१५, तेषां चतुस्त्रिंशदधिकेन शतेन भागहरणं, लब्धास्त्रयो मुहूर्त्ताः, शेषास्तिष्ठन्ति त्रयोदश, तत्र द्वाविंशत्या श्रवणादीनि विशाखापर्यंतानि नक्षत्राणि शुद्धानि, शेषास्तिष्ठन्ति त्रयः, तैश्चानुराधाज्येष्ठामूलरूपाणि नक्षत्राणि शुद्धानि, परं ज्येष्ठानक्षत्रमर्द्धक्षेत्रमिति तत् पंचदशभिर्मुहूर्त्तैः शुद्ध्यति, शेषाः पंचदश तिष्ठन्ति, ते मुहूर्त्तराशौ प्रक्षिप्यन्ते, तत आगतं-पूर्वाषाढानक्षत्रस्याष्टादश मुहूर्त्तानेकस्य मुहूर्त्तस्य च त्रयोदश चतुस्त्रिंशदधिकशतभागानवगाह्य प्रथमो व्यतिपातो गत इति, तथा यदि द्वासप्ततिसंख्यैर्व्यतिपातैः सप्तषष्टिश्चन्द्रनक्षत्रपर्याया लभ्यन्ते ततः पंचभिर्व्यतिपातैः किं लभामहे? राशित्रयस्थापना ७२-६७-५, अत्रान्त्येन राशिना मध्यराशेर्गुणनं, जातानि त्रीणि शतानि पंचत्रिंशदधिकानि ३३५, तेषां द्वासप्तत्या भागे हृते लब्धाश्चत्वारः पर्यायाः, न तैः प्रयोजनं, शेषास्तिष्ठन्ति सप्तचत्वारिंशत्, सा नक्षत्रानयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैर्गुण-

पितव्येति गुणकारच्छेदराश्योः षट्केनापवर्त्तनाज्जातो गुणकारराशिस्त्रीणि शतानि पंचोत्तराणि ३०५, छेदराशिर्द्वादश, तत्र गुणकारराशिना पंचोत्तरत्रिशतप्रमाणेन सप्तचत्वारिंशद् गुण्यते, जातानि चतुर्दश सहस्राणि त्रीणि शतानि पंचत्रिंशदधिकानि १४३३५, छेदराशिना च द्वादशप्रमाणेन सप्तषष्टिर्गुण्यते, जातान्यष्टौ शतानि चतुरुत्तराणि, अभिजितोऽप्येकविंशतिः सप्तषष्टिभागा द्वादशभिर्गुणिता जाते द्वे शते द्विपंचाशदधिके २५२, ते भाज्यराशेः शोध्यन्ते, स्थितानि पश्चाच्चतुर्दश सहस्राणि त्र्यशीत्यधिकानि १४०८३, तेषामष्टभिः शतैश्चतुरुत्तरैर्भागहरणं, लब्धाः सप्तदश १७, शेषं तिष्ठति चत्वारि शतानि पंचदशाधिकानि ४१५, एतानि च मुहूर्त्तानयनाय त्रिंशता गुणयितव्यानि, त्रिंशतश्च षट्केनापवर्त्तनायां जाताः पंच, छेदराशेरपि षट्केनापवर्त्तने जातं चतुस्त्रिंशदधिकं शतं, तत्र चतुर्णां शतानां पंचदशोत्तराणां पंचभिर्गुणने जातानि विंशतिशतानि पंचसप्तत्यधिकानि २०७५, तेषां चतुस्त्रिंशदधिकशतेन भागो ह्रियते, लब्धाः पंचदश मुहूर्त्ताः, शेषाः तिष्ठन्ति चतुस्त्रिंशदधिकशतभागाः पंचषष्टिः, तत्र ये पूर्वलब्धाः सप्तदश तेभ्यस्त्रयोदशभिः श्रवणादीनि पुनर्वसुपर्यन्तानि शुद्धानि, शेषास्तिष्ठन्ति चत्वारि, तैश्च पुष्यादीनि पूर्वफाल्गुनीपर्यन्तानि चत्वारि नक्षत्राणि शुद्धानि, परमश्लेषानक्षत्रमर्द्धक्षेत्रमिति तत् पंचदशभिर्मुहूर्त्तैः शुद्ध्यतीति शेषास्तिष्ठन्ति पंचदश, ते मुहूर्त्तराशौ प्रक्षिप्यन्ते, जातास्त्रिंशन्मुहूर्त्ताः, आगतमुत्तरफाल्गुनीनक्षत्रस्य त्रिंशन्मुहूर्त्तान् एकस्य च मुहूर्त्तस्य पंचषष्टिं चतुस्त्रिंशदधिकशतभागानामवगाह्य पंचमो व्यतिपातोऽभूदिति, एवं सर्वेष्वपि व्यतिपातेषु भावनीयं ॥ सम्प्रति सूर्यनक्षत्रानयनायोपक्रम्यते, यदि द्वासप्ततिसंख्यैर्व्यतिपातैः पंच सूर्यनक्षत्रपर्याया भवन्ति तत एकस्मिन् व्यतिपाते किं भवति ?, राशित्रयस्थापना ७२-५-१,-अत्रान्त्येन राशिना मध्यराशेर्गुणनं, जाताः पंचैव, तेषामाद्येन राशिना द्वासप्ततिलक्षणेन भागो हार्यः, ते च

स्तोकत्वाद्भागं न प्रयच्छन्ति, ततो नक्षत्रानयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागैर्गुणयितव्या इति छेदराशिगुणराश्योः षट्केनापवर्त्तना:, जातश्छेदराशिर्द्वादश, गुणकारराशिस्त्रीणि शतानि पंचोत्तराणि ३०५, तेनोपरितनो राशिः पंचकलक्षणो गुण्यते, जातानि पंचदश शतानि पंचविंशत्यधिकानि १५२५, छेदराशिना च द्वादशकलक्षणेन सप्तषष्टिर्गुण्यते, जातान्यष्टौ शतानि चतुरुत्तराणि ८०४, पुष्यस्य च सप्तषष्टिभागाश्चतुश्चत्वारिंशद् द्वादशभिर्गुण्यन्ते, जातानि पंच शतानि अष्टाविंशत्यधिकानि ५२८, तानि पूर्वराशेः शोध्यन्ते, स्थितानि पश्चान्नव शतानि सप्तनवत्यधिकानि ९९७, तेषामष्टभिः शतैश्चतुरुत्तरैर्भागो ह्रियते, लब्धमेकं नक्षत्रमश्लेषारूपं, स्थितं पश्चात्त्रिनवत्यधिकं शतं, एतच्च नक्षत्रभागं न प्रयच्छतीति सप्तषष्टिभागानयनाय छेदराशिर्मौल एव द्वादशलक्षणः परं पंचभिः सप्तषष्टिभागैरहोरात्रो लभ्यत इति स पंचभिर्गुण्यते, जाता षष्टिः, तया भागो ह्रियते, लब्धास्त्रयोऽहोरात्राः, शेषास्तिष्ठन्ति त्रयोदश, ते मुहूर्त्तानयनाय त्रिंशता गुण्यंते, जातानि त्रीणि शतानि नवत्यधिकानि ३९०, तेषां षष्ट्या भागे हृते लब्धाः सार्द्धाः षड् मुहूर्त्ताः, अश्लेषानक्षत्रमिति तद्गता अहोरात्रा एकविंशतिश्च मुहूर्त्ता उद्धरन्ति, ते अत्र प्रक्षिप्यन्ते, आगतमश्लेषानक्षत्रमतिक्रम्य मघानक्षत्रस्य त्रिष्वहोरात्रेषु गतेषु चतुर्थस्य चाहोरात्रस्य सार्द्धेषु च सप्तविंशतिषु मुहूर्त्तेषु गतेषु प्रथमो व्यतिपातो गत इति, तथा यदि द्वासप्ततिसंख्यैर्व्यतिपातैः पंच सूर्यनक्षत्रपर्याया लभ्यन्ते ततः पंचभिर्व्यतिपातैः किं लभ्यं ? इति, राशित्रयस्थापना ७२-५-५, अत्रान्त्येन राशिना मध्यराशेर्गुणनं, जाता पंचविंशतिः २५, तस्या आद्येन राशिना भागहरणं, सा च स्तोकत्वाद् भागं न प्रयच्छति ततो नक्षत्रानयनार्थमनामष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागैर्गुणयिष्याम इति छेदराशिगुणकारराश्योः षट्केनापवर्त्तना, जातो गुणकारराशिस्त्रीणि शतानि पंचोत्तराणि ३०५, छेदराशिर्द्वा-

दशप्रमाणः १२, गुणकारराशिना च पंचविंशतेर्गुणने जातानि षट्सप्ततिः शतानि पंचविंशत्यधिकानि ७६२५, छेदराशिनाऽपि च द्वादशलक्षणेन सप्तषष्टिर्गुण्यते, जातान्यष्टौ शतानि चतुरुत्तराणि ८०४, पुष्यस्य च सप्तषष्टिभागाश्चतुश्चत्वारिंशत्, सा द्वादशभिर्गुण्यते, जातानि पंच शतानि अष्टाविंशत्यधिकानि, तानि पूर्वराशेः शोध्यन्ते, स्थितानि पश्चात् सप्ततिशतानि सप्तनवत्यधिकानि ७०९७, तेषामष्टभिः शतैश्चतुरुत्तरैर्भागहरणं, लब्धान्यष्टौ नक्षत्राणि, शेषाणि तिष्ठन्ति षट् शतानि पंचषष्ट्यधिकानि ६६५, एतानि नक्षत्रभागं न प्रयच्छन्ति ततः सप्तषष्टिभागानयनार्थं छेदराशिर्मूल एव द्वादशप्रमाणः परं पंचभिः सप्तषष्टिभागैरहोरात्रा लभ्यन्त इति पंचभिर्गुण्यते, जाता षष्टिस्तया भागो ह्रियते लब्धा एकादशाहोरात्राः, शेषास्तिष्ठन्ति पंच, ते मुहूर्त्तानयनार्थं त्रिंशता गुण्यन्ते, जातं सार्द्धशतं, तस्य षष्ट्या भागे हृते लब्धौ द्वौ सार्द्धौ मुहूर्त्तौ, यानि च पूर्वलब्धान्यष्टौ नक्षत्राणि तान्यश्लेषादीनि विशाखापर्यन्तानि द्रष्टव्यानि, तत आगतमनुराधानक्षत्रप्रविष्टस्य सूर्यस्य एकादशसु दिवसेषु गतेषु द्वादशस्य च दिवसस्य द्वयोः सार्द्धयोर्मुहूर्त्तयोर्गतयोः पंचमो व्यतिपातो गत इति, एवं सर्वेष्वपि व्यतिपातेषु सूर्यनक्षत्राणि परिभावनीयानि ॥ सम्प्रति लग्नपरिज्ञानार्थमुपक्रम्यते-यदि द्वासप्ततिसंख्यैर्व्यतिपातैरष्टादश शतानि पंचत्रिंशदधिकानि लग्नपर्यायाणां लभ्यन्ते ततः प्रथमे व्यतिपाते किं लभ्यते ? राशित्रयस्थापना ७२-१८३५-१, अत्रान्त्येन राशिना मध्यराशिर्गुण्यते, स च तावानेव भवति, तत आद्येन राशिना द्वासप्ततिलक्षणेन भागहरणं, लब्धाः पंचविंशतिः लग्नपर्यायाः, शेषास्तिष्ठन्ति पंचत्रिंशत्, एतां नक्षत्रानयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागैर्गुणयिष्याम इति छेदराशिगुणकारराश्योः षट्केनापवर्त्तना, ततो जातश्छेदराशिर्द्वादशकरूपो गुणकारराशिस्त्रीणि शतानि पंचोत्तराणि ३०५, तेन पंचत्रिंशद् गुण्यते, जातानि दश सहस्राणि षट् शतानि पंचसप्तत्यधिकानि १०६७५, छेदराशिर्द्वादशकलक्षणः ॥२०५॥

सप्तषष्ट्या गुण्यते, जातान्यष्टौ शतानि चतुरुत्तराणि ८०४, अस्य राशेश्च प्राक्तनैः पंचभिः शतैरष्टाविंशत्यधिकैः पुष्यः शुद्धः, स्थितानि पश्चाद्दश सहस्राणि शतमेकं सप्तचत्वारिंशदधिकं १०१४७, तेषामष्टभिः शतैश्चतुरुत्तरैर्भागहरणं, लब्धा द्वादश १२, शेषाणि तिष्ठन्ति चत्वारि शतानि नवनवत्यधिकानि४९९, द्वादशभिश्चाश्लेषादीनि पूर्वाषाढापर्यन्तानि नक्षत्राणि शुद्धानि, परं ज्येष्ठानक्षत्रमर्द्धक्षेत्रमिति तच्चतुर्भिः शतैर्द्व्युत्तरैः शुद्ध्यति, शेषाणि चत्वारि शतानि द्व्युत्तराणि तिष्ठन्ति, तान्युद्धरितराशौ प्रक्षिप्यन्ते, जातानि नव शतान्येकोत्तराणि ९०१, आगतमुत्तराषाढानक्षत्रस्य लग्नप्रवर्त्तकस्य चतुरुत्तराष्टशतभागानां नवसु शतेष्वेकोत्तरेषु गतेषु मकरलग्ने प्रथमो व्यतिपातोऽभवदिति। तथा यदि द्वासप्ततिसंख्यैर्व्यतिपातैरष्टादश शतानि पंचत्रिंशदधिकानि लग्नपर्यायाणां भवन्ति ततः पंचाभिर्व्यतिपातैः किं भवति ?, राशित्रयस्थापना ७२-१८३५-५ अत्रान्त्येन राशिना मध्यराशेर्गुणनं, जातान्येकनवतिशतानि पंचसप्तत्यधिकानि ९१७५, तेषामाद्येन राशिना द्वासप्ततिलक्षणेन भागो ह्रियते, लब्धं सप्तविंशत्यधिकं लग्नपर्यायाणां शतं, शेषास्तिष्ठन्त्येकत्रिंशत् तां नक्षत्रानयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागैर्गुणयिष्याम इति गुणकारच्छेदराश्योः षट्केनापवर्त्तना, तत्र जातो गुणकारराशिस्त्रीणि शतानि पंचोत्तराणि ३०५, छेदराशिर्द्वादश, गुणकारराशिना चैकत्रिंशद् गुण्यते, जातानि चतुर्नवतिशतानि पंचपंचाशदधिकानि ९४५५, एतेभ्यश्च पंचभिः शतैरष्टाविंशत्यधिकैः पुष्यः शुद्धः, स्थितानि पश्चान्नवाशीतिशतानि सप्तविंशत्यधिकानि ८९२७, छेदराशिना च द्वादशकलक्षणेन सप्तषष्टिर्गुण्यते, जातान्यष्टौ शतानि चतुरुत्तराणि, तैर्भागो ह्रियते, लब्धा एकादश, पश्चात्तिष्ठन्ति त्र्यशीतिः, एकादशभिश्चाश्लेषादिषु मूलपर्यन्तानि शुद्धानि, नवरं ज्येष्ठानक्षत्रमर्धक्षेत्रमिति चतुर्भिः शतैर्द्व्युत्तरैः शुद्धमिति चत्वारि शतानि द्व्युत्तराणि शेषाणि तिष्ठन्ति, तान्यंशराशौ प्रक्षिप्यन्ते जातानि चत्वारि शतानि पंचा-

शीत्यधिकानि ४८५, तत आगतमश्वेषादिषु मूलपर्यंतेष्वेकादशसु नक्षत्रेषु गतेषु पूर्वाषाढानक्षत्रस्य चतुरुत्तराष्टशतभागानां चतुर्षु षष्टेषु पंचाशीत्यधिकेषु गतेषु धनलग्ने पंचमो व्यतिपातो गत इति, एवं सर्वेष्वपि व्यतिपातेषु लग्नानि परिभावनीयानि ॥२९२-३॥

इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां व्यतिपातप्रतिपादकं षोडशं प्राभृतं समाप्तम् ॥

तदेवमुक्तं षोडशं प्राभृतं, सम्प्रति तापक्षेत्रपरिमाणप्रतिपादकं सप्तदशं प्राभृतं विवक्षुराह—

अट्ठसु सएसु सूरा चन्दा असिएसु अट्ठसु सएसु (धीसई तारा)। तारा उवरिं हिट्ठा समा य चंदस्स नायव्वा॥२९४॥

समादवनितलादूर्ध्वमष्टसु योजनशतेष्वतिक्रान्तेषु सूर्याश्चारं चरन्ति, चन्द्राः समादवनितलादूर्ध्वमष्टसु योजनशतेषु 'अशीतेषु' अशीत्यधिकेषु गतेषु चारं चरन्ति, एतदुक्तं भवति-सूर्यादूर्ध्वमशीतियोजनेषु चन्द्रो वर्त्तत इति,तस्मादपि चन्द्रमण्डलादुपरि विंशति-योजनेषु गतेषु सर्वोपरितन्यस्तारकाश्चारं चरंति, सूर्यस्यापि चाधस्ताद्दशयोजनेषु सर्वाधस्तन्यस्ताराः परिभ्रमन्ति, एवं च दशोत्तरं योजनशतं ज्योतिश्चक्रस्य बाहल्यं, तस्मिंश्चैवंप्रमाणे ज्योतिश्चक्रस्य बाहल्ये चन्द्रसूर्याणामधस्तादुपरि समाश्च सर्वत्र ताराश्चारं चरन्तीति ॥ २९४ ॥ तदेवमुक्तं ज्योतिश्चक्रस्य स्वरूपमधुना जम्बूद्वीपे द्वावपि सूर्यौ प्रत्येकं यावत्प्रमाणं क्षेत्रं प्रकाशयतः तावत्प्र-माणं निरूपयति—

छच्चेव उ दसभागे जंबुद्दीवस्स दोवि दिवसयरा। तावंति दित्तलेसा अब्भिंतरमण्डले सन्ता ॥ २९५ ॥

द्वावपि दिवसकरौ दीप्तलेश्याकौ सर्वाभ्यन्तरमण्डले व्यवस्थितौ सन्तौ षड् दशभागान् जम्बूद्वीपस्य प्रकाशयतः, किमुक्तं भवति ?-

एकैकस्त्रीन् त्रीन् दशभागान् प्रकाशयतीति, इयमत्र भावना-इदं जम्बूद्वीपक्षेत्रचक्रवालं दशधा परिकल्प्यते, तद्यथा-त्रयो भागा मन्दरस्य दक्षिणभागे त्रय उत्तरभागे च, द्वौ भागौ पूर्वतो द्वौ चापरतः, तत्र भरतक्षेत्रगसूर्यः सर्वाभ्यन्तरे मण्डले यदोपसंक्रम्य चारं चरति तदा त्रीन् भागान् दाक्षिणात्यान् (प्रकाशयति एरवतगः) त्रीन् भागानौत्तराहानैरावतक्षेत्रमग्रतो द्वौ भागौ पूर्वतो रजनी द्वौ चापरतोऽपि, यथा यथा क्रमेण दाक्षिणात्य औत्तराहो वा पुरतः संचरति तथा तथा तयोः प्रत्येकं तापक्षेत्रमग्रतो वर्द्धते पृष्ठतश्च हानिमुपगच्छति, एवं च क्रमेण संचरणशीले तापक्षेत्रे यदैकः सूर्यः पूर्वस्यां द्वितीयोऽपरस्यां वर्त्तते तदा पूर्वपश्चिमादिशोः प्रत्येकं त्रीन् त्रीन् भागान् तापक्षेत्रं, द्वौ द्वौ च भागौ दक्षिणोत्तरयोः प्रत्येकं रजनीति। अथ भागः किंपरिमाणः?, उच्यते, मुहूर्त्तषट्काक्रमणीयप्रमाणः, तथाहि-पूर्वस्मिन्नपि मण्डले वर्त्तमाने सूर्ये दिवसोऽष्टादशमुहूर्त्तप्रमाणस्ततस्तस्मिन् मण्डले नवभिर्मुहूर्त्तैर्यावदाक्रमणीयं क्षेत्रं तावति स्थितश्चक्षुःस्पर्शमधिगच्छति, तत एतावत्प्रमाणं सूर्यात् अर्वाक् तापक्षेत्रमेतावत्प्रमाणं च परतोऽपि, तथा च सति सर्वसंख्ययाऽष्टादशमुहूर्त्ताक्रमणीयप्रमाणमेकस्य सूर्यस्य तापक्षेत्रं, तच्च किल जम्बूद्वीपचक्रवालदशभागत्रिभागात्मकमत आगतं षण्मुहूर्त्ताक्रमणीयप्रमाणक्षेत्रमेकस्य भागस्य परिमाणम्, एतच्च तापक्षेत्रभागस्य परिमाणमवस्थितं, केवलं तापक्षेत्रमूर्ध्वमुखीकृतकलम्बुकापुष्पाकारमन्तः संकुचितं बहिर्विस्तृतमतः सर्वाभ्यन्तरान्मण्डलाभिष्क्रामन् सूर्यो यथा यथाऽग्रतने मण्डले संचरति तथा २ जम्बूद्वीपगतस्य तापक्षेत्रस्य परिहानिः, सा च प्रतिमण्डलं षष्ट्यधिकषट्त्रिंशत्शतसत्कभागद्वयस्य, ततः सर्वबाह्यमण्डलगतयोश्चन्द्रसूर्ययोः प्रत्येकं जम्बूद्वीपे तापक्षेत्रपरिमाणं द्वौ द्वौ भागौ भवतस्तथा चाह—

चत्तारि य दस भागे जंबुद्दीवस्स दोवि दिवसयरा। तावंति मंडले सव्वबाहिरे मंडले संता ॥ २९९ ॥

द्वावपि 'दिवसकरौ' सूर्यौ मन्दरलेश्याकौ सर्वबाह्ये मंडले व्यवस्थितौ सन्तौ जंबूद्वीपस्य चतुरो दशभागान् प्रकाशयतः, एकैको द्वौ द्वौ दशभागौ प्रकाशयतीति भावः, तत्र यदा सूर्य एको दक्षिणभागे अपर उत्तरभागे च प्रत्येकं द्वौ द्वौ दशभागौ तापक्षेत्रं प्रकाशयतः तदा पूर्वभागे पश्चिमभागे च प्रत्येकं त्रीन् त्रीन् भागान् रजनी, क्रमेण संचरन्तौ च तौ यदैकः पूर्वदिशि द्वितीयोऽपरदिशि तदा प्रत्येकं पूर्वस्यामपरस्यां च दिशि द्वौ द्वौ दशभागौ तापक्षेत्रं, दक्षिणभागे उत्तरभागे च प्रत्येकं त्रीन् त्रीन् दशभागान् रजनी ॥ २१६ ॥ इह तापक्षेत्रमन्तः संकुचितं बहिर्विस्तृतमतः सर्वाभ्यंतरमण्डलगते सूर्ये यावत्प्रमाणं तापक्षेत्रं भवति यथासंस्थानं च तत्प्रतिपिपादयिषुराह—

मेरुस्स मज्झयारे जाव य लवणस्स रुंदछब्भागो । तावायामो एसो सगडुद्धीसंठिओ नियमा ॥ २१७ ॥

'मेरोः' मंदरस्य 'मध्यकारे' मध्यभागे यः स देशस्तस्मादारभ्य यावल्लवणस्य-लवणसमुद्रस्य रुंदताया-विस्तीर्णत्वस्य षड्भागः, एतावत्प्रमाणस्तापक्षेत्रस्यायामः, एष च तापो नियमात् 'शकटोद्धिसंस्थितः' शकटोद्धिसंस्थानः, अतः सङ्कुचितो बहिर्विस्तृत इति भावः, इयमत्र भावना-जंबूद्वीपस्यार्द्धं पञ्चाशत् योजनसहस्राणि लवणस्य षष्ठे भागे च त्रयस्त्रिंशद्योजनसहस्राणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि एकश्च त्रिभागो योजनस्य, एतच्चैकत्र मिलितं सत् यत् सञ्जातमेवं प्रमाणं-त्र्यशीतिर्योजनसहस्राणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि ८३३३३ एकस्य योजनस्य त्रिभागः $\frac{1}{3}$, एतावत्प्रमाणः सर्वाभ्यन्तरे मण्डले वर्त्तमाने सूर्ये तापक्षेत्रस्यायामः, इह यदि मंदरेण सूर्यस्य प्रकाशो न प्रतिस्खल्यते ततः पंचाशत् योजनसहस्राणि जम्बूद्वीपार्द्धगतानि सूर्यः

प्रकाशयतीति परिभाव्य मूलटीकाकृता त्र्यशीतियोजनसहस्राणीत्युक्तमतोऽस्माभिरपि तथैवोक्तं, यावता पुनर्जम्बूद्वीपार्द्धे मन्दरादर्वाक् पञ्चचत्वारिंशदेव योजनसहस्राणि सूर्यस्य प्रकाश्यानि, तत एतावदेव तापक्षेत्रस्यायामपरिमाणमष्टासप्ततियोजनसहस्राणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि एकश्च योजनस्य त्रिभागः ७८३३३ ⅓ तथा चोक्तं सूर्यप्रज्ञप्तौ— " तीसे णं तावखेत्तेणं केवइयं आयामेणं आहियत्ति वएज्जा ?, ता अट्ठत्तरि जोयणसहस्साइं तिण्णि य तेत्तीसे जोयणसए जोयणतिभागे च आयामेणं आहएत्ति वएज्जा " इति, स चैतावत्प्रमाणस्तापक्षेत्रस्यायामः सदैवावस्थितः, केवलं निष्क्रामति सूर्ये लवणाभिमुखमभिसर्पति परि(अप)वर्द्धते प्रविशति सूर्ये मेरुमाभिमुखमभिसर्पति वर्धते ॥ २९७ ॥ तत्र प्रविशति सूर्ये यावत्प्रमाणः परिवर्द्धते तापक्षेत्रस्यायामो यावत्प्रमाणश्च निष्क्रामति सूर्ये हानिमुपगच्छति तावत्प्रमाणं प्रतिपिपादयिषुराह—

छत्तीसे भागसए सट्ठे काऊण जंबूदीवस्स । तिरियं तत्तो दो दो भागे वड्ढइ व झायइ वा ॥ २९८ ॥

'जंबूदीवस्स' जंबूद्वीपार्द्धस्य षट्त्रिंशद् भागशतानि षष्ट्याऽधिकानि कृत्वा-बुद्धया परिकल्प्य, इत्थं परिकल्पनायां किं निबंधनमिति चेद्, उच्यते, इहैकैकं मण्डलं द्वाभ्यां सूर्याभ्यामेकेनाहोरात्रेण परिसमाप्यते, अहोरात्रश्च त्रिंशन्मुहूर्त्तप्रमाणः, प्रतिसूर्यमहोरात्रगणने द्वावहोरात्रौ भवतः, द्वयोश्चाहोरात्रयोः षष्टिर्मुहूर्त्ताः, ततो जंबूद्वीपचक्रवालं प्रथमतः षष्ट्या विभज्यते, प्रतिदिवसं च निष्क्रामति सूर्ये द्वौ मुहूर्त्तैकषष्टिभागौ हीयेते प्रविशति च परिवर्द्धेते, तत एकैकस्य चक्रवालगतस्य षष्टिभागस्य एकषष्टिभागाः क्रियन्ते, ततो भवन्ति षष्ट्यधिकानि षट्त्रिंशद्भागशतानि ३६६६, तानि बुध्ध्या परिकल्प्य ततस्तिर्यक् सर्वबाह्यान्मण्डलादभ्यन्तरं

प्रविशन् प्रतिदिवसं द्वौ द्वौ भागौ तापक्षेत्रस्य वर्द्धयति, सर्वाभ्यन्तराच्च मण्डलाद्विनिष्क्रामन् द्वौ द्वौ भागौ हापयति ॥ २९८ ॥
सम्प्रति सर्वाभ्यन्तरे मण्डले वर्त्तमाने सूर्ये कियान् मन्दरपर्वतपर्यन्ते तापक्षेत्रविष्कम्भः ? इति निरूपणार्थमाह-

मंदरपरिरयरासी तिगुणे दसभाइयंमि जं लद्धं । तं हवइ तावखित्तं अब्भिंतरमंडलगयस्स ॥ २९९ ॥

यदा सूर्यः सर्वाभ्यन्तरमण्डलगतो भवति तदा तस्य मन्दरपर्वतसमीपे 'तापक्षेत्रं' तापक्षेत्रविष्कम्भो मन्दरपरिरयराशौ 'तिगुणे'त्ति त्रिभिर्गुणिते दशभिर्भाजिते सति यद् भवति भागलब्धं तावत्प्रमाणः, तत्र मन्दरविष्कम्भो दश सहस्राणि १०,०००, तेषां वर्गो दश कोटयः १००००००००, ततो दशभिर्गुणने जातं कोटिशतम् १०००००००००, एतस्य वर्गमूलानयने लब्धान्येकत्रिंशद् योजनसहस्राणि षट् शतानि त्रयोविंशत्यधिकानि ३१६२३, एष राशिस्त्रिभिर्गुण्यते, जातानि चतुर्नवतिसहस्राण्यष्टौ शतान्येकोनसप्तत्यधिकानि ९४८६९, एतेषां दशभिर्भागे हृते लब्धानि नव योजनसहस्राणि चत्वारि शतानि षडशीत्यधिकानि नव च दशभागा योजनस्य ९४८६ $\frac{9}{10}$, एतावान् सर्वाभ्यन्तरमण्डलगते सूर्ये तापक्षेत्रविष्कम्भः, तदानीं च लवणदिशि जम्बूद्वीपपर्यन्ते तापक्षेत्रविष्कम्भश्चतुर्नवतियोजनसहस्राण्यष्टौ शतान्यष्टषष्ट्यधिकानि चत्वारि दशभागा योजनस्य ९४८६८ $\frac{4}{10}$ एतस्य चोत्पत्तिर्जम्बूद्वीपस्य परिधौ त्रिगुणिते दशभिर्भाजिते द्रष्टव्या, तथाहि-जम्बूद्वीपस्य परिधिस्त्रीणि शतसहस्राणि षोडश शतानि द्वे शते सप्तविंशत्यधिके ३१६२२७ त्रीणि गव्यूतान्यष्टाविंशत्यधिकं धनुःशतं त्रयोदशाङ्गुलानि एकमर्द्धाङ्गुलम्, एतावता च योजनमेकं किल किञ्चिन्न्यूनमिति व्यवहारतः परिपूर्णं विवक्ष्यते, ततो द्वे शते अष्टाविंशत्यधिके वेदितव्ये ३१६२२८, एतत् त्रिगुणितं

मेरोः पार्श्वे तापक्षेत्र मानं

॥२११॥

क्रियते, जातानि नव लक्षाणि अष्टचत्वारिंशत्सहस्राणि षट् शतानि चतुरशीत्यधिकानि ९४८६८४, एतेषां दशभिर्भागे हृते लब्धानि चतुर्नवतियोजनसहस्राण्यष्टौ शतान्यष्टषष्ठ्यधिकानि चत्वारश्च दशभागा योजनस्य, तथा चोक्तं सूर्यप्रज्ञप्तौ—"जया णं सव्वब्भंतरं मण्डलं उवसंकमित्ता चारं चरइ तया णं उद्धीमुहकलंबुआपुप्फसंठिआ तावखित्तसंठिती आहियत्ति वएज्जा, अंतो संकुडा बाहिं वित्थडा, अंतो वट्टा बाहिं पिहुला, अंतो अंकमुहसंठिया, बाहिं सत्थिमुहसंठिया, उभयोपासेणं तीसे दुवे बाहाओ अवट्ठियाओ भवंति, तंजहा–पणयालीसं २ जोयणसहस्साइं आयामेणं, दुवे णं तीसे बाहाओ अणवट्ठियाओ भवंति, तंजहा—सव्वब्भंतरिया चेव बाहा, सव्वबाहिरिया चेव बाहा, तीसे णं सव्वब्भंतरिया बाहा मंदरपव्वयंतेणं नवजोयणसहस्सा चत्तारि य छलसीए जोयणसए नव य दसभागे जोयणस्स परिक्खेवेणं आहियत्ति वएज्जा, तीसे णं परिक्खेवविसेसे कत्तो आहियत्ति वएज्जा?, ता जे णं मंदरस्स पव्वयस्स परिक्खेवे तं परिक्खेवं तिहिं गुणित्ता दसहिं छित्ता दसहिं भागेहिं हीरमाणे एस णं परिक्खेवविसेसे आहियत्ति वएज्जा, तीसे णं सव्वबाहिरिया बाहा लवणसमुद्दंतेणं चउणउई जोयणसहस्साइं अट्ठ य अट्ठसट्ठजोयणसए चत्तारि य दसभागे जोयणस्स परिक्खेवेणं आहियत्ति वएज्जा, एस णं परिक्खेवविसेसे कओ आहियत्ति वएज्जा ?, ता जे णं जंबुद्दीवस्स परिक्खेवे तं परिक्खेवं तिहिं गुणित्ता दसहिं छेत्ता दसहिं भागे हीरमाणे एस णं परिक्खेवविसेसे आहियत्ति वएज्जा" इति । इदं च सूत्रं सकलमपि सुगमं, नवरम् 'उभयोपासेणं तीसे दुवे बाहाओ अवट्ठियाओ' इति एका सूर्यस्याग्रतोऽपरा पृष्ठत इति ॥ २९९ ॥

सम्प्रति सर्वबाह्यमण्डलगते सूर्ये यावान् मन्दरपर्वतसमीपे तापक्षेत्रविष्कम्भस्तावत्प्रमाणमभिधित्सुराह—

मंदरपरिरयरासी तिगुणे दस भाइयंमि जं लद्धं । तं हवइ तावखित्तं बाहिरए मंडले रविणो ॥ ३०० ॥

सर्वबाह्ये मण्डले वर्त्तमानस्य 'रवेः' सूर्यस्य मन्दरपर्वतसमीपे तापक्षेत्रं मन्दरपरिरयराशौ 'द्विगुणे' द्विगुणीकृते दशभिर्भाजिते यद् भवति भागलब्धं तावत्प्रमाणं 'तापक्षेत्रं' तापक्षेत्रविष्कम्भः तत्र मन्दरपरिरयराशिरेकत्रिंशद् योजनसहस्राणि षट् शतानि त्रयोविंशत्यधिकानि ३१६२३, एष राशिर्द्विगुण्यते, जातानि त्रिषष्टिः सहस्राणि द्वे शते षट्चत्वारिंशदधिके ६३२४६, तेषां दशभिर्भागे हृते लब्धानि षट् सहस्राणि त्रीणि शतानि चतुर्विंशत्यधिकानि ६३२४ षट् च दशभागा योजनस्य ६।१०, एतावान् सर्वबाह्यमण्डले वर्त्तमाने रवौ मन्दरपर्वतसमीपे तापक्षेत्रस्य विष्कम्भः, तदानीं च लवणदिशि जम्बूद्वीपपर्यन्ते तापक्षेत्रविष्कम्भस्त्रिषष्टियोजनसहस्राणि द्वे शते पञ्चचत्वारिंशदधिके ६३२४५ षट् च दशभागा योजनस्य ६।१० कथमेतस्योत्पत्तिः? इति चेद्, उच्यते, इह जम्बूद्वीपपरिधिः प्रागुक्तप्रमाणः ३१६२२८ द्वाभ्यां गुण्यते, गुणयित्वा च दशभिर्भागो ह्रियते, ततो यथोक्तं तापक्षेत्रविष्कम्भपरिमाणं भवति, उक्तंच-"ता जया णं सूरिए सव्वबाहिरं मंडलं उवसंकमित्ता चारं चरइ तया णं किंसंठिया तावखित्तसंठिती आहियत्ति वएज्जा ?, ता उद्धीमुहकलंबुयापुप्फसंठाणसंठिया तावखित्तसंठिई जाव बाहिरिया चेव बाहा, तीसे णं सव्वब्भंतरिया बाहा मंदरपव्वयंतेणं छज्जोयणसहस्साइं तिण्णि य चउवीसे जोयणसए छच्च दसभागे जोयणस्स परिक्खेवेणं आहियत्ति वएज्जा, तीसे णं परिक्खेवविसेसे कओ आहियत्ति वएज्जा ?, ता जे णं मंदरस्स पव्वयस्स परिक्खेवे तं परिक्खेवं दोहिं गुणेत्ता सेसं तहेव, तीसे णं सव्वबाहिरिया लवणसमुद्दंतेणं तेवट्ठि जोयणसहस्साइं दोण्णि य पणयाले जोयणसए छच्च दसभागे जोयणस्स य परिक्खेवेणं आहियत्ति वएज्जा, तीसे णं परिक्खेवविसेसे कओ आहिएत्ति वएज्जा ?, ता जे णं जंबूदीवस्स परिक्खेवे तं परिक्खेवं दोहिं गुणेत्ता दसहिं छेत्ता दसहिं भागे हीरमाणे एस णं परिक्खेवविसेसे आहियत्ति वएज्जा"॥ २०० तदेवमुक्तं सर्वाभ्यन्तरे

सर्वबाह्ये च मण्डले वर्त्तमाने सूर्ये मन्दरपर्वतसमीपे तापक्षेत्रविष्कम्भपरिमाणं, सम्प्रति कियत्प्रमाणं सामान्येन सर्वाभ्यन्तरमण्डले वर्त्तमाने सूर्ये तापक्षेत्रविष्कम्भः ? इति निरूपयति—

**आइमसंडलपरिही तिगुणे दसभाइयंमि जं लद्धं । तं हवइ तावखेत्तं बाहिरगे मंडले रविणो ॥ ३०१ ॥**

आइमे-सर्वाभ्यन्तरे मण्डले यः परिधिः-परिघः परिमाणं स त्रिभिर्गुण्यते, ततो दशभिर्भागे हृते सति यद् भवति भागलब्धं तावत्प्रमाणं सर्वाभ्यन्तरे मण्डले वर्त्तमाने सूर्ये तापक्षेत्रविष्कम्भः, तत्र सर्वाभ्यन्तरमण्डलपरिरयराशिस्त्रीणि योजनशतसहस्राणि पञ्चदश सहस्राणि नवाशीत्यधिकानि ३१५०८९, एष राशिस्त्रिभिर्गुण्यते, जातानि नव शतसहस्राणि पञ्चचत्वारिंशत्सहस्राणि द्वे शते सप्तषष्ट्यधिके ९४५२६७, तेषां दशभिर्भागे हृते लब्धानि चतुर्णवतिः सहस्राणि षड्विंशत्यधिकानि पञ्च शतानि सप्त च दशभागा योजनस्य, एतावान् सर्वाभ्यन्तरे मण्डले वर्त्तमाने सूर्ये तापक्षेत्रस्य विष्कम्भः, कथमेतदवसीयते? इति चेदुच्यते, इहैकोऽपि सूर्यः सर्वाभ्यन्तरमण्डलगतः स्वयं मण्डलपरिरयगतान् त्रीन् भागान् प्रकाशयति, अपरोऽपि त्रीन्, तेषां चापान्तराले द्वौ द्वौ भागौ रजनी, एकस्य च सर्वाभ्यन्तरमण्डलगतसूर्यमंडलपरिरयस्य परिमाणमेकत्रिंशद् योजनसहस्राणि पञ्च शतान्यष्टोत्तराणि ३१५०८ नव दशभागा योजनस्य ९।१०, तत एतत् त्रिगुणितं सद् यथोदितपरिमाणं भवति, एतावांश्च तापक्षेत्रविष्कम्भः सदैवावस्थितः, केवलमन्तः सङ्कुचितो बहिर्विस्तृतो, द्वितीयादिषु च मण्डलेषु यथोत्तरं परिरयपरिवृद्धिस्ततस्तन्मण्डलपरिरयगतास्तापक्षेत्ररूपास्त्रयो दशभागा हीना हीनतराः प्राप्यन्ते यावत्सर्वबाह्ये मण्डले द्वावेव परिरयगतौ दशभागौ तापक्षेत्रमिति ॥३०१॥ तथा चाह—

बाहिरपरिरयरासी बिगुणे दसभाइयंमि जं लद्धं । तं होइ तावखेत्तं बाहिरए मंडले रविणो ॥ २०२ ॥

सर्वबाह्ये मण्डले यः परिधिः राशिः स द्वाभ्यां गुण्यते, गुणयित्वा च दशभिर्भागो ह्रियते, ततो यद् भवति भागलब्धं तावत्प्रमाणः सर्वबाह्ये मण्डले वर्त्तमाने सूर्ये तापक्षेत्रविष्कम्भः, तत्र सर्वबाह्यमण्डलपरिरयराशिस्त्रीणि योजनशतसहस्राणि अष्टादश सहस्राणि त्रीणि योजनशतानि पंचदशाधिकानि ३१८३१५, एष द्वाभ्यां गुण्यते, जातानि षट् शतसहस्राणि षट्त्रिंशत्सहस्राणि षट् शतानि त्रिंशदधिकानि ६३६६३०, अस्य च दशभिर्भागे हृते लब्धानि त्रिषष्टिसहस्राणि षट् शतानि त्रिषष्ट्यधिकानि ६३६६३, एतावान् सर्वबाह्ये मण्डले तापक्षेत्रविष्कम्भः ॥२०२॥ अथ तापक्षेत्रविष्कम्भं मण्डले मण्डले करणवशातः प्रतिपिपादयिषुराह—

सूरस्स मुहुत्तगई दिवसस्सऽद्धेण होइ अब्भत्था । तत्तियमित्ता ( दिट्ठी बिगुणं दिवसप्पमाणं तु ) ॥२०३॥

इह दिवसो यावन्मात्रो भवति तावत्प्रमाणे क्षेत्रे व्यवस्थिते तस्मिन् मण्डले सूर्यो दृश्यते-दृष्टिपथप्राप्तो भवति, यथा सर्वाभ्यन्तरे मण्डले वर्त्तमानस्य सूर्यस्य मुहूर्त्तगतिर्द्विपंचाशद्योजनशतानि एकपंचाशदधिकानि एकोनत्रिंशच्च षष्टिभागा योजनस्य ५२५१-२९।६० सर्वाभ्यन्तरे च मण्डले वर्त्तमाने सूर्ये दिवसः अष्टादशमुहूर्त्तप्रमाणः ततस्तेषामर्द्धे लब्धा नव मुहूर्त्तास्तैरनन्तरोक्ता मुहूर्त्तगतिर्गुण्यते, जातानि सप्तचत्वारिंशत्सहस्राणि द्वे शते त्रिषष्ट्यधिके योजनानामेकविंशतिश्च षष्टिभागा योजनस्य, एतावति क्षेत्रे व्यवस्थितः सर्वाभ्यन्तरे मण्डले सूर्यश्चक्षुःस्पर्शमुपैति, एवं द्वितीयादिष्वपि मण्डलेषु चक्षुःस्पर्शगोचरतापरिमाणं तावदध्येतव्यं यावत्सर्वबाह्यमण्डलं, तस्मिंश्च सर्वबाह्ये मण्डले मुहूर्त्तगतिः पंच योजनसहस्राणि त्रीणि शतानि पंचोत्तराणि पंचदश च षष्टिभागा

योजनस्य ५३०५-१५।६० तदानीं च दिवसो द्वादशमुहूर्त्तप्रमाणस्तेषामर्द्धेन षड् मुहूर्त्तास्तैरनन्तरोक्ता मुहूर्त्तगतिर्गुण्यते, जातान्येकत्रिंशत्सहस्राण्यष्टौ शतान्येकत्रिंशदधिकानि त्रिंशच्च षष्टिभागा योजनस्य ३१८३१-३०।६०, एतावति क्षेत्रे व्यवस्थितः सर्वबाह्ये मण्डले सूर्यः चक्षुःस्पर्शमाधिगच्छतीति ॥ ३०३ ॥

सा चेव मुहुत्तगई गुणिया दिवसेण होइ पुण्णेण । सो आयवविक्खंभो तहिं तहिं मण्डले रविणो ॥ ३०४ ॥

'सैव' अनन्तरोक्ता मण्डलमण्डलमुहूर्त्तगतिः 'पूर्णेन दिवसेन' दिवसगतमुहूर्त्तराशिना गुणिता सती यावत्प्रमाणा भवति तावत्प्रमाणस्तत्र तत्र मण्डले 'रवेः' सूर्यस्य तापक्षेत्रस्य विष्कम्भः, तथा (हि-) सर्वाभ्यन्तरे मण्डले मुहूर्त्तगतिः पंच योजनसहस्राणि द्वे शते एकपंचाशदधिके एकोनत्रिंशच्च षष्टिभागा योजनस्य ५२५१-२९।६० सर्वाभ्यन्तरे च मण्डले दिवसोऽष्टादशमुहूर्त्तप्रमाणस्ततोऽष्टादशभिरनन्तरोक्ता मुहूर्त्तगतिर्गुण्यते, जातानि चतुर्नवतिसहस्राणि पंच शतानि षड्विंशत्यधिकानि द्विचत्वारिंशच्च द्वाषष्टिभागा योजनस्य ९४५२६-४२।६२, एतावान् सर्वाभ्यन्तरे मण्डले तापक्षेत्रविष्कम्भः, एवं द्वितीयादिष्वपि मण्डलेषु तापक्षेत्रविष्कम्भपरिमाणमुक्तप्रकारेण तावत्परिभावनीयं यावत्सर्वबाह्यमण्डलं, तस्मिंश्च सर्वबाह्ये मण्डले मुहूर्त्तगतिः पंच योजनसहस्राणि त्रीणि शतानि पंचोत्तराणि पंचदश षष्टिभागा योजनस्य ५३०५-१५।६०, तदानीं च दिवसो द्वादशमुहूर्त्तप्रमाणस्तत इयमनन्तरोक्ता मुहूर्त्तगतिर्द्वादशभिर्गुण्यते, जातानि त्रिषष्टियोजनसहस्राणि षट् शतानि त्रिषष्ट्यधिकानि ६३६६३, एतावत्प्रमाणं सर्वबाह्ये मण्डले तापक्षेत्रविष्कम्भपरिमाणमिति ॥३०४॥

इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां तापक्षेत्रप्रमाणप्रतिपादकं सप्तदशं प्राभृतं समाप्तम् ॥

अयने वृद्ध्यप-वृद्ध्योर्मानं

तदेवमुक्तं सप्तदशं प्राभृतं, साम्प्रतं दिवसवृद्ध्यपवृद्धिप्रतिपादकमष्टादशं प्राभृतं विवक्षुरिदमाह-

**बारस धुवा मुहुत्ता दिवसे रत्तीवि होइ बारसिगा । छच्च उ चरा मुहुत्ता अयंति रत्तिं च दिवसं च ॥३०५॥**

दिवसे ध्रुवा मुहूर्त्ता द्वादश, किमुक्तं भवति ?- सर्वजघन्योऽपि दिवसो द्वादशमुहूर्त्तो भवति, न तु कदाचनापि द्वादशभ्यो हीनमुहूर्त्तप्रमाण इति, रात्रिरपि भवति सर्वजघन्या द्वादशमुहूर्त्तप्रमाणा, रात्रावपि ध्रुवा द्वादश मुहूर्त्ता इति भावः, षट् च मुहूर्त्ताश्चरा-अध्रुवाः, ते हि दिवसाद्विनिर्गत्य रात्रिमायान्ति, रात्रेर्वा विनिर्गत्य दिवसमिति, इयमत्र भावना-सर्वजघन्यो द्वादशमुहूर्त्तो दिवसो भूत्वा तदनन्तरं प्रतिदिवसं मुहूर्त्तैकषष्टिभागद्वयवृद्ध्या तावद्वर्द्धते यावदष्टादशमुहूर्त्तप्रमाणो भवति, यदा च दिवसो द्वादशमुहूर्त्तप्रमाणस्तदा रात्रिरष्टादशमुहूर्त्तप्रमाणा, ततस्तदनन्तरं प्रतिदिवसं मुहूर्त्तैकषष्टिभागद्वयहान्या तावद्धानिमुपैति यावदष्टादशमुहूर्त्तप्रमाणो दिवसो भवति तदा द्वादशमुहूर्त्तप्रमाणा रात्रिः, ततस्तदनन्तरं साऽपि प्रतिदिवसं मुहूर्त्तैकषष्टिभागद्वयवृद्ध्या तावद्वर्द्धते यावदष्टादशमुहूर्त्तप्रमाणा भवति रात्रिः, यस्माद्दिवसादारभ्य रात्रिर्मुहूर्त्तैकषष्टिभागद्वयवृद्ध्या वर्द्धते तस्माद्दिवसादारभ्य दिवसो मुहूर्त्तैकषष्टिभागद्वयहान्या हानिमुपगच्छति, स च तावद् यदाऽष्टादशमुहूर्त्तप्रमाणा रात्रिस्तदा द्वादशमुहूर्त्तप्रमाणो दिवसः, तत एवं षण्मुहूर्त्ताश्चराः, दिवसाद्विनिर्गत्य रात्रिमायान्ति रात्रेर्वा विनिर्गत्य दिवसमायान्तीति ॥ ३०५ ॥ अथ कस्मिन्नयने दिवसाद्विनिर्गत्य षण्मुहूर्त्ता रात्रिमायान्ति ? कस्मिन् वाऽयने रात्रेर्विनिर्गत्य दिवसमिति प्रश्नावकाशमाशंक्याह-

**रत्तिं अयंति अयणंमि दक्खिणा उत्तरे दिणमयंति । एवं तु अहोरत्तो तीसमुहुत्तो हवइ सव्वो ॥ ३०६ ॥**

दक्षिणेऽयने षण्मुहूर्त्ता रात्रिमायान्ति, तथाहि-सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रमणे दक्षिणमयनं, सर्वाभ्यन्तरे च मण्डले वर्त्तमाने सूर्ये सर्वोत्कृष्टो दिवसोऽष्टादशमुहूर्त्तप्रमाणः सर्वजघन्या च द्वादशमुहूर्त्तप्रमाणा रात्रिः, ततस्तदनन्तरेषु द्वितीयादिषु मण्डलेषु प्रतिदिवसं मुहूर्त्तैकषष्टिभागद्वयवृध्ध्या रात्रिर्वर्द्धते मुहूर्त्तैकषष्टिभागद्वयहान्या दिवसो हीयते, तत एवं दक्षिणेऽयने क्रमेण दिवसाद्विनिर्गत्य रात्रिं षण्मुहूर्त्ता अयन्ते, तथोत्तरस्मिन्नयने षण्मुहूर्त्ता रात्रेर्विनिर्गत्य दिवसमायान्ति, यतः सर्वबाह्यान्मण्डलादभ्यन्तरप्रवेश उत्तरायणं, सर्वबाह्ये रात्रिरष्टादशमुहूर्त्तप्रमाणा, तत्र मण्डले दिवसो द्वादशमुहूर्त्तप्रमाणः, ततोऽभ्यन्तरप्रवेशे द्वितीयादिषु मण्डलेषु क्रमेण प्रतिदिवसं मुहूर्त्तैकषष्टिभागद्वयहान्या हानिमुपगच्छति यावत् सर्वाभ्यन्तरे मण्डले दिवसोऽष्टादशमुहूर्त्तप्रमाणो रात्रिर्द्वादशमुहूर्त्तप्रमाणा, तत एवमुत्तरस्मिन्नयने षण्मुहूर्त्ताः क्रमेण रात्रेर्विनिर्गत्य दिवसमभिगच्छंतीति । 'एवं तु' इत्यादि, यतः प्रतिदिवसं मुहूर्त्तैकषष्टिभागद्वयं दिवसाद्विनिर्गत्य रात्रिमायाति रात्रेर्वा विनिर्गत्य दिवसं ततः 'एवम्' उक्तेन प्रकारेण सर्वोऽप्यहोरात्रो भवति त्रिंशन्मुहूर्त्तप्रमाणः, तथाहि-सर्वाभ्यन्तरे मण्डले दिवसोऽष्टादशमुहूर्त्तप्रमाणः रात्रिर्द्वादशमुहूर्त्तप्रमाणा, सर्वाभ्यन्तरानन्तरे द्वितीये मण्डले दिवसो मुहूर्त्तैकषष्टिभागद्वयहीनः अष्टादशमुहूर्त्तः मुहूर्त्तैकषष्टिभागद्वयाधिका द्वादशमुहूर्त्तप्रमाणा रात्रिः, तृतीये मण्डले दिवसो मुहूर्त्तैकषष्टिभागचतुष्टयहीनाष्टादशमुहूर्त्तप्रमाणो मुहूर्त्तैकषष्टिभागचतुष्टयाधिकद्वादशमुहूर्त्तप्रमाणा रात्रिः, एवं तावद् वाच्यं यावत्सर्वबाह्ये मण्डले द्वादशमुहूर्त्तप्रमाणो दिवसोऽष्टादशमुहूर्त्तप्रमाणा रात्रिः, ततः सर्वत्रापि मण्डलेऽहोरात्रः परिभाव्यमानस्त्रिंशन्मुहूर्त्तप्रमाण इति ॥ ३०६ ॥

सम्प्रति प्रतिदिवसमुक्तस्वरूपां वृद्धिं हानिं वा दिवसरात्र्योः करणवशतः प्रतिपादयन्नाह-

**तेसीएण सएणं छण्हं भागे चरमुहुत्ताणं । जं लद्धं सा वुड्ढी छेओ व दिणस्स विन्नेओ ॥ ३०७ ॥**

श्री ज्योति॰ मलयगिरीयायां दिवसवृद्धय॰ दिभागाः



सूर्यमासे दिनरात्रि-वृद्धिहानी

षण्णां षण्मुहूर्त्तानां त्र्यशीत्यधिकेन शतेन भागे ह्रियते यत् लब्धं सा उत्तरायणे प्रतिदिवसं दिवसस्य वृद्धिर्ज्ञातव्या, यदिवा दक्षिणायने ॥ दिवसस्य छेदो ज्ञातव्यः, एतच्चोपलक्षणं तेन यद्भागलब्धं सा दक्षिणेऽयने रात्रेर्वृद्धिर्यदिवा उत्तरायणे स छेद इति करणगाथाक्षरार्थः, भावना त्वियं-यदि त्र्यशीत्यधिकेन दिवसशतेन षण्मुहूर्त्ता वृद्धौ प्राप्तास्तत एकस्मिन् दिवसे का वृद्धिः ?, राशित्रयस्थापना-१८३-६-१, अत्रान्त्येन राशिना एककलक्षणेन मध्यराशिः षट्करूपो गुण्यते, जाताः षडेव, तेषां त्र्यशीत्यधिकेन शतेन भागो ह्रियते, ते च स्तोकत्वात् भागं न प्रयच्छन्तीति तत एकषष्टिभागकरणार्थमेकषष्ट्या गुण्यन्ते, जातानि त्रीणि शतानि षट्षष्ट्यधिकानि ३६६, तेषां भागे हृते लब्धौ द्वौ मुहूर्त्तैकषष्टिभागौ, एतावती उत्तरायणे प्रतिदिवसं दिवसस्य वृद्धिः, यदिवा प्रतिदिवसमेतावती दक्षिणायने दिवसस्य हानिः, तथा यदि त्र्यशीत्यधिकेन शतेन षण्मुहूर्त्ता रात्रौ वृद्धौ प्राप्तास्तत एकस्मिन् दिने का रात्रेर्वृद्धिः, अत्रापि पूर्ववत् राशित्रयस्थापना गुणनं भागहारविधिश्च, ततो लब्धौ द्वौ मुहूर्त्तैकषष्टिभागौ, एतावती दक्षिणायने प्रतिदिवसं रजन्या वृद्धिः यदिवा एतावती उत्तरायणे प्रतिदिवसं रजन्याः हानिः ॥ ३०७ ॥ सम्प्रति सूर्यमासपर्यन्ते कियती वृद्धिर्हानिर्वा ? इति निरूपयति—

आइच्चेण उ मासेण वड्ढए हायए य तह चेव । एक्को चेव मुहुत्तो पविसंते निक्खमंते य ॥ ३०८ ॥

सर्वबाह्यान्मण्डलादभ्यन्तरं प्रविशति यदिवा सर्वाभ्यन्तरान्मण्डलाद्बहिर्निष्क्रामति सूर्ये आदित्येन मासेन-सूर्यसत्केन मासेन सार्द्धत्रिंशद्दिवसप्रमाणेन यथाक्रमं वर्द्धते हीयते चैको मुहूर्त्तः, तथाहि-यदि त्र्यशीत्यधिकेन दिवसशतेन षण्मुहूर्त्ता वृद्धौ हानौ वाऽप्यन्ते तत आदि-

त्यमासेन सार्द्धत्रिंशद्दिवसप्रमाणेन का हानिर्वृद्धिर्वा? इति, राशित्रयस्थापना १८३-६-३०-½ अत्रान्त्यो राशिः समस्तदिवसार्द्धकरणार्थं द्वाभ्यां गुण्यते, जाता एकषष्टिः, तया मध्यराशिः षट्करूपो गुण्यते, जातानि त्रीणि शतानि षट्षष्ट्यधिकानि ३६६, ततश्छेदराशिरपि त्र्यशीत्यधिकशतप्रमाणो द्वाभ्यां गुण्यते, जातानि त्रीणि शतानि षट्षष्ट्यधिकानि ३६६, तैर्भागे हृते लब्ध एको मुहूर्त्तः, एतावती सूर्यमासातिक्रमे उत्तरायणे दिवसविषया वृद्धिः दक्षिणायने रात्रिविषया वृद्धिः, उत्तरायणे रात्रिविषया हानिर्दक्षिणायने दिवसविषया हानिः ॥२०८॥ सम्प्रति सर्वाभ्यन्तरे सर्वबाह्ये च मण्डले दिवसप्रमाणं रात्रिप्रमाणं च साक्षादुपदर्शयति—

अब्भिंतरंमि उ गए आइच्चे हवइ बारस मुहुत्ता । रयणी अह दिवसो पुण अट्ठारसओ मुणेयव्वो ॥ ३०९ ॥
बाहिरओ निक्खंते आइच्चे हवइ बारसमुहुत्तो । दिवसो अह रत्ती उण होइ उ अट्ठारसमुहुत्ता ॥ ३१० ॥

अभ्यन्तरे मण्डले 'गते' स्थिते सूर्ये 'रजनी' रात्रिर्द्वादशमुहूर्त्तप्रमाणा भवति, दिवसः पुनः 'अष्टादशकः' अष्टादशमुहूर्त्तप्रमाणः, तथा बहिर्निष्क्रान्ते सर्वबाह्ये मण्डले गते सूर्ये दिवसो द्वादशमुहूर्त्तो भवति, रात्रिः पुनरष्टादशमुहूर्त्ता ॥३०९-१०॥ तदेवमुक्तं सर्वाभ्यन्तरे सर्वबाह्ये च मण्डले दिवसरात्रिपरिमाणं, सम्प्रति युगमध्ये विवक्षितेऽयने विवक्षिते दिवसे दिवसरात्रिपरिमाणज्ञापनार्थं करणमाह—

पव्वं पन्नरसगुणं तिहिसंखित्तं बिसाट्ठिभागूणं । तेसियसएण भइए जं सेसं तं वियाणेहि ॥ ३११ ॥
तं विगुणमेव सट्ठीएँ भाइयं जं भवे तहिं लद्धं । तं दक्खिणम्मि अयणे दिवसा सोहे खिवे रत्तिं ॥ ३१२ ॥
तं चेयऽयणे उत्तरंमि दिवसंमि होइ पक्खेवो । रत्तीओ वोसट्ठं जाणसु राइंदियपमाणं ॥ ३१३ ॥

युगमध्ये विवक्षितादिनात् प्राग् यत् पर्व-पर्वसंख्यानमतिक्रान्तं तत्पंचदशगुणं क्रियते, ततः पर्वणामुपरि यास्तिथयो विवक्षितादिनात्पूर्वमतिक्रान्तास्तास्तत्र प्रक्षिप्यन्ते, ततो द्वाषष्टिभागोनमिति प्रतिदिवसमेकैकद्वाषष्टिभागहान्या ये जाता अवमरात्रास्ते अप्युपचाराद् द्वाषष्टिभागा इत्युच्यन्ते तैरूनं सत् पर्वसंख्यानं त्र्यशीत्यधिकेन शतेन(भजेत्)भागे च हृतेऽहृते वा यच्छेषमवतिष्ठते तत्सम्यग् जानीहि, सम्यग्धारणाविषयं च कृत्वा तद् द्विगुणं विधेयं, तत एकषष्ट्या भागे हृते सति यद् भवति भागलब्धं तद्दक्षिणेऽयने दिवसात् शोधयेत्, रात्रौ च प्रक्षिपेत्, तदेव भागलब्धमुत्तरस्मिन्नयने रात्रेरपनयेत् दिवसे च प्रक्षिपेत्, तत एवमीप्सितेऽहोरात्रे यथोदितं दिवसरात्रिपरिमाणं जानीहि ॥ एवं करणगाथाक्षरार्थः, भावना त्वियं-युगस्यादावष्टसु पर्वस्वतिक्रान्तेषु तृतीयायां केनापि पृष्टं-यथा किंप्रमाणमद्य दिनं किंप्रमाणा वा रात्रिः ? इति, तत्र पर्वसङ्ख्या अष्टौ ते स्थाप्यन्ते, स्थापयित्वा च पञ्चदशभिर्गुण्यन्ते, जातं विंशत्युत्तरं शतम् १२०, अष्टानां च पर्वणामुपरि तृतीयायां पृष्टमिति त्रयः प्रक्षिप्यन्ते, जातं त्रयोविंशत्यधिकं शतम् १२३, अष्टसु पर्वस्वेकोऽवमरात्र इत्येकः शोध्यते, जातं पश्चाद् द्वाविंशं शतं १२२, तस्य त्र्यशीत्यधिकेन शतेन भागो ह्रियते, तच्चाल्पत्वाद् भागं न प्रयच्छति, ततस्तद् द्वाभ्यां गुण्यते, जाते द्वे शते चतुश्चत्वारिंशदधिके२४४, तयोरेकषष्ट्या भागे हृते लब्धाश्चत्वारः,तदानीं च दक्षिणमयनं प्रवर्त्तते ततश्चतुरो मुहूर्त्तान् सर्वाभ्यन्तरमण्डलगतदिवसपरिमाणादष्टादशमुहूर्त्तरूपादपनीय मण्डलगतरात्रिपरिमाणे द्वादशमुहूर्त्तरूपे प्रक्षिपेत्, तत आगतं-तदानीं चतुर्दशमुहूर्त्तप्रमाणो दिवसः षोडशमुहूर्त्तपरिमाणा रात्रिरिति । तथा युगस्यादौ षोडशपर्वातिक्रमे षष्ठ्यां केनापि पृष्टं, यथा-किंप्रमाणोऽद्य दिवसः किंप्रमाणा वा रात्रिः ? इति, तत्र षोडश स्थाप्यन्ते, तानि पञ्चदशभिर्गुण्यन्ते, जाते द्वे शते चत्वारिंशदधिके २४०, षोडशपर्वणामुपरि षष्ठ्यां पृष्टमिति षट् प्रक्षिप्यन्ते, जाते द्वे शते षट्चत्वारिं-

शदधिके २४६, षोडशपर्वमध्ये चावमरात्रद्वयमतिक्रान्तमिति द्वे रूपे शोध्येते, स्थिते पश्चाद् द्वे शते चतुश्चत्वारिंशदधिके २४४, तयोस्त्र्यशीत्यधिकेन शतेन भागहरणं, लब्ध एकः, एतेन दक्षिणमयनं लब्धं, शेषा तिष्ठत्येकषष्टिः ६१, सा द्वाभ्यां गुण्यते, जातं द्वाविंशं शतं १२२, तस्यैकषष्ट्या भागे हृते लब्धौ द्वौ मुहूर्तौ, तदानीं च दक्षिणायनमतिक्रान्तमुत्तरायणं वर्तते, ततः सर्वबाह्यमण्डलगतरात्रिपरिमाणादष्टादशमुहूर्त्तरूपात्तौ द्वौ मुहूर्त्तावपनीय सर्वबाह्यमण्डलगतदिवसपरिमाणे द्वादशमुहूर्त्तरूपे प्रक्षिप्येते, तत आगतं-चतुर्दशमुहूर्त्तप्रमाणो दिवसः षोडशमुहूर्त्तप्रमाणा रात्रिः, एवं सर्वत्र भावनीयम् ॥ ३११-३१३ ॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां दिवसवृद्धयपवृद्धिप्रतिपादकमष्टादशं प्राभृतं ॥

तदेवमुक्तमष्टादशं प्राभृतं, साम्प्रतममावास्यापूर्णमासीचन्द्रनक्षत्रयोगप्रतिपादकमेकोनविंशतितमं प्राभृतं वक्तव्यं, तत्र युगे द्वाषष्टिरमावास्या द्वाषष्टिः पौर्णमास्यः, तत्र कस्मिन्नक्षत्रे काऽमावस्या ? इत्यमावस्याविषयं करणमाह—

नाउमिह अमावासं जइ इच्छसि कम्मि होइ रिक्खंमि? । अवहारं ठावेज्जा तत्तियरूवेहिं संगुणए ॥३१४॥

याममावास्यामिह युगे ज्ञातुमिच्छसि यथा कस्मिन्नक्षत्रे वर्त्तमाना परिसमाप्ता भवति ? इति, तावद्रूपैः, यावत्योऽमावास्या अतिक्रान्तास्तावत्या संख्यया इत्यर्थः, वक्ष्यमाणस्वरूपमवधार्यते-प्रथमतया स्थाप्यते इत्यवधार्यो-ध्रुवराशिस्तमवधार्यराशिं तस्यां पट्टिकादौ स्थापयित्वा संगुणयेत् ॥ ३१४ ॥ अथ किंप्रमाणोऽसाववधार्यराशिः ? इति तत्प्रमाणनिरूपणार्थमाह—

छावट्ठी य मुहुत्ता बिसट्ठिभागा य पंच पडिपुण्णा । बावट्ठिभाग सत्तट्ठिगो य एक्को भवइ भागो ॥ ३१५ ॥

षट्षष्टिर्मुहूर्त्ताः, एकस्य च मुहूर्त्तस्य पञ्च परिपूर्णा द्वाषष्टिभागाः एकस्य द्वाषष्टिभागस्यैकः सप्तषष्टितमो भाग इत्येतावत्प्रमाणोऽवधार्यराशिः, कथमेतावत्प्रमाणस्योत्पत्तिः ? इति चेद्, उच्यते, इह यदि चतुर्विंशत्यधिकेन पर्वशतेन पञ्च सूर्यनक्षत्रपर्याया लभ्यन्ते ततो द्वाभ्यां पर्वभ्यां किं लभामहे ?, राशित्रयस्थापना १२४-५-२, अत्रान्त्येन राशिना द्विकलक्षणेन मध्यो राशिः पञ्चकलक्षणो गुण्यते, जाता दश, तेषां चतुर्विंशत्यधिकेन शतेन भागहरणं, तत्र छेद्यच्छेदकराश्योर्द्विकेनापवर्त्तना क्रियते, जात उपरितनश्छेद्यो राशिः पञ्चकरूपोऽधस्तनो द्वाषष्टिरूपो, लब्धाः पञ्च द्वाषष्टिभागाः, एतेन नक्षत्राणि कर्त्तव्यानीति नक्षत्रकरणार्थमष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागरूपैर्गुण्यन्ते, जातान्येकनवतिशतानि पञ्चाशदधिकानि ९१५०, छेदराशिरपि द्वाषष्टिप्रमाणः सप्तषष्ट्या गुण्यते, जातान्येकचत्वारिंशच्छतानि चतुष्पञ्चाशदधिकानि ४१५४, उपरितनो राशिर्मुहूर्त्तानयनाय भूयस्त्रिंशता गुण्यते, जाते द्वे लक्षे चतुःसप्ततिसहस्राणि पञ्च शतानि २७४५००, तेषां चतुष्पञ्चाशदधिकैकचत्वारिंशच्छतैर्भागहरणं, लब्धाः षट्षष्टिर्मुहूर्त्ताः ६६, शेषा अंशास्तिष्ठन्ति त्रीणि शतानि षट्त्रिंशदधिकानि ३३६, ततो द्वाषष्टिभागानयनार्थं तानि द्वाषष्ट्या गुण्यन्ते, जातानि विंशतिः सहस्राण्यष्टौ शतानि द्वात्रिंशदधिकानि २०८३२, तेषामनन्तरोक्तच्छेदराशिना ४१५४ भागो ह्रियते, लब्धाः पञ्च द्वाषष्टिभागाः ५।६२, शेषास्तिष्ठन्ति द्वाषष्टिस्ततस्तस्या द्वाषष्ट्या अपवर्त्तना क्रियते, जात एककः, छेदराशेरपि द्वाषष्ट्या अपवर्त्तनायां जाता सप्तषष्टिस्तत आगतं षट्षष्टिः मुहूर्त्ताः एकस्य च मुहूर्त्तस्य पञ्च द्वाषष्टिभागाः एकस्य च द्वाषष्टिभागस्यैकः सप्तषष्टिभाग इति ॥ ३१५ ॥ तदेवमुक्तमवधार्यराशिप्रमाणं, सम्प्रति शेषविधिमाह—

एयमवहाररासिं इच्छामावाससंगुणं कुज्जा । नक्खत्ताणं एत्तो सोहणगविहिं निसामेह ॥ ३१६ ॥

॥२२३॥

श्री ज्योति-मलयगिरी-यायां प्रा १९ अमावस्या पौर्णमासी-योगे ।।२२४।।

'एतम्' अनन्तरोदितस्वरूपमवधार्यराशिमिच्छाऽमावास्यासंगुणं-याममावास्यां ज्ञातुमिच्छसि तत्सङ्ख्यया गुणितं कुर्यात्, अत ऊर्ध्वं च नक्षत्राणि शोधनीयानि ततोऽत्त ऊर्ध्वं नक्षत्राणां 'शोधनकविधिं' शोधनकप्रकारं वक्ष्यमाणं 'निशामयत' आकर्णयत ॥३१६॥ तत्र प्रथमतः पुनर्वसुशोधनकमाह–

बावीसं च मुहुत्ता छायालीसं बिसट्ठिभागा य । एयं पुणव्वसुस्स य सोहेयव्वं हवइ पुण्णं ॥ ३१७ ॥

बावत्तरं सयं फग्गुणीण बाणउय बे विसाहासुं । चत्तारि य बायाला सोज्झा अह उत्तरासाढा ॥३१८॥

एयं पुणव्वसुस्स य बिसट्ठिभागसहियं तु सोहणगं । एत्तो अभीइआई बिइयं वोच्छामि सोहणगं ॥३१९॥

अभिइस्स नव मुहुत्ता बिसट्ठिभागा य होंति चउवीसं । छावट्ठी य समत्ता भागा सत्तट्ठिछेयकया ॥३२०॥

इगुणट्ठं पोट्ठवया तिसु चेव नवोत्तरेसु रोहिणिया । तिसु नवनउइएसु भवे पुणव्वसूफग्गुणीओ य ॥३२१॥

पञ्चेव उगुणवन्नं सयाइं उगुणत्तराइं छच्चेव । सोज्झाणि विसाहासुं मूले सत्तेव चोयाला ॥ ३२२ ॥

अट्ठसय उगुणवीसा सोहणगं उत्तराणऽसाढाणं । चउवीसं खलु भागा छावट्ठी चुण्णियाओ य ॥ ३२३ ॥

द्वाविंशतिर्मुहूर्त्ताः एकस्य च मुहूर्त्तस्य षट्चत्वारिंशद् द्वाषष्टिभागाः 'एतत्' एतावत्प्रमाणं पुनर्वसुनक्षत्रस्य परिपूर्णं भवति शोद्धव्यं, कथमेवंप्रमाणस्य शोधनकस्योत्पत्तिः ? इति चेद्, उच्यते, इह यदि चतुर्विंशत्यधिकेन पर्वशतेन पञ्च सूर्यनक्षत्रपर्याया लभ्यन्ते तत एकं पर्वातिक्रम्य कति पर्याया एकेन पर्वणा लभ्यन्ते?, राशित्रयस्थापना१२४-५-१, अत्रान्त्येन राशिना एककलक्षणेन ॥२२४॥

इष्टामावास्याज्ञाने नक्षत्र शोधनकानि

मध्यराशिः पञ्चकरूपो गुण्यते, जाताः पञ्चैव, एकेन गुणितं तदेव भवतीति वचनात्, तेषां चतुर्विंशत्यधिकेन शतेन भागो ह्रियते, लब्धाः पञ्च चतुर्विंशत्यधिकशतभागाः, ततो नक्षत्रानयनार्थमेतेऽष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागरूपैर्गुणयितव्या इति गुणकारराशिच्छेदराश्योर्द्विकेनापवर्त्तना, जातो गुणकारराशिर्नव शतानि पञ्चदशोत्तराणि ९१५, छेदराशिर्द्वाषष्टिः, तत्र पञ्च नवभिः शतैः पञ्चदशोत्तरैर्गुण्यन्ते, जातानि पञ्चचत्वारिंशच्छतानि पञ्चसप्तत्यधिकानि ४५७५, छेदराशिर्द्वाषष्टिलक्षणः सप्तषष्ट्या गुण्यते, जातान्येकचत्वारिंशत् शतानि चतुष्पञ्चाशदधिकानि ४१५४, तथा पुष्यस्य ये त्रयोविंशतिभागाः प्राक्तनयुगचरमपर्वणि सूर्येण सह योगमायान्ति ते द्वाषष्ट्या गुण्यन्ते, जातानि चतुर्दश शतानि षड्विंशत्यधिकानि १४२६, तानि प्राक्तनात्पञ्चसप्तत्यधिकपञ्चचत्वारिंशच्छतप्रमाणात् शोध्यन्ते, शेषं तिष्ठति-एकत्रिंशत् शतानि एकोनपंचाशदधिकानि ३१४९, तत एतानि मुहूर्त्तानयनार्थं त्रिंशता गुण्यन्ते, जातानि चतुर्नवतिसहस्राणि चत्वारि शतानि सप्तत्यधिकानि ९४४७०, तेषां छेदराशिना चतुष्पञ्चाशदधिकैकचत्वारिंशच्छतरूपेण भागो ह्रियते, लब्धा द्वाविंशतिर्मुहूर्त्ताः, शेषं तिष्ठति त्रीणि सहस्राणि द्व्यशीत्यधिकानि ३०८२, एतानि द्वाषष्टिभागानयनार्थं द्वाषष्ट्या गुण्यन्ते, जातमेकं लक्षमेकनवतिः सहस्राणि चतुरशीत्यधिकानि १९१०८४, तेषां छेदराशिना ४१५४ भागो ह्रियते, लब्धाः षट्चत्वारिंशन्मुहूर्त्तस्य द्वाषष्टिभागाः ॥ २१७ ॥ एषा पुनर्वसुनक्षत्रशोधनकनिष्पत्तिः, अथ शेषनक्षत्राणां शोधनकान्याह–द्वासप्तं-द्विसप्तत्यधिकं शतं 'फाल्गुनीनाम्' उत्तरफाल्गुनीनां शोध्यं, किमुक्तं भवति?-द्विसप्तत्यधिकेन शतेन पुनर्वसुप्रभृतीनि उत्तराफाल्गुनीपर्यन्तानि नक्षत्राणि शुध्यन्ति, एवमुत्तरत्रापि भावार्थो भावनीयः, तथा 'विशाखासु' विशाखापर्यन्तेषु नक्षत्रेषु शोधनकं द्वे शते द्विनवत्यधिके २९२, 'अथ' अनन्तरम् 'उत्तरापाढा' उत्तरापाढापर्यन्तानि नक्षत्राण्यधिकृत्य शोध्यानि चत्वारि

शतानि द्विचत्वारिंशदधिकानि ४४२॥३१८॥ 'एतत्' अनन्तरोक्तं शोधनकं सकलमपि पुनर्वसुसत्कद्वाषष्टिभाग(सहित)मवसेयम्, एतदुक्तं भवति-ये पुनर्वसुसत्का द्वाविंशतिमुहूर्त्तास्ते सर्वेऽप्युत्तरस्मिन् उत्तरस्मिन् शोधनकेऽन्तः प्रविष्टा वर्त्तन्ते, न तु शुद्धा द्वाषष्टिभागाः, ततो यद्यच्छोधनकं शोध्यं तत्र तत्र पुनर्वसुसत्काः षट्चत्वारिंशद् द्वाषष्टिभागा उपरितनाः शोधनीया इति, एतच्च पुनर्वसुप्रभृत्युत्तराषाढापर्यन्तं प्रथमं शोधनकम्, अत ऊर्ध्वमभिजितमादिं कृत्वा द्वितीयं शोधनकं वक्ष्यामि ॥३१९॥ तत्र प्रतिज्ञातमेव निर्वाहयति-अभिजितो नक्षत्रस्य शोधनकं नव मुहूर्त्ताः एकस्य च मुहूर्त्तस्य सत्काश्चतुर्विंशतिर्द्वाषष्टिभागाः एकस्य च द्वाषष्टिभागस्य सप्तषष्टिच्छेदकृताः परिपूर्णाः षट्षष्टिभागाः, तथा 'एकोनषष्टम्' एकोनषष्ट्यधिकं शतं 'प्रौष्ठपदानाम्' उत्तरभाद्रपदानां शोधनकं, किमुक्तं भवति ?-एकोनषष्ट्यधिकेन शतेनाभिजिदादीनि उत्तरभाद्रपदापर्यन्तानि नक्षत्राणि शुध्यन्ति, एवमुत्तरत्रापि भावनीयं, तथा त्रिषु नवोत्तरेषु 'रोहिणिका' रोहिणीपर्यन्तानि शुध्यन्ति, तथा त्रिषु 'नवनवतेषु' नवनवत्यधिकेषु शतेषु शोधितेषु 'पुनर्वसु' पुनर्वसुपर्यन्तं नक्षत्रजातं शुध्यति, तथैकोनपंचाशदधिकानि पंच शतानि प्राप्य फाल्गुन्यः-उत्तरफाल्गुनीपर्यन्तानि नक्षत्राणि शुध्यन्ति, 'विशाखासु' विशाखापर्यन्तेषु नक्षत्रेष्वेकोनसप्तत्यधिकानि षट् शतानि ६६९ शोध्यानि, मूलपर्यन्ते नक्षत्रजाते सप्त शतानि चतुश्चत्वारिंशदधिकानि ७४४ शोध्यानि, 'उत्तराषाढानाम्' उत्तराषाढापर्यन्तानां नक्षत्राणां शोधनकमष्टौ शतान्येकोनविंशत्यधिकानि ८१९, सर्वेष्वपि च शोधनकेषु उपर्यभिजितो नक्षत्रस्य सम्बन्धिनो मुहूर्त्तस्य द्वाषष्टिभागाश्चतुर्विंशतिः षट्षष्टिश्च चूर्णिकाभागाः एकस्य द्वाषष्टिभागस्य सप्तषष्टिभागाः शोधनीयाः ॥ ३२०-३ ॥

एयाइं सोहइत्ता जं सेसं तं हवेज्ज नक्खत्तं । एत्थं करेइ उडुवइ सूरेण समं अमावासं ॥ ३२४ ॥

जाता द्विसप्ततिर्द्वाषष्टिभागास्तेभ्यः षट्चत्वारिंशत् शुद्धाः, स्थिताः पश्चात् षड्विंशतिः, नवोत्तरमुहूर्त्तशताच्च त्रिंशन्मुहूर्त्तैः पुष्यः शुद्धः, स्थिता पश्चादेकोनाशीतिः, ततोऽपि पंचदशभिर्मुहूर्त्तैरश्लेषा शुद्धा, स्थिताः पश्चाच्चतुष्षष्टिः, ततोऽपि त्रिंशता मघा शुद्धा, स्थिता चतुस्त्रिंशत्, ततोऽपि त्रिंशता पूर्वफाल्गुनी शुद्धा, स्थिताः पश्चाच्चत्वारः, उत्तराफाल्गुनीनक्षत्रं च द्व्यर्द्धक्षेत्रमिति पंचचत्वारिंशन्मुहूर्त्तप्रमाणं, तत इदमागतम्-उत्तराफाल्गुनीनक्षत्रस्य चत्वारिंशति मुहूर्त्तेषु पंचत्रिंशति च मुहूर्त्तस्य द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्य सप्तषष्टिधाछिन्नस्य पंचषष्टौ भागेषु शेषेषु द्वितीयाऽमावास्या समाप्तिं याति, तथा चोक्तं सूर्यप्रज्ञप्तावेव-"ता एएसि णं पंचण्हं संवच्छराणं दोच्चं अमावासं चंदे केणं नक्खत्तेणं जोएइ ?, ता उत्तराहिं फग्गुणीहिं, उत्तराणं फग्गुणीणं चत्तालीसं मुहुत्ता पणतीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणट्ठी चुण्णियाभागा सेसा" इति। पंचम्याममावास्यायां जिज्ञासितायां स एव प्रागुक्तोऽवधार्यराशिः पंचभिर्गुण्यते, जातानि त्रीणि शतानि त्रिंशदधिकानि मुहूर्त्तानां पंचविंशतिर्द्वाषष्टिभागाः पंच च द्वाषष्टिसप्तषष्टिभागाः, तत्र द्वाभ्यां शताभ्यां पंच(द्वि)नवत्यधिकाभ्यां पुष्यादीनि विशाखापर्यन्तानि शुद्धानि, स्थिताः पश्चादष्टात्रिंशन्मुहूर्त्ताः ३८, तेभ्यस्त्रिंशताऽनुराधा शुद्धा, स्थिताः पश्चादष्टौ, तेभ्य एको मुहूर्त्तो गृहीत्वा द्वाषष्टिभागीकृतस्ते द्वाषष्टिरपि भागा द्वाषष्टिभागराशौ पंचविंशतिलक्षणे प्रक्षिप्यन्ते, जाताः सप्ताशीतिर्द्वाषष्टिभागास्तेभ्यः षट्चत्वारिंशत् शुद्धाः, स्थिताः पश्चादेकचत्वारिंशत् ४१, आगतं ज्येष्ठानक्षत्रस्य सप्त मुहूर्त्तान् एकस्य च मुहूर्त्तस्यैकचत्वारिंशतं द्वाषष्टिभागान् एकस्य च द्वाषष्टिभागस्य पंच सप्तषष्टिभागान् भुक्त्वा पंचमी अमावास्या समाप्तिमुपगच्छतीति। तथा दशम्याममावास्यायां स एव प्राक्तनोऽवधार्यराशिर्दशभिर्गुण्यते, जातानि मुहूर्त्तानां षट् शतानि षष्ट्यधिकानि ६६० पंचाशद् द्वाषष्टिभागाः५०।६२ दश च द्वाष-

ष्टिसप्तषष्टिभागाः १०/६२, अत्र चतुर्भिर्मुहूर्त्तशतैर्द्वाचत्वारिंशदधिकैः पुष्यादीन्युत्तराषाढान्तानि नक्षत्राणि शुद्धानि, स्थिते पश्चाद् द्वे शते अष्टादशोत्तरे २१८, पंचाशतश्च द्वाषष्टिभागेभ्यः षट्चत्वारिंशत् शुद्धा, स्थिताः पश्चाच्चत्वारो द्वाषष्टिभागाः, इत ऊर्ध्वं द्वितीयं शोधनकं शोध्यते-द्वाभ्यां शताभ्यामष्टादशोत्तराभ्यामेकोनषष्ट्याधिकेन शतेनाभिजिदादीन्युत्तराभाद्रपदापर्यन्तानि शुद्धानि, शेषा तिष्ठत्येकोनषष्टिः ५९, इतस्त्रिंशता रेवती शुद्धा, स्थिता पश्चादेकोनत्रिंशत्, चतुर्भ्यश्च द्वाषष्टिभागेभ्योऽभिजित् शोधनकं न शुद्ध्यति तत एकोनत्रिंशत एको मुहूर्त्तो गृहीत्वा द्वाषष्टिभागीक्रियते, ते च द्वाषष्टिरपि भागा द्वाषष्टिभागराशौ प्रक्षिप्यन्ते, जाताः षट्षष्टिर्द्वाषष्टिभागाः, तेभ्यश्चतुर्विंशतिर्द्वाषष्टिभागाः शुद्धाः, स्थिताः पश्चाद् द्वाचत्वारिंशत्४२, तेभ्य एकं रूपं गृहीत्वा सप्तषष्टिभागीक्रियते, ते च सप्तषष्टिरपि भागाः सप्तषष्टिभागराशौ दशकरूपे प्रक्षिप्यन्ते, जाता सप्तसप्ततिः, तेभ्यः षट्षष्टिः शुद्धा, स्थिताः पश्चादेकादश, आगतमश्विनीनक्षत्रस्याष्टाविंशतिं मुहूर्त्तान् एकस्य च मुहूर्त्तस्यैकचत्वारिंशतं द्वाषष्टिभागान् एकस्य च द्वाषष्टिभागस्यैकादश सप्तषष्टिभागान् भुक्त्वा दशमी अमावास्या समाप्तिमुपसर्पतीति, एवं सर्वास्वपि युगमध्यभाविनीष्वमावास्यासु चन्द्रनक्षत्रयोगः परिभावनीयः ॥ २२४ ॥ सम्प्रति पौर्णमासीविषयं चन्द्रयोगपरिज्ञानार्थं करणमाह—

इच्छापुण्णिमगुणिओ अवहारो सोत्थ होइ कायव्वो । तं चेव य सोहणगं अभिईआइं तु कायव्वं ॥ २२५ ॥
सुद्धंमि य सोहणगे जं सेसं तं हवेज्ज नक्खत्तं । तत्थ य करेइ उडुवइ पडिपुण्णो पुण्णिमं विमलं ॥ २२६ ॥

यः पूर्वममावास्यायां चन्द्रनक्षत्रपरिज्ञानार्थमवधार्यराशिरुक्तः स एवात्रापि-पौर्णमासीचन्द्रनक्षत्रपरिज्ञानविधौ ईप्सितपौर्ण-

श्री ज्योतिष्करण्डके मलयगिरीयायां मा १२ अमावस्या पौर्णमासीयोग ॥२३०॥

इष्टपूर्णिमा ज्ञान करण भावना

मासीं ज्ञातुमिच्छसि तत्संख्यया गुणितः कर्त्तव्यः, गुणिते च सति 'तदेव' पूर्वोक्तं शोधनकं कर्त्तव्यं, केवलमभिजिदादिकं, नतु पुनर्वसुप्रभृतिकं, शुद्धे च शोधनके यच्छेषमवतिष्ठते तद् भवेन्नक्षत्रं पौर्णमासीयुक्तं, तस्मिंश्च नक्षत्रे करोति 'उडुपतिः' चन्द्रमाः परिपूर्णः पौर्णमासीं विमलामिति,एष पूर्णमासीचन्द्रनक्षत्रपरिज्ञानविषयकरणगाथाद्वयाक्षरार्थः । भावना त्वियं-कोऽपि पृच्छति युगस्यादौ प्रथमा पौर्णमासीं कस्मिन् चन्द्रनक्षत्रयोगे समाप्तिमुपयाति ? इति, तत्र षट्षष्टिर्मुहूर्त्ताः, एकस्य च मुहूर्त्तस्य पञ्च द्वाषष्टिभागाः एकस्य च द्वाषष्टिभागस्यैकः सप्तषष्टिभाग इत्येवंरूपोऽवधार्यराशिर्ध्रियते, स प्रथमायां पौर्णमास्यां किल पृष्टमित्येकेन गुण्यते, एकेन च गुणितं तदेव भवति, ततस्तस्मादभिजितो नव मुहूर्त्ताः एकस्य च मुहूर्त्तस्य चतुर्विंशतिर्द्वाषष्टिभागाः एकस्य च द्वाषष्टिभागस्य षट्षष्टिः सप्तषष्टिभागा इत्येवंप्रमाणं शोधनकं शोधनीयं, तत्र षट्षष्टेर्नव मुहूर्त्ताः शुद्धाः, स्थिताः पश्चात्सप्तपञ्चाशत्, तेभ्य एको मुहूर्त्तो गृहीत्वा द्वाषष्टिभागीकृतः, ते च द्वाषष्टिरपि भागा द्वाषष्टिभागराशौ पञ्चकरूपे प्रक्षिप्यन्ते, जाताः सप्तषष्टिर्द्वाषष्टिभागाः, तेभ्यश्चतुर्विंशतिः शुद्धा, स्थिताः पश्चात्त्रिचत्वारिंशत्, तेभ्य एकं रूपमादाय सप्तषष्टिभागीक्रियते, ते च सप्तषष्टिरपि भागाः सप्तषष्टिभागकमध्ये प्रक्षिप्यन्ते, जाता अष्टषष्टिः सप्तषष्टिभागाः, तेभ्यः षट्षष्टिः शुद्धा, स्थितौ द्वौ पश्चात्सप्तषष्टिभागौ, ततः त्रिंशता मुहूर्त्तैः श्रवणः शुद्धः, स्थिताः पश्चान्मुहूर्त्ताः षड्विंशतिः, तत इदमागतं-धनिष्ठानक्षत्रस्य त्रिषु मुहूर्त्तेषु एकस्य च मुहूर्त्तस्यैकोनत्रिंशतिसंख्येषु द्वाषष्टिभागेषु एकस्य च द्वाषष्टिभागस्य पंचषष्टिसंख्येषु सप्तषष्टिभागेषु शेषेषु प्रथमा पौर्णमासी समाप्तिमियर्त्ति, तथा चोक्तं सूर्यप्रज्ञप्तौ- "ता एएसि णं पंचण्हं संवच्छराणं पढमं पुण्णमासिं चंदे केणं नक्खत्तेणं जोएइ?, ता धणिट्ठाहिं, धनिट्ठाणं तिन्नि मुहुत्ता एगुणतीसं च बावट्ठिभागा मुहुत्तस्स बावट्ठिभागं च सत्तट्ठिहा छेत्ता पणट्ठी चुण्णियाभागा सेसा" इति । पंचम्यां

॥२३०॥

पौर्णमास्यां जिज्ञासितायां स पूर्वोदितोऽवधार्यराशिः पंचभिर्गुण्यते, जातानि त्रीणि शतानि त्रिंशदधिकानि मुहूर्त्तानां पंचविंशतिर्द्वाषष्टिभागाः एकस्य च द्वाषष्टिभागस्य पंच सप्तषष्टिभागाः, तत एतेभ्यस्त्रिषु नवोत्तरेषु शतेषु शोधितेष्वाभिजिदादीनि रोहिणीपर्यन्तान्येकादश नक्षत्राणि शुद्धानि, शेषास्तिष्ठन्त्येकविंशतिर्मुहूर्त्ताः, पंचविंशतिर्द्वाषष्टिभागेभ्यश्चतुर्विंशतिरभिजितो द्वाषष्टिभागाः शुद्धाः, शेषः तिष्ठत्येकः, स सप्तषष्टिभागीक्रियते, ते च सप्तषष्टिभागाः सप्तषष्टिभागराशौ पंचकरूपे प्रक्षिप्यन्ते, जाता द्विसप्ततिः सप्तषष्टिभागास्तेभ्यः षट्षष्टिः शुद्धा, स्थिताः पश्चात् षट्, आगतं मृगशिरसो नक्षत्रस्यैकविंशतिमुहूर्त्तान् एकस्य च मुहूर्त्तगतस्य द्वाषष्टिभागस्य, सत्केषु षट् सप्तषष्टिभागान् भुक्त्वा पंचमी पौर्णमासी समाप्तिमुपगच्छति, एवं सर्वास्वपि युगभाविनीषु पौर्णमासीषु भावनीयम् ॥ ३२५-३२६ ॥ तदेवमुक्तममावास्यापौर्णमासीषु चन्द्रनक्षत्रपरिज्ञानविषयं करणं, सम्प्रति कति मण्डलानि चन्द्रः सूर्यो वा युगमध्ये चरति ? इत्येतन्निरूपयति—

सत्तरस सए पुण्णे अट्ठट्ठे चेव मंडले चरइ । चंदो जुगेण नियमा सूरो अट्ठारस उ तीसे ॥ ३२७ ॥

चन्द्रः 'युगेन' चन्द्रचन्द्राभिवर्द्धितचन्द्राभिवर्धितरूपसंवत्सरपंचकात्मकेन नियमान्मण्डलान् 'चरति' भ्रम्या पूरयति सप्तदश शतानि अष्टषष्ट्यधिकानि १७६८, सूर्यः पुनर्युगेन मण्डलानि पूरयति अष्टादश शतानि त्रिंशदधिकानि १८३० ॥ ३२७ ॥ सम्प्रति चन्द्रः स्वकीयेनायनेन कियन्ति मण्डलानि चरति ? इत्येतन्निरूपयति—

तेरस य मण्डलाइं तेरस सत्तट्ठी चेव भागा य । अयणेण चरइ सोमो नक्खत्तेणऽद्धमासेणं ॥ ३२८ ॥

६६ नक्षत्रार्द्धमासप्रमाणं चन्द्रस्यायनं, ततो 'नक्षत्रेण' नक्षत्रसत्केनार्द्धमासेन यच्चन्द्रस्यायनं तेन स्वकीयेनायनेन चन्द्रस्त्रयोदश मण्डलानि एकस्य च मण्डलस्य सप्तषष्टिभागीकृतस्य त्रयोदश भागान् चरति, कथमेतस्योत्पत्तिः ? इति चेद् उच्यते, चतुस्त्रिंशदधिकेनायनशतेन सप्तदश शतान्यष्टषष्टिसाहितानि मण्डलानां लभ्यन्ते तत एकेनायनेन किं लभामहे ?, राशित्रयस्थापना १३४-१७६८-१, अत्रान्त्येन राशिना एककलक्षणेन मध्यराशिर्गुण्यते, स च तावानेव जातस्तत आद्येन राशिना चतुस्त्रिंशदधिकेन शतरूपेण भागो ह्रियते, लब्धास्त्रयोदश, शेषा तिष्ठति षड्विंशतिः, ततश्छेद्यच्छेदकराश्योर्द्विकेनापवर्त्तना, लब्धास्त्रयोदश सप्तषष्टिभागाः ॥ ३२८ ॥ अधुना यावन्ति मण्डलान्येकेन पर्वणा चन्द्रश्चरति तावन्ति निर्दिदिक्षुराह—

चोद्दस य मंडलाइं विसट्ठिभागा य सोलस हवेज्जा । मासद्धेण उडुवइ एत्तियमित्तं चरइ खेत्तं ॥ ३२९ ॥

मासार्द्धेन एकेन पर्वणा 'उडुपतिः' चन्द्रमाः 'एतावन्मात्रम्' एतावत्प्रमाणं क्षेत्रं चरति यदुत चतुर्दश मण्डलानि एकस्य च मण्डलस्य षोडश द्वाषष्टिभागाः, तथाहि-यदि चतुर्विंशत्यधिकेन पर्वशतेन सप्तदश शतान्यष्टषष्ट्यधिकानि मण्डलानां लभ्यन्ते तत एकेन पर्वणा किं लभ्यते ?, राशित्रयस्थापना १२४-१७६८- १, अत्रान्त्येन राशिना मध्यराशिर्गुण्यते, स च तावानेव जातस्तत्राद्येन राशिना भागहरणं, लब्धाः चतुर्दश, शेषा तिष्ठति द्वात्रिंशत् , तत्र छेद्यच्छेदकराश्योर्द्विकेनापवर्त्तना, लब्धाः षोडश द्वाषष्टिभागाः ॥ ३२९ ॥ सम्प्रति पर्वगतमण्डलेभ्योऽयनगतमण्डलापगमे यच्छेषमवतिष्ठते तन्निरूपयति—

एगं च मंडलं मंडलस्स सत्तट्ठिभाग चत्तारि । नव चेव चुण्णियाओ इगतीसकएणं छेएणं ॥३३०॥

एकं मण्डलं एकस्य च मण्डलस्य सप्तषष्टिभागाश्चत्वारः एकस्य सप्तषष्टिभागस्यैकत्रिंशत्कृतेन छेदनेन नव चूर्णिकाभागाः, एतावद् पर्वगतक्षेत्रापगमे शेषम्, एतस्यैवमुत्पत्तिः-यदि चतुर्विंशत्यधिकेन पर्वशतेन सप्तदश शतान्यष्टषष्ट्यधिकानि मण्डलानां लभ्यन्ते तत एकेन पर्वणा किं लभामहे ?, राशित्रयस्थापना १२४।१७६८।१, अत्रान्त्येन राशिना मध्यराशिर्गुण्यते, स च तावानेव जातस्तत आद्येन चतुर्विंशत्यधिकेन शतरूपेण राशिना भागहरणं, छेद्यच्छेदकराश्योश्चतुर्भिरपवर्त्तना, लब्धानि चतुर्दश मण्डलानि अष्टौ चैकत्रिंशद्भागाः, एतस्मादयनक्षेत्रं शोध्यते, तत्र चतुर्दशभ्यस्त्रयोदश मण्डलानि शुद्धानि, एकमवशिष्टं, सम्प्रत्यष्टाभ्य एकत्रिंशद्भागेभ्यस्त्रयोदश सप्तषष्टिभागाः शोध्याः, तत्र सप्तषष्टिरष्टभिर्गुणिता जातानि पंच शतानि षट्त्रिंशदधिकानि ५३६, एकत्रिंशता त्रयोदश गुणिता जातानि चत्वारि शतानि त्र्युत्तराणि ४०३, एतानि पंचभ्यः शतेभ्यः षट्त्रिंशदधिकेभ्यः शोध्यन्ते, स्थितं शेषं त्रयस्त्रिंशदधिकं शतं १३३, तदेतत्सप्तषष्टिभागानयनार्थं सप्तषष्ट्या गुण्यते, जातानि नवाशीतिशतान्येकादशाधिकानि ८९११, छेदराशिर्मूल एकत्रिंशत्, सा सप्तषष्ट्या गुण्यते, जाते द्वे सहस्रे सप्तसप्तत्यधिके २०७७, ताभ्यां भागो ह्रियते, लब्धाश्चत्वारः सप्तषष्टिभागाः, शेषं तिष्ठन्ति षट् शतानि त्र्युत्तराणि ६०३, ततः छेद्यच्छेदकराश्योः सप्तषष्ट्याऽपवर्त्तना, जाता उपरि नव अधस्तादेकत्रिंशत्, लब्धा एकस्य सप्तषष्टिभागस्य नव एकत्रिंशच्छेदकृता भागा इति ॥ ३३० ॥ सम्प्रति कस्मिन्नयने कस्मिन् वा मण्डले किं पर्व समाप्तिमुपयातीति तन्निरूपणार्थं करणमाह—

इच्छापव्वेहिं गुणे अयणं रूवाहियं तु कायव्वं । सोज्झं च हवइ एत्तो अयणक्खेत्तं उडुवइस्स ॥३३१॥

जइ अयणा सुज्झंती तइ पुव्वजुया उ रूवसंजुत्ता । नायव्वं तं अयणं नत्थि निरंसं हि रूवजुयं ॥ ३३२ ॥

कसिणंमि होइ रूवं पक्खेवा दो य होंति भिन्नंमि । जावइआ तावइव्वे पव्वे ससिमंडला होंति ॥३३३॥

ओयंमि उ गुणकारे अब्भिंतरमंडले हवइ आई । जुम्मंमि य गुणकारे बाहिरगे मंडले आई ॥ ३३४ ॥

यस्मिन् पर्वण्ययनमण्डलादिविषया ज्ञातुमिच्छा तेन गुणितं प्रागुक्तं राशिं एकमयनमेकं मण्डलमेकस्य च मण्डलस्य चत्वारः सप्तषष्टिभागाः एकस्य च सप्तषष्टिभागस्य-नवैकत्रिंशद्भागा इत्येवंरूपं कुर्यात्, तदनन्तरं चायनं रूपाधिकं कर्त्तव्यं, तथा गुणितस्य मण्डलराशेर्यदि चन्द्रमसोऽयनक्षेत्रं परिपूर्णमधिकं वा संभाव्यते तत एतस्मादीप्सितपर्वसङ्ख्यानगुणितान्मण्डलराशेः 'उडुपतेश्च' चन्द्रमसोऽयनक्षेत्रं भवति शोध्यं, 'यति च' यावत्सङ्ख्यानि चायनानि शुद्ध्यन्ति ततिभिर्युक्तानि पूर्वाण्ययनानि क्रियन्ते, कृत्वा भूयो रूपसंयुक्तानि विधेयानि, यदि पुनः परिपूर्णानि मण्डलानि शुद्ध्यन्ति राशिश्च पश्चान्निर्लेपो जायते तदा त्वयनसङ्ख्यानं निरंशं सत् रूपयुक्तं नास्ति, तत्रायनराशौ रूपं न प्रक्षिप्यत इति भावः, कृत्स्ने-परिपूर्णे राशौ भवत्येकं रूपं मण्डलराशौ प्रक्षेपणीयं, 'भिन्ने' खण्डे अंशसहिते राशावित्यर्थः द्वे रूपे मण्डलराशौ प्रक्षेपणीये, प्रक्षेपे च कृते सति यावान् मण्डलराशिर्भवति तावन्ति शशिमण्डलानि तावतिथे ईप्सिते पर्वणि भवन्ति, तथा यदीप्सितेन पर्वणा ओजोरूपेण-विषमलक्षणेन गुणकारो भवति तत आदिरभ्यन्तरे मण्डले द्रष्टव्यः, 'युग्मे तु' समे तु गुणकारे आदिर्बाह्ये मण्डलेऽवसेयः, एष करणगाथासमूहाक्षरार्थः, भावना त्वियं-कोऽपि पृच्छति-युगस्यादौ प्रथमं पर्व कस्मिन्नयने कस्मिन् वा मण्डले समाप्तिमुपयाति? इति, तत्र प्रथमं

पर्वे पृष्टमिति वामपार्श्वे पर्वसूचक एककः स्थाप्यते, ततस्तस्यानुश्रेणि दक्षिणपार्श्वे एकमयनं, तस्य चानुश्रेणि एकं मण्डलं, तस्य च मण्डलस्याधस्ताच्चत्वारः सप्तषष्टिभागाः तेषामधस्तान्नवैकत्रिंशद्भागाः, एष सर्वोऽपि राशिर्ध्रुवराशिः, स ईप्सितेनैकेन पर्वणा गुण्यते, एकेन च गुणितं तदेव भवतीति जातस्तावानेव राशिः, ततः अयनं रूपाधिकं च कर्त्तव्यमिति वचनादयने रूपं प्रक्षिप्यते, मण्डलराशौ चायनं शुद्ध्यति ततः 'दो य होंति भिन्नंमि' इति वचनात् मण्डलराशौ द्वे रूपे प्रक्षिप्येते, तत आगतमिदं-प्रथमं पर्वे द्वितीयेऽयने तृतीयस्य मण्डलस्य 'ओजंमि य गुणकारे अब्भितरमंडले हवइ आई' इति वचनात् अभ्यन्तरवर्त्तिनश्चतुर्षु सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य नवस्वेकत्रिंशद्भागेषु गतेषु समाप्तिमुपयाति । तथा कोऽपि प्रश्नयति-चतुर्दशं पर्वे कतिसंख्येष्वयनेषु मण्डलेषु वा समाप्तिं गच्छतीति, स एव प्रागुक्तो ध्रुवराशिः समस्तोऽपि चतुर्दशभिर्गुण्यते, ततो जातान्ययनानि चतुर्दश मण्डलान्यपि चतुर्दश, चत्वारः सप्तषष्टिभागाश्चतुर्दशभिर्गुणिता जाताः षट्पंचाशत् ५६, नवैकत्रिंशद्भागाश्चतुर्दशभिर्गुणिता जातं षड्विंशत्यधिकं शतं १२६, तत्र षड्विंशत्यधिकस्य शतस्यैकत्रिंशता भागो ह्रियते, लब्धाश्चत्वारः सप्तषष्टिभागाः, द्वौ चूर्णिकाभागौ तिष्ठतः, चत्वारश्च सप्तषष्टिभागा उपरितने सप्तषष्टिभागराशौ प्रक्षिप्यन्ते, जाताः षष्टिः सप्तषष्टिभागाः, चतुर्दशभ्यश्च मण्डलेभ्यस्त्रयोदशभिर्मंडलैस्त्रयोदश भिश्च सप्तषष्टिभागैरयनं शुद्धं, तेन पूर्वाणि चतुर्दशसंख्यान्ययनानि युतानि क्रियन्ते, ततोऽयनं रूपाधिकं कर्त्तव्यमिति वचनाद् भूयोऽपि तत्रैकरूपं प्रक्षिप्यते, जातानि षोडशायनानि, सप्तषष्टिभागाश्च चतुष्पंचाशत्संख्या मण्डलराशेरुद्धरितास्तिष्ठन्ति, ते सप्तषष्टिभागराशौ षष्टिरूपे प्रक्षिप्यन्ते, जातं चतुर्दशोत्तरं शतं ११४, तस्य सप्तषष्ट्या भागो ह्रियते, लब्धमेकं मण्डलं, पश्चादवतिष्ठन्ते सप्तचत्वारिंशत् सप्तषष्टिभागास्ततः 'दो य होंति भिन्नंमि, इति वचनान्मण्डलराशौ द्वे रूपे प्रक्षिप्येते, जातानि त्रीणि मण्डलानि,

चतुर्दशभिश्चात्र गुणनं कृतं, चतुर्दशराशिश्च यद्यपि युग्मरूपस्तथाऽप्यत्र मण्डलराशेरेकमयनमाधिकं प्रविष्टमिति त्रीणि मण्डलान्यभ्यन्तरमण्डलादारभ्य द्रष्टव्यानि, तत आगतं- चतुर्दशं पर्व षोडशस्वयनेषु गतेषु बाह्यमण्डलादितस्तृतीयस्य सप्तचत्वारिंशति सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य द्वयोरेकत्रिंशद्भागयोर्गतयोः समाप्तमिति । तथा द्वाषष्टितमपर्वजिज्ञासायां स पूर्वोक्तो ध्रुवराशिर्द्वाषष्ट्या गुण्यते, जातानि द्वाषष्टिर्मण्डलानि द्वे शते अष्टचत्वारिंशदधिके सप्तषष्टिभागानां २४८, पंच शतान्यष्टपंचाशदधिकानि एकत्रिंशद्भागानां ५५८, तेषामेकत्रिंशता भागे हृते लब्धाः परिपूर्णा अष्टादश सप्तषष्टिभागास्ते उपरितने सप्तषष्टिभागराशौ प्रक्षिप्यन्ते, जाते द्वे शते षट्षष्ट्यधिके २६६, उपरि च द्वाषष्टिर्मण्डलानि, तेभ्यो द्विपंचाशता मण्डलैर्द्विपंचाशता च एकस्य मण्डलस्य सप्तषष्टिभागैश्चत्वार्ययनानि लब्धानि, तान्ययनराशौ प्रक्षिप्यन्ते, जातानि षट्षष्ट्ययनानि ६६, पश्चादवतिष्ठन्ते नव मण्डलानि पंचदश च सप्तषष्टिभागानां मण्डलस्य, तत्र पंचदश सप्तषष्टिभागाः सप्तषष्टिभागराशिमध्ये प्रक्षिप्यन्ते, जाते द्वे शते एकाशीत्यधिके २८१, तयोः सप्तषष्ट्या भागे हृते लब्धानि चत्वारि मण्डलानि, शेषा अवतिष्ठन्ते त्रयोदश सप्तषष्टिभागाः, मण्डलानि च मण्डलराशौ प्रक्षिप्यन्ते, जातानि त्रयोदश मण्डलानि, त्रयोदशभिश्च मण्डलैस्त्रयोदशभिश्च सप्तषष्टिभागैः परिपूर्णमेकमयनं लब्धमिति तदयनराशौ प्रक्षिप्यते, जातानि सप्तषष्टिरयनानि 'तत्थ निरंसंमि रूवजुय'मिति वचनात् अयनराशौ रूपं न प्रक्षिप्यते, केवलं 'कसिणंमि होइ रूवं पक्खेवो' इति वचनात् मण्डलस्थाने एकं रूपं न्यस्यते, द्वाषष्ट्या चात्र गुणकारः कृतो द्वाषष्टिरूपश्च राशिर्युग्मः, यान्यपि च चत्वार्ययनानि प्रविष्टानि तान्यपि युग्मरूपाणि, रूपं चात्राधिकमेकं न प्रक्षिप्तमिति पंचममयनं तत्स्थाने द्रष्टव्यमिति बाह्यमण्डलमादि द्रष्टव्यं, तत आगतं-द्वाषष्टितमं पर्व सप्तषष्ट्ययनेषु जातेषु बाह्ये मण्डले प्रथमरूपे परिसमाप्तिं गतमिति ।

एवं सर्वाण्यपि पर्वाणि भावनीयानि। केवलं मूलटीकायां पर्वायनमण्डलप्रस्तारोऽक्ष[र]ताडितः कृत इत्यस्माभिरपि विनेयजनसुखाववोधाय स क्रियते-प्रथमं पर्व द्वितीयेऽयने तृतीये मण्डले तृतीयस्य मण्डलस्य चतुर्षु सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य नवस्वेकत्रिंशद्भागेषु गतेषु समाप्तमिति ध्रुवराशिं कृत्वा पर्वानयनमण्डलेषु प्रत्येकमेकैकरूपं प्रक्षिप्तव्यं, भागेषु च तावत्संख्याका भागाः, मण्डलेषु चायनक्षेत्रे परिपूर्णे त्रयोदश मण्डलानि एकस्य च मण्डलस्य त्रयोदश सप्तषष्टिभागा इत्येतावत्प्रमाणं समयक्षेत्रं, ततः शोधयित्वाऽयनमयनराशौ प्रक्षेप्तव्यम्, अनेन क्रमेण वक्ष्यमाणः प्रस्तारः सम्यक् परिभावनीयः, स च प्रस्तारोऽयं-प्रथमं पर्व द्वितीयेऽयने तृतीये मण्डले तृतीयस्य मण्डलस्य चतुर्षु सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य नवस्वेकत्रिंशद्भागेषु गतेषु समाप्तं, द्वितीयं पर्व तृतीयेऽयने चतुर्थमण्डले चतुर्थस्य मण्डलस्याष्टसु सप्तषष्टिभागेषु एकस्य सप्तषष्टिभागस्याष्टादशस्वेकत्रिंशद्भागेषु, तृतीयं पर्व चतुर्थेऽयने पंचमे मण्डले पंचमस्य मण्डलस्य द्वादशसु सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य सप्तविंशतावेकत्रिंशद्भागेषु, चतुर्थं पर्व पंचमेऽयने षष्ठे मण्डले षष्ठस्य मण्डलस्य सप्तदशसु सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य पंचसु एकत्रिंशद्भागेषु, पंचमं पर्व षष्ठेऽयने सप्तमे मण्डले सप्तमस्य मण्डलस्यैकविंशतौ सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य चतुर्दशस्वेकत्रिंशद्भागेषु, षष्ठं पर्व सप्तमेऽयनेऽष्टमे मण्डले अष्टमस्य मण्डलस्य पंचविंशतौ सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य त्रयोविंशतावेकत्रिंशद्भागेषु, सप्तमं पर्व अष्टमेऽयने नवमे मण्डले नवमस्य मण्डलस्य त्रिंशति सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्यैकस्मिन्नेकत्रिंशद्भागे, अष्टमं पर्व नवमेऽयने दशमे मण्डले दशमस्य मण्डलस्य चतुस्त्रिंशति सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य दशस्वेकत्रिंशद्भागेषु, नवमं पर्व दशमेऽयने एकादशे मण्डले एकादशमण्डलस्याष्टात्रिंशति सप्तषष्टिभागेषु एकस्य च सप्त-

षष्टिभागस्यैकोनविंशतावेकत्रिंशद्भागेषु, दशमं पर्व एकादशेऽयने द्वादशे मण्डले द्वादशस्य मण्डलस्य द्वाचत्वारिंशति सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्याष्टाविंशतावेकत्रिंशद्भागेषु, एकादशं पर्व द्वादशेऽयने त्रयोदशे मण्डले त्रयोदशस्य मण्डलस्य सप्तचत्वारिंशति सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य षट्स्वेकत्रिंशद्भागेषु, द्वादशं पर्व चतुर्दशेऽयने प्रथमे मण्डले प्रथमस्य मण्डलस्याष्टात्रिंशति सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य पंचदशस्वेकत्रिंशद्भागेषु, त्रयोदशं पर्व पंचदशेऽयने द्वितीये मण्डले द्वितीयस्य मण्डलस्य द्वाचत्वारिंशति सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य चतुर्विंशतावेकत्रिंशद्भागेषु, चतुर्दशं पर्व षोडशेऽयने तृतीये मण्डले तृतीयस्य मण्डलस्य सप्तचत्वारिंशति सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्य द्वयोरेकत्रिंशद्भागयोः, पंचदशं पर्व सप्तदशेऽयने चतुर्थे मण्डले चतुर्थस्य मण्डलस्यैकपंचाशत्सप्तषष्टिभागेषु एकस्य च सप्तषष्टिभागस्यैकादशस्वेकत्रिंशद्भागेषु, एवं शेषेष्वपि पर्वस्वयनमण्डलादिप्रस्तावो भावनीयो, ग्रन्थगौरवभयान्न लिख्यते ॥ २३१-२३४ ॥ सम्प्रति पर्वस्वेव चन्द्रनक्षत्रयोगपरिज्ञानार्थं करणमाह-



चउवीससयं काऊण पमाणं सत्तसट्ठिमेव फलं । इच्छापव्वेहि गुणं काऊणं पज्जया लद्धा ॥ २३५ ॥

अट्ठारसहि सएहिं तीसेहिं सेसगंमि गणयंमि । तेरस चिउत्तरेहिं सएहिं अभिजिंमि सुद्धंमि ॥ २३६ ॥

सत्तट्ठि विसट्ठेणं सव्वग्गेणं ततो उ जं सेसं । तं रिक्खं नायव्वं जत्थ समत्तं हवइ पव्वं ॥२३७॥

त्रैराशिकविधौ चतुर्विंशत्यधिकं शतं प्रमाणं-प्रमाणराशिं कृत्वा सप्तषष्टिरूपं 'फलं' फलराशिं कुर्यात्, कृत्वा चेप्सितैः पर्वभिः गुणं-गुणकारं विदध्यात् , विधाय चाद्येन राशिना चतुर्विंशत्यधिकेन शतेन भागे हृते यल्लब्धं ते पर्याया ज्ञातव्याः, यत्पुनः

शेषमवतिष्ठते तदष्टादशभिः शतैस्त्रिंशदधिकैः संगुण्यते, संगुणिते च तस्मिन् ततस्त्रयोदशभिः शतैर्व्युत्तरैरभिजित् शोधनीयः, अभिजितो मौग्यानामेकविंशतेः सप्तषष्टिभागानां द्वाषष्ट्या गुणने एतावतः शोधनकस्य लभ्यमानत्वात्, ततस्तस्मिन् शोधिते सप्तषष्टिसंख्या या द्वाषष्टयस्तासां सर्वाग्रेण यद्भवति, किमुक्तं भवति ?- सप्तषष्ट्या द्वाषष्टौ गुणितायां यद्भवति, तेन भागे हृते यल्लब्धं तावन्ति नक्षत्राणि शुद्धानि द्रष्टव्यानि, यत्पुनः 'ततोऽपि' भागहरणादपि शेषमवतिष्ठते तत् 'भक्षं' नक्षत्रं ज्ञातव्यं यत्र विवक्षितं पर्व समाप्तमिति । एष करणगाथात्रयाक्षरार्थः, भावना त्वियं-यदि चतुर्विंशत्यधिकेन पर्वशतेन सप्तषष्टिपर्याया लभ्यन्ते तत एकेन पर्वणा किं लभामहे ?, राशित्रयस्थापना १२४-६७-१, अत्र चतुर्विंशत्यधिकपर्वशतरूपो राशिः प्रमाणभूतः, सप्तषष्टिरूपः फलं, अत्रान्त्येन राशिना मध्यराशिर्गुण्यते, जातस्तावानेव, तस्याद्येन राशिना चतुर्विंशत्यधिकेन शतेन भागहरणं, स च स्तोकत्वाद्भागं न प्रयच्छति, ततो नक्षत्रानयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागैर्गुणयिष्याम इति गुणकारच्छेदराश्योरर्द्धेनापवर्त्तना, जातो गुणकारराशिर्नव शतानि पंचदशोत्तराणि ९१५, छेदराशिर्द्वाषष्टिः, तत्र सप्तषष्टिर्नवभिः शतैः पंचदशोत्तरैर्गुण्यते, जातानि एकषष्टिसहस्राणि त्रीणि शतानि पंचोत्तराणि ६१३०५, एतस्मादभिजितस्त्रयोदश शतानि द्व्युत्तराणि शुद्धानि, स्थितानि शेषाणि षष्टिसहस्राणि त्र्युत्तराणि ६०००३, तत्र छेदराशिर्द्वाषष्टिरूपः सप्तषष्ट्या गुण्यते, जातान्येकचत्वारिंशच्छतानि चतुष्पंचाशदधिकानि ४१५४, तैर्भागो ह्रियते, लब्धाश्चतुर्दश, तेन श्रवणादीनि पुष्यपर्यन्तानि चतुर्दश नक्षत्राणि शुद्धानि, शेषाणि तिष्ठन्त्यष्टादश शतानि सप्तचत्वारिंशदधिकानि १८४७, एतानि मुहूर्त्तानयनार्थं त्रिंशता गुण्यंते, जातानि पंचपंचाशत्सहस्राणि चत्वारि शतानि दशोत्तराणि ५५४१०, तेषां भागे हृते लब्धास्त्रयोदश मुहूर्त्ताः, शेषाणि तिष्ठन्ति चतुर्दश शतानि अष्टोत्तराणि १४०८, एतानि द्वाषष्टिभागानयनार्थं

द्वाषष्ट्या गुणयितव्यानि, गुणकारच्छेदराश्योर्द्वाषष्ट्याऽपवर्त्तना क्रियते, तत्र गुणकारराशिर्जात एककश्छेदराशिः सप्तषष्टिः, एकेन च गुणित उपरितनो राशिर्जातस्तावानेव, ततः सप्तषष्ट्या भागे हृते लब्धा एकविंशतिः, पश्चादवतिष्ठते एकः सप्तषष्टिभागः एकस्य च द्वाषष्टिभागस्य, आगतं प्रथमं पर्व अश्लेषायास्त्रयोदश मुहूर्त्तान् एकस्य च मुहूर्त्तस्य एकविंशतिं द्वाषष्टिभागान् एकस्य च द्वाषष्टिभागस्यैकं सप्तषष्टिभागं भुक्त्वा समाप्तमिति। तथा यदि चतुर्विंशत्यधिकेन पर्वशतेन सप्तषष्टिः पर्याया लभ्यन्ते ततो द्वाभ्यां पर्वभ्यां किं लभ्यते ?, राशित्रयस्थापना १२४-६७-२, अत्रान्त्येन राशिना मध्यराशिर्गुण्यते, जातं चतुस्त्रिंशदधिकं शतं १३४, तत्राद्येन राशिना चतुर्विंशत्यधिकशतरूपेण भागो ह्रियते, लब्ध एको नक्षत्रपर्यायः, स्थितः शेषा दश, तत एतान् नक्षत्रानयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागैर्गुणयिष्याम इति गुणकारच्छेदराश्योरर्द्धेनापवर्त्तना, जातो गुणकारराशिर्नव शतानि पंचदशोत्तराणि ९१५, छेदराशिर्द्वाषष्टिः, तत्र दश नवभिः शतैः पंचदशोत्तरैर्गुण्यते, जातान्येकनवतिशतानि पंचाशदधिकानि ९१५०, तेभ्यस्त्रयोदश शतानि द्व्युत्तराण्यभिजितः शुद्धानि, स्थितानि पश्चादष्टसप्ततिशतान्यष्टचत्वारिंशदधिकानि ७८४८, तत्र द्वाषष्टिरूपश्छेदराशिः सप्तषष्ट्या गुण्यते, जातान्येकचत्वारिंशच्छतानि चतुष्पंचाशदधिकानि ४१५४, तैर्भागो ह्रियते, लब्धमेकं श्रवणरूपं नक्षत्रं, शेषाणि तिष्ठन्ति षट्त्रिंशच्छतानि चतुर्नवत्यधिकानि ३६९४, एतानि मुहूर्त्तानयनार्थं त्रिंशता गुण्यन्ते, जातमेकं लक्षं दश सहस्राण्यष्टौ शतानि विंशत्युत्तराणि ११०८२०, तेषां छेदराशिना भागे हृते लब्धाः षड्विंशतिर्मुहूर्त्ताः २६, शेषाणि तिष्ठन्त्यष्टाविंशतिशतानि षोडशोत्तराणि २८१६, एतानि द्वाषष्टिभागानयनार्थं द्वाषष्ट्या गुणयितव्यानि, तत्र गुणकारच्छेदराश्योर्द्वाषष्ट्याऽपवर्त्तना, तत्र गुणकारराशिरेककरूपो जातः, छेदराशिः सप्तषष्टिः, तत्रैकेनोपरितनो राशिर्गुणितो जातस्तावानेव, तस्य सप्तषष्ट्या भागे हृते लब्धा द्वाचत्वारिं-

शत् द्वाषष्टिभागा एकस्य च द्वाषष्टिभागस्य द्वौ सप्तषष्टिभागौ, तत आगतं-द्वितीयं पर्व धनिष्ठानक्षत्रस्य षड्विंशतिं मुहूर्त्तान् एकस्य च मुहूर्त्तस्य द्वाचत्वारिंशद्। द्वाषष्टिभागान् एकस्य च द्वाषष्टिभागस्य द्वौ सप्तषष्टिभागौ भुक्त्वा समाप्तिं गच्छतीति, एवं शेषेष्वपि पर्वसु समाप्तिनक्षत्राणि भावनीयानि ॥ ३३५-३३७ ॥ सम्प्रति युगपूर्वार्द्धे तत्संग्राहिकाः पंच गाथाः पठति—

सप्प १ धणिट्ठा २ अज्जम ३ अभिवुड्ढी ४ चित्त ५ आस ६ इंदग्गि ७।
रोहिणि ८ जिट्ठा ९ मिगसर १० विस्सा ११ ऽदिति १२ सवण १३ पिउदेवा १४ ॥ ३३८ ॥
अज १५ अज्जम १६ अभिवुड्ढी १७ चित्ता १८ आसो १९ तहा विसाहाओ २०।
रोहिणि २१ मूलो २२ अद्दा २३ वीसुं २४ पुस्सो २५ धणिट्ठा २६ य ॥ ३३९ ॥
भग २७ अज २८ अज्जम २९ पूसो ३० साई ३१ अग्गी ३२ य मित्तदेवा ३३ य।
रोहिणि ३४ पुव्वासाढा ३५ पुणव्वसू ३६ वासदेवा ३७ य ॥ ३४० ॥
अहि ३८ वसु ३९ भगा ४० भिवुड्ढी ४१ हत्थ४२ऽस्स ४३ विसाह ४४ कत्तिया ४५ जेट्ठा ४६।
सोमा ४७ उ ४८ रवी ४९ समणो ५० पिउ ५१ वरुण ५२ भगा ५३ भिवुड्ढी ५४ य ॥ ३४१ ॥
चित्ता५५ऽस ५६ विसाह ५७ ऽग्गी ५८ मूलो ५९ अद्दा ६० य विस्स ६१ पुस्सो ६२ य।
एए जुगपुव्वद्धे विसट्ठिपव्वेसु नक्खत्ता ॥ ३४२ ॥



॥२४१॥

श्री ज्योतिष्करण्डे मलयगिरीयायां प्रा. १९ अमावस्यापौर्णमासीयोगे ॥२४२॥

पर्वसमाप्तिनक्षत्राणि

प्रथमस्य पर्वणः समाप्तौ सर्पदेवतोपलक्षितमश्लेषानक्षत्रं १, द्वितीयस्य धनिष्ठा २, तृतीयस्यार्यमा-अर्यमदेवतोपलक्षिता उत्तराफाल्गुन्यः ३, चतुर्थस्याभिवृद्धिः—अभिवृद्धिदेवतोपलक्षिता उत्तरभाद्रपदाः ४, पंचमस्य चित्रा ५, षष्ठस्याश्वः-अश्वदेवतोपलक्षिताऽश्विनी ६, सप्तमस्य इन्द्राग्निः- इन्द्राग्निदेवतोपलक्षिता विशाखा ७, अष्टमस्य रोहिणी ८, नवमस्य ज्येष्ठा ९, दशमस्य मृगशिरः १०, एकादशस्य विष्वग्देवतोपलक्षिता उत्तराषाढा ११, द्वादशस्यादितिदेवतोपलक्षिता पुनर्वसुः १२, त्रयोदशस्य श्रवणः १३, चतुर्दशस्य पितृदेवा मघा १४, पंचदशस्याजः- अजदेवतोपलक्षिताः पूर्वाभाद्रपदाः १५, षोडशस्यार्यमा- अर्यमदेवतोपलक्षिता उत्तराफाल्गुन्यः १६, सप्तदशस्याभिवृद्धिदेवतोपलक्षिता उत्तरभाद्रपदाः १७, अष्टादशस्य चित्रा १८, एकोनविंशतितमस्याश्वः-अश्वदेवतोपलक्षिताऽश्विनी १९, विंशतितमस्य विशाखा २०, एकविंशतितमस्य रोहिणी २१, द्वाविंशतितमस्य मूलः २२, त्रयोविंशतितमस्यार्द्रा २३, चतुर्विंशतितमस्य विष्वग्देवतोपलक्षिता उत्तराषाढाः २४, पंचविंशतितमस्य पुष्यः, २५, षड्विंशतितमस्य धनिष्ठा २६, सप्तविंशतितमस्य भगो-भगदेवतोपलक्षिता पूर्वफाल्गुनी २७ अष्टाविंशतितमस्याजः-अजदेवतोपलक्षिताः पूर्वभाद्रपदाः २८, एकोनत्रिंशत्तमस्यार्यमा-अर्यमदेवतोपलक्षिता उत्तराफाल्गुन्यः २९, त्रिंशत्तमस्य पूषा-पूषदेवताका रेवती ३०, एकत्रिंशत्तमस्य स्वातिः ३१, द्वात्रिंशत्तमस्याग्निः- अग्निदेवतोपलक्षिताः कृत्तिकाः ३२, त्रयस्त्रिंशत्तमस्य मित्रदेवा-मित्रनामा देवो यस्यासौ तथा, अनुराधा इत्यर्थः ३३, चतुस्त्रिंशत्तमस्य रोहिणी ३४, पंचत्रिंशत्तमस्य पूर्वाषाढाः ३५, षट्त्रिंशत्तमस्य पुनर्वसुः ३६, सप्तत्रिंशत्तमस्य विष्वग्देवाः, उत्तराषाढा इत्यर्थः ३७, अष्टात्रिंशत्तमस्याहिः-अहिदेवतोपलक्षिता अश्लेषा ३८, एकोनचत्वारिंशत्तमस्य वसुः-वसुदेवोपलक्षिता धनिष्ठा ३९, चत्वारिंशत्तमस्य भगः-भगदेवोपलक्षिताः पूर्वाफाल्गुन्यः ४०, एकचत्वारिंशत्तमस्याभिवृद्धिः- अभि-

॥२४२॥

धृद्धिकनामदेवोपलक्षिता उत्तरभाद्रपदाः ४१, द्वाचत्वारिंशत्तमस्य हस्तः ४२, त्रिचत्वारिंशत्तमस्याश्वः- अश्वदेवाऽश्विनी ४३, चतुश्चत्वारिंशत्तमस्य विशाखा ४४, पंचचत्वारिंशत्तमस्य कृत्तिकाः ४५ षट्चत्वारिंशत्तमस्य ज्येष्ठा ४६, सप्तचत्वारिंशत्तमस्य सोमः-सोमदेवोपलक्षितं मृगशिरोनक्षत्रम् ४७, अष्टचत्वारिंशत्तमस्यायुः- आयुर्देवाः पूर्वाषाढाः ४८, एकोनपंचाशत्तमस्य रविः- रविनामकदेवोपलक्षितं पुनर्वसुनक्षत्रं ४९, पंचाशत्तमस्य श्रवणः ५०, एकपंचाशत्तमस्य पिता-पितृदेवा मघाः ५१, द्विपंचाशत्तमस्य वरुणो-वरुणदेवोपलक्षितं शतभिषग्नक्षत्रं ५२, त्रिपंचाशत्तमस्य भगो-भगदेवा उत्तराफाल्गुन्यः ५३, चतुष्पंचाशत्तमस्याभिवृद्धिः-अभिवृद्धिदेवा उत्तरभद्रपदाः ५४, पंचपंचाशत्तमस्य चित्राः ५५, षट्पंचाशत्तमस्याश्वः-अश्वदेवाऽश्विनी ५६, सप्तपंचाशत्तमस्य विशाखाः ५७, अष्टपंचाशत्तमस्याग्निः-अग्निदेवोपलक्षिताः कृत्तिकाः ५८, एकोनषष्टितमस्य मूलः ५९, षष्टितमस्यार्द्रा ६० एकषष्टितमस्य विष्वक्, विष्वग्देवा उत्तराषाढाः ६१ द्वाषष्टितमस्य पुष्यः ६२, एतदुपसंहारमाह- 'एए' त्यादि, एतानि नक्षत्राणि युगस्य पूर्वार्द्धे यानि द्वाषष्टिसंख्यानि पर्वाणि तेषु क्रमेण वेदितव्यानि ॥ एवं प्रागुक्तकरणवशाद्युगस्योत्तरार्द्धेऽपि क्रमेण द्वाषष्टिसंख्येषु पर्वस्ववगन्तव्यानि ॥ २४०-२ ॥ सम्प्रति कस्मिन् सूर्यमण्डले किं पर्व समाप्तिं गच्छति ? इति निरूपणार्थं करणमाह-

सूरस्सवि नायव्वो सगेण अयणेण मंडलविभागो । अयणंमि उ जे दिवसा रूवहिए मंडले हवइ ॥ २४३ ॥ ॥२४३॥

सूर्यस्यापि पर्वविषयो मण्डलविभागो ज्ञातव्यः स्वकीयेनायनेन, किमुक्तं भवति ?-सूर्यस्य स्वकीयमयनमपेक्ष्य तस्मिन् २ मण्डले तस्य तस्य पर्वणः परिसमाप्तिहेतुताऽवधारणीयेति, तत्रायने शोधिते सति ये दिवसा उद्धरिता वर्त्तन्ते तत्सङ्ख्ये रूपे-रूपा-

धिकमण्डले तदीप्सितं पर्व परिसमाप्तं भवतीति वेदितव्यम् । एषा करणगाथाऽक्षरघटना, भावार्थस्त्वयम्-इह यत् पर्व कस्मिन् मण्डले समाप्तमिति ज्ञातुमिष्टं तत्सङ्ख्या ध्रियते, धृत्वा च पञ्चदशभिर्गुण्यते, गुणयित्वा च रूपाधिका क्रियते, ततः संभवन्तोऽवमरात्राः पात्यन्ते, ततो यदि त्र्यशीत्यधिकेन शतेन भागः पतति तर्हि भागे हृते यल्लभ्यते तान्ययनानि ज्ञातव्यानि, केवलं या पश्चाद्दिवससङ्ख्याऽवतिष्ठते तदन्तिमे मण्डले विवक्षितं पर्व परिसमाप्तमित्यवसेयम्, उत्तरायणे च वर्त्तमाने बाह्यं मण्डलमादि कर्त्तव्यं, दक्षिणायने च सर्वाभ्यन्तरमिति ॥ सम्प्रति भावना क्रियते, तत्र कोऽपि पृच्छति-कस्मिन् मण्डले स्थितः सूर्यो युगे प्रथमं पर्व समापयतीति, इह प्रथमं पृष्टमित्येकः स्थाप्यते, स पञ्चदशभिर्गुण्यते, जाताः पञ्चदश, अत्रैकोऽप्यवमरात्रो न सम्भवतीति न किमपि पात्यते, ते च पञ्चदश रूपाधिकाः क्रियन्ते, जाताः षोडश, युगादौ च प्रथमं पर्व दक्षिणायने, तत आगतं-सर्वाभ्यन्तरमण्डलकमादिं कृत्वा षोडशे मण्डले प्रथमं पर्व परिसमाप्तमिति, तथाऽपरः पृच्छति-चतुर्थं पर्व कस्मिन् मण्डले परिसमाप्नोति? इति, तत्र चतुष्को ध्रियते, धृत्वा च पञ्चदशभिर्गुण्यते, जाता षष्टिः, अत्रैकोऽवमरात्रः संभवतीत्येकः पात्यते, जाता एकोनषष्टिः, सा भूयोऽप्येकरूपयुता क्रियते, जाता षष्टिः, आगतं सर्वाभ्यन्तरं मण्डलमादिं कृत्वा षष्टितमे मण्डले चतुर्थं पर्व परिसमाप्तमिति । तथा पञ्चविंशतितमपर्वजिज्ञासायां पञ्चविंशतिः स्थाप्यते, सा पञ्चदशभिर्गुण्यते, जातानि त्रीणि शतानि पञ्चसप्तत्यधिकानि ३७५, अत्र षडवमरात्रा जाता इति षट् शोध्यंते, जातानि त्रीणि शतानि एकोनसप्तत्यधिकानि ३६९, तेषां त्र्यशीत्यधिकेन शतेन भागो ह्रियते, लब्धौ द्वौ, पश्चात्तिष्ठन्ति त्रीणि, तानि रूपयुतानि क्रियन्ते, जातानि चत्वारि, यौ च द्वौ लब्धौ ताभ्यां द्वे अयने दक्षिणायनोत्तरायणरूपे शुद्धे, तत आगतं तृतीयेऽयने दक्षिणायनरूपे सर्वाभ्यन्तरमण्डलमादिं

कृत्वा चतुर्थे मण्डले पञ्चविंशतितमं पर्व समाप्तमिति । चतुर्विंशत्यधिकशततमपर्वजिज्ञासायां चतुर्विंशत्यधिकं शतं स्थाप्यते, तत् पंचदशभिर्गुण्यते, जातान्यष्टादश शतानि त्रिंशदधिकानि १८३०, तानि रूपयुतानि क्रियन्ते, जातानि अष्टादश शतानि एकत्रिंशदधिकानि १८३१, तेषां त्र्यशीत्यधिकेन शतेन भागहरणं, लब्धानि दशायनानि, पश्चादवतिष्ठते एकः, दशमं चायनं युगपर्यन्ते उत्तरायणं, तत आगतम्-उत्तरायणपर्यन्ते सर्वाभ्यन्तरे मण्डले चतुर्विंशत्यधिकशततमं पर्व समाप्तमिति ॥ ३४३ ॥ सम्प्रति किं पर्व कस्मिन् सूर्यनक्षत्रे समाप्तिमधिगच्छति ? इत्येतन्निरूपणार्थं करणमाह-

चउवीससयं काऊण पमाणं पज्जए य पंच फलं । इच्छापव्वेहिं गुणं काऊणं पज्जया लद्धा ॥ ३४४ ॥

अट्ठारसहिं सएहिं तीसेहिं सेसगंमि गुणियंमि । सत्तावीससएसुं अट्ठावीसेसु सुद्धंमि ॥ ३४५ ॥

सत्तट्ठिभिसट्ठीणं सव्वग्गेणं ततो उ जो सेसो । तं रिक्खं सूरस्स उ जत्थ समत्तं हवइ पव्वं ॥ ३४६ ॥

त्रैराशिकविधौ चतुर्विंशत्यधिकं शतं प्रमाणं- प्रमाणराशिं कृत्वा पंच पर्यायान् फलं कुर्यात्, कृत्वा चेप्सितैः पर्वभिः 'गुणं' गुणकारं विदध्यात्, विधाय चाद्येन राशिना चतुर्विंशत्यधिकशतरूपेण भागो हर्त्तव्यो, भागे च हृते यल्लब्धं ते पर्यायाः शुद्धा ज्ञातव्याः, यत्पुनः शेषमवतिष्ठते तदष्टादशभिः शतैस्त्रिंशदधिकैर्गुण्यते, गुणिते च तस्मिन् सप्तविंशतिशतेष्वष्टाविंशत्यधिकेषु शुद्धेषु पुष्यः शुध्यति, तस्मिन् शुद्धे सप्तषष्टिसंख्या या द्वाषष्टयस्तासां सर्वाग्रेण यद् भवति, किमुक्तं भवति ?-सप्तषष्ट्या द्वाषष्टौ गुणितायां यद्भवति तेन भागे हृते यल्लब्धं तानि-तावन्ति नक्षत्राणि शुद्धानि द्रष्टव्यानि, यत्पुनः 'ततोऽपि' भागहरणादपि शेषमवतिष्ठते तत्

ऋक्षं सूर्यस्य सम्बन्धि ज्ञातव्यं यत्र विवक्षितं पर्व समाप्तमिति । एष करणगाथात्रयाक्षरार्थः, भावना त्वियं-यदि चतुर्विंशत्यधिकेन पर्वशतेन पंच सूर्यनक्षत्रपर्याया लभ्यन्ते तत एकेन पर्वणा किं लभामहे ?, राशित्रयस्थापना- १२४-५-१, अत्रान्त्येन राशिना मध्यराशिर्गुण्यते, जातस्तावानेव पंचकरूपः, तत्राद्येन राशिना चतुर्विंशत्यधिकेन शतेन भागहरणं, स च स्तोकत्वाद्भागं न प्रयच्छति, ततो नक्षत्रानयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागैर्गुणयिष्याम इति गुणकारराशिच्छेदराश्योरर्द्धेनापवर्त्तना, जातो गुणकारराशिर्नव शतानि पंचदशोत्तराणि ९१५, छेदराशिर्द्वाषष्टिः, तत्र पंच नवभिः शतैः पंचदशोत्तरैर्गुण्यन्ते, जातानि पंचचत्वारिंशच्छतानि पंचसप्तत्यधिकानि ४५७५, पुष्यस्य चतुश्चत्वारिंशद्भागा द्वाषष्ट्या गुण्यन्ते, जातानि सप्तविंशतिशतानि अष्टाविंशत्यधिकानि २७२८, एतानि पूर्वराशेः शोध्यन्ते, स्थितानि पश्चादष्टादश शतानि सप्तचत्वारिंशदधिकानि १८४७, तत्र च्छेदराशिर्द्वाषष्टिरूपः सप्तषष्ट्या गुण्यते, जातान्येकचत्वारिंशच्छतानि चतुष्पंचाशदधिकानि ४१५४, तैर्भागो ह्रियते, तत्र राशेः स्तोकत्वाद्भागो न लभ्यते, ततो दिवसा आनेतव्याः, तत्र च छेदराशिर्द्वाषष्टिरूपः, परिपूर्णनक्षत्रानयनार्थं हि द्वाषष्टिः सप्तषष्ट्या गुणिता, परिपूर्णं च नक्षत्रमिदानीं नायाति ततो मौल एव द्वाषष्टिरूपश्छेदराशिः, केवलं पंचभिः सप्तषष्टिभागैरहोरात्रो भवति, ततो दिवसानयनाय द्वाषष्टिः पंचभिर्गुण्यते, जातानि त्रीणि शतानि दशोत्तराणि, तैर्भागो ह्रियते, लब्धाः पंच दिवसाः ५, शेषं तिष्ठति द्वे शते सप्तनवत्यधिके २९७, ते मुहूर्त्तानयनार्थं त्रिंशता गुण्यन्ते, तत्र गुणकारच्छेदराश्योः शून्येनापवर्त्तना, जातो गुणकारराशिस्त्रिकरूपश्छेदराशिरेकत्रिंशत्, तत्र त्रिकेनोपरितनो राशिर्गुण्यते, जातान्यष्टौ शतान्येकनवत्यधिकानि ८९१, तेषामेकत्रिंशता भागो ह्रियते, लब्धा अष्टाविंशतिर्मुहूर्त्ताः २८ एकस्य च मुहूर्त्तस्य त्रयोविंशतिरेकत्रिंशद्भागाः २३।३१, आगतं प्रथमं पर्व अश्लेषानक्षत्रस्य पंच

दिवसान् एकस्य च दिवसस्याष्टाविंशतिं मुहूर्त्तान् एकस्य च मुहूर्त्तस्य त्रयोविंशतिमेकत्रिंशद्भागान् भुक्त्वा समाप्तमिति । तथा यदि चतुर्विंशत्यधिकेन पर्वशतेन पंच सूर्यनक्षत्रपर्याया लभ्यन्ते ततो द्वाभ्यां पर्वभ्यां किं लभामहे ?, राशित्रयस्थापना १२४-५-२, अत्रान्त्येन राशिना द्विकलक्षणेन मध्यराशिः पंचकरूपो गुण्यते, जाता दश १०, तेषामाद्येन राशिना भागहरणं, ते च स्तोकत्वाद्भागं न प्रयच्छंति ततो नक्षत्रानयनार्थमष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागैर्गुणयिष्याम इति गुणकारच्छेदराश्योरर्द्धेनापवर्त्तना, जातो गुणकारराशिर्नव शतानि पंचदशोत्तराणि ९१५, छेदराशिर्द्वाषष्टिः, तत्र नवभिः शतैः पंचदशोत्तरैर्दश गुण्यन्ते, जातान्येकनवतिशतानि पंचाशदधिकानि ९१५०, तेभ्यः सप्तविंशतिशतान्यष्टाविंशत्यधिकानि पुष्यसत्कानि शोध्यन्ते, स्थितानि पश्चाच्चतुष्षष्टिः शतानि द्वाविंशत्यधिकानि ६४२२, छेदराशिर्द्वाषष्टिरूपः सप्तषष्ट्या गुण्यते, जातान्येकचत्वारिंशच्छतानि चतुष्पंचाशदधिकानि ४१५४, तैर्भागो ह्रियते, लब्धमेकं नक्षत्रं १, शेषाणि तिष्ठन्ति द्वाविंशतिशतान्यष्टषष्ट्यधिकानि २२६८, ततो दिवसानयनार्थं छेदराशिर्द्वाषष्टिरूपः कर्त्तव्यः केवलं पंचभिः सप्तषष्टिभागैरहोरात्रो भवतीति पंचभिर्गुण्यते, जातानि त्रीणि शतानि दशोत्तराणि ३१०, तैर्भागो ह्रियते, लब्धाः सप्त दिवसाः ७, शेषा तिष्ठत्यष्टानवतिः ९८, सा मुहूर्त्तानयनार्थं त्रिंशता गुणितव्या, तत्र गुणकारराशिच्छेदराश्योः शून्येनापवर्त्तना, जातो गुणकारराशिस्त्रिकरूपः छेदराशेरेकत्रिंशत् ३१, तत्र त्रिकेनोपरितनो राशिर्गुण्यते, जाते द्वे शते चतुर्नवत्यधिके २९४, तयोरेकत्रिंशता भागो ह्रियते, लब्धा नव मुहूर्त्ताः ९ एकस्य च मुहूर्त्तस्य पंचदश एकत्रिंशद्भागाः १५।३१, यच्चैकं नक्षत्रं लब्धं तत् किल पुष्यानन्तरभावित्वाद् अश्लेषा, अश्लेषानक्षत्रं चार्धक्षेत्रं ततस्तद्गताः षड् दिवसा द्वादश (एकविंशतिः) मुहूर्त्ता उद्धरंति, ते च यथाक्रमं दिवसराशौ मुहूर्त्तराशौ च प्रक्षिप्यन्ते, जाताः सर्वसंख्यया चतुर्दश दिवसाः,



सूर्य नक्षत्रज्ञाने करणं

त्रयोदशभिश्च दिवसैर्द्वादशभिर्मुहूर्त्तैर्मघा शुद्धा, शेषाः तिष्ठन्त्यष्टादश मुहूर्त्ताः, आगतं द्वितीयं पर्व पूर्वाफाल्गुनीनक्षत्रस्याष्टादश मुहूर्त्तान् एकस्य च मुहूर्त्तस्य पंचदश एकत्रिंशद्भागान् भुक्त्वा समाप्तिं गतामिति। एवं शेषेष्वपि पर्वसु सूर्यनक्षत्राणि भावनीयानि ॥२४४-४६॥ सम्प्रत्यत्रैवार्थे करणान्तरमभिधित्सुः प्रथमतो ध्रुवराशिमाह—



चोद्दस दिवसा बावीस मुहुत्ता चुण्णिया य तेवीसं। एक्कावीसइभागा पव्वीकयरिक्खधुवरासी ॥ ३४७ ॥

सर्वेष्वपि पर्वसु 'ऋक्षध्रुवराशिः' सूर्यनक्षत्रविषयो ध्रुवराशिः 'पर्व्वीकृतः' एकेन पर्वणा निष्पादितोऽयं, तद्यथा-चतुर्दश दिवसा एकस्य दिवसस्य द्वाविंशतिर्मुहूर्त्ताः एकस्य च मुहूर्त्तस्य त्रयोविंशतिरेकत्रिंशद्भागा इति, कथमस्योत्पत्तिः ? इति चेदुच्यते, यदि चतुर्विंशत्यधिकेन पर्वशतेन पञ्च सूर्यनक्षत्रपर्याया लभ्यंते तत एकेन पर्वणा किं लभामहे ?, राशित्रयस्थापना १२४-५-१, अत्रान्त्येन राशिना मध्यराशिर्गुण्यते, जातः स तावानेव, एकेन गुणितं तदेव भवतीति वचनात्, ततश्चतुर्विंशत्यधिकेन पर्वशतेन भागो ह्रियते, तत्रोपरितनराशेः स्तोकत्वाद्भागो न लभ्यते, लब्धा एकस्य सूर्यनक्षत्रपर्यायस्य पञ्च चतुर्विंशत्यधिकशतभागाः, तत्र नक्षत्राणि कुर्म इत्यष्टादशभिः शतैस्त्रिंशदधिकैः सप्तषष्टिभागैः पञ्च गुणयाम इति गुणकारच्छेदराश्योरर्द्धेनापवर्त्तना, जातो गुणकारराशिर्नव शतानि पञ्चदशोत्तराणि ९१५, छेदराशिर्द्वाषष्टिः ६२, नवभिश्च शतैः पञ्चदशोत्तरैः पञ्च गुण्यन्ते, जातानि पंचचत्वारिंशच्छतानि पंचसप्तत्यधिकानि ४५७५, पंचभिश्च सप्तषष्टिभागैरहोरात्रो भवति ततोऽहोरात्रानयनार्थं द्वाषष्टिः पंचभिर्गुण्यते, जातानि त्रीणि शतानि दशोत्तराणि ३१०, तैर्भागो ह्रियते, लब्धाश्चतुर्दशाहोरात्राः, पश्चात्तिष्ठतो द्वे शते पंचत्रिंशदधिके २३५,

ततो मुहूर्त्तानयनार्थमेष राशिस्त्रिंशता गुणयितव्यः, तत्र गुणकारराशिच्छेदराश्योः शून्येनापवर्त्तना, जातो गुणकारराशिस्त्रिकरूपः, छेदराशिरेकत्रिंशत् ३१, ततस्त्रिकेणोपरितनो राशिर्गुण्यते, जातानि सप्त शतानि पंचोत्तराणि ७०५, एतेषामेकत्रिंशता भागो ह्रियते, लब्धा द्वाविंशतिर्मुहूर्त्ताः २२, एकस्य च मुहूर्त्तस्य त्रयोविंशतिरेकत्रिंशद्भागाः ॥ ३४७ ॥ एष ध्रुवराशिरत ऊर्ध्वं करणमाह—

इच्छियपव्वगुणाओ धुवरासीओ उ सोहणं कुणसु । रविरिक्खकरणविहिणा पूसाईणं जहाकमसो ॥ ३४८ ॥

ईप्सितेन पर्वणा गुणनं यस्य ध्रुवराशेः स तथा तस्मात् 'रविऋक्षकरणविधिना' अयनप्रस्तावोक्तसूर्यनक्षत्रकरणप्रकारेण पुष्यादीनां 'यथाक्रमशः' यथाक्रमं शोधनं कुर्यात् ॥ ३४८ ॥ तत्र पुष्यादिशोधनकप्रतिपादनार्थं प्रागभिहिता एव गाथाः सुखप्रतिपत्तये भूयोऽपि पठति—

चउवीसं च मुहुत्ता अट्ठेव य केवला अहोरत्ता । पूसविलग्गे एयं एत्तो वोच्छामि सेसाणं ॥ ३४९ ॥
बावट्ठि अहोरत्ता बारस य मुहुत्त उत्तराफग्गू । सोलसयं च विसाहा बीसुंदेवा य तेसीयं ॥ ३५० ॥
बे चउपण्णा छच्चेव मुहुत्ता उत्तरा य पुट्ठवया । तिण्णेव एकवीसा छच्च मुहुत्ता उ रोहिणिया ॥ ३५१ ॥
तिन्नेगिट्ठा बारस य मुहुत्ता सोहणं पुणव्वसुणो । तिन्नेव उ छावट्ठा पुस्सस्स उ होइ सोहणगं ॥ ३५२ ॥

चतुर्विंशतिर्मुहूर्त्ता अष्टौ च केवलाः-परिपूर्णा अहोरात्राः एतत् 'पुष्यविलग्नं' संवत्सरादिसत्कपुष्यांशविषयं शोधनकम्, अत ऊर्ध्वं शेषाणां नक्षत्राणां शोधनकं वक्ष्यामि । प्रतिज्ञातमेव निर्वाहयति-'बावट्ठी' त्यादि, द्वाषष्टिरहोरात्रा द्वादश च मुहूर्त्ता

उत्तराफाल्गुन्यः, किमुक्तं भवति ?-यदि द्वापष्टिरहोरात्रा द्वादश मुहूर्त्ताः शोधिमायान्ति ततः पुष्यादीन्युत्तराफाल्गुनीपर्यन्तानि नक्षत्राणि शुद्धानि द्रष्टव्यानि, एवमुत्तरत्रापि भावना भावनीया। तथा 'षोडशं' षोडशाधिकं शतं चेत् शुध्यति ततो विशाखान्तानि नक्षत्राणि शुध्यन्तीत्यर्थः, तथा 'त्र्यशीतं' त्र्यशीत्यधिकं शतं विष्वग्देवा- उत्तराषाढा, द्वे शते चतुष्पंचाशदधिके दिनानां षट् मुहूर्त्ता इति 'उत्तराप्रोष्ठपदा' उत्तराभाद्रपदाः, त्रीणि शतान्येकविंशत्याधिकानि दिनानां षट् च मुहूर्त्ता रोहिणी, त्रीणि शतान्येकषष्ट्यधिकानि दिनानां द्वादश च मुहूर्त्ता इति शोधनकं 'पुनर्वसोः' पुनर्वसुनक्षत्रस्य, त्रीणि शतानि षट्षष्टानि-षट्षष्ट्यधिकानि 'पुष्यस्य' पुष्यांशपर्यन्तस्य संवत्सरपूरकस्यैकस्य नक्षत्रपर्याय(स्य)शोधनकं॥ तदेवमुक्तं करणं, सम्प्रति करणभावना क्रियते-कोऽपि पृच्छति-द्वितीयं पर्व कस्मिन् सूर्यनक्षत्रे परिसमाप्तमिति?, तत्र ध्रुवराशिश्चतुर्दश दिवसा द्वाविंशतिर्मुहूर्त्ता एकस्य च मुहूर्त्तस्य त्रयोविंशतिरेकत्रिंशद्भागा इत्येवंरूपो ध्रियते, धृत्वा च द्वाभ्यां गुण्यते, जाता अष्टाविंशतिर्दिवसाश्चतुश्चत्वारिंशन्मुहूर्त्ताः षट्चत्वारिंशदेकत्रिंशद्भागाः, तत्रैकत्रिंशता मुहूर्त्तो लब्ध इति स मुहूर्त्तराशौ प्रक्षिप्यते, जाताः पंचचत्वारिंशन्मुहूर्त्ताः, स्थिताः पश्चात्पंचदश एकत्रिंशद्भागास्तत्र पुष्यस्याष्टावहोरात्रा अष्टाविंशतेः शुद्धा, स्थिता पश्चाद् विंशतिः, चतुश्चत्वारिंशतो मुहूर्त्तेभ्यश्चतुर्विंशतिर्मुहूर्त्ताः शुद्धाः, स्थिता पश्चादेकविंशतिः, द्व्यर्द्धक्षेत्रं नक्षत्रं षड्भिरहोरात्रैरेकविंशतिमुहूर्त्तैः शुध्यति, समक्षेत्रं त्रयोदशभिरहोरात्रैर्द्वादशभिर्मुहूर्त्तैः, सार्धक्षेत्रं विंशत्यहोरात्रैस्त्रिभिर्मुहूर्त्तैः, तत्र विंशतेः षड्भिरहोरात्रैरेकविंशत्या मुहूर्त्तैरश्लेषा शुद्धा, स्थिताः पश्चादहोरात्राश्चतुर्दश पंचदश चैकत्रिंशद्भागाः, तत्र त्रयोदशभिरहोरात्रैर्द्वादशभिर्मुहूर्त्तैर्मघा शुद्धा, शेषमवतिष्ठते अष्टादश मुहूर्त्ताः पंचैकत्रिंशद्भागाः, आगतं द्वितीयं पर्व पूर्वाफाल्गुनीनक्षत्रस्याष्टादश मुहूर्त्तान् एकस्य च मुहूर्त्तस्य पंचदशैकत्रिंशद्भागान् भुक्त्वा समाप्तिं गतमिति। तथा चतुर्थपर्वजिज्ञासायां ध्रुव-

राशिश्चतुर्भिर्गुण्यते, जाता अहोरात्राः षट्पंचाशत् अष्टाशीतिर्मुहूर्त्ताः द्विनवतिरेकत्रिंशद्भागाः, तत्र द्विनवतेरेकत्रिंशता भागो ह्रियते, लब्धौ द्वौ मुहूर्त्तौ, शेषास्त्रिनवतेरेकत्रिंशद्भागाः, लब्धौ च मुहूर्त्तौ मुहूर्त्तराशौ प्रक्षिप्येते, जाता नवतिर्मुहूर्त्ताः, षट्पंचाशतश्च दिवसेभ्योऽष्टावहोरात्राः पुष्यस्य शुद्धाः, स्थिताः शेषा अष्टाचत्वारिंशत्, नवतेश्चतुर्विंशतिर्मुहूर्त्ताः शुद्धाः, शेषास्तिष्ठन्ति षट्षष्टिर्मुहूर्त्ताः, अष्टाचत्वारिंशतश्च षड्भिरहोरात्रैरश्लेषा शुद्धा, स्थिता पश्चात् द्विचत्वारिंशत्, षट्षष्टेश्च मुहूर्त्तेभ्य एकविंशतिः शुद्धा, स्थिताः पश्चात्पञ्चचत्वारिंशन्मुहूर्त्ताः, ततो द्विचत्वारिंशतोऽहोरात्रेभ्यस्त्रयोदशभिर्मघा शुद्धा, स्थिता एकोनत्रिंशत्, पञ्चचत्वारिंशतो द्वादश मुहूर्त्ताः शुद्धाः, स्थिताः शेषास्त्रयस्त्रिंशत्, तत एकोनत्रिंशतस्त्रयोदशभिरहोरात्रैः शुद्धा फाल्गुनी, स्थिताः पश्चात्षोडश, त्रयस्त्रिंशतो द्वादश मुहूर्त्ताः शुद्धाः, स्थिता पश्चादेकविंशतिः, आगतं चतुर्थे पर्वे उत्तराफाल्गुनीनक्षत्रस्य षोडशदिवसस्यैकविंशतिमुहूर्त्तान् एकस्य मुहूर्त्तस्य त्रिंशतमेकत्रिंशद्भागान् भुक्त्वा समाप्तिं गतमिति। एवं शेषेष्वपि पर्वसु सूर्यनक्षत्रं परिभावनीयं, नवरं यावदुत्तराफाल्गुनीनक्षत्रं न शुध्यति तावत्पुष्यादिकं शोधनकं शोधयित्वा पश्चादेकैकं नक्षत्रं शोधनीयम्, उत्तराफाल्गुनीनक्षत्रशुद्धौ च गाथोक्तं शोधनकं शोधयितव्यम्, एवमन्यदपि पूर्वदक्षत्रं यावन्न शुद्ध्यति तावदेकैकं शोध्यं, श्रवणद्धक्षत्रनक्षत्रशुद्धौ च तत्तत्करणगाथोक्तं शोधनकं शोधनीयं, त्रिभिश्च षट्षष्ट्यधिकैः शतैरेकस्मिन् सूर्यनक्षत्रपर्याये शुद्धे भूयः पुष्यादिक्रमेण यथायोगं शोधनकं शोध्यं, ततः सप्तभिः शतैर्द्वात्रिंशदधिकैः द्वितीये सूर्यनक्षत्रपर्याये शुद्धे पुनरपि पुष्यादिकमुक्तक्रमेण यथासम्भवं तावच्छोधनीयं यावदुत्तराषाढानक्षत्रम्, एतावता च युगार्द्धं भवति, युगार्धे चैकोऽधिकमास इति द्वाषष्टिपर्वाणि समाप्तानि, एवमेव युगस्योत्तरार्द्धे द्वाषष्टिः पर्वाणि यथाक्रमं करणवशेन सम्यग् यथाऽवस्थितसूर्यनक्षत्रोपेतानि भावनीयानि ॥ ३५२ ॥ तत्र युगपूर्वार्द्धभाविद्वाषष्टिपर्वसूर्यनक्षत्रसूचिका इमा गाथाः—

॥२५१॥ ॥२५१॥

सप्प १ भग २ अज्जमदुगं ३-४ हत्थो ५ चित्ता ६ विसाह ७ मित्तो ८ य।
जेट्ठाइगं च छक्कं १४ अजा १५ भिवुड्ढी दु १६-१७ पूसा १८ सा १९॥ ३५३॥
छक्कं च कत्तियाई २५ पिइ २६ भग २७ अज्जमदुगं २९ च चित्ता ३० य।
वायु ३१ विसाहा ३२ अणुराह ३३ जेट्ठ ३४ आउं ३५ च वीसदुगं ३७॥ ३५४॥
सवण ३८ धणिट्ठा ३९ जमदेव ४० अभिवड्ढी ४१-४२ दुगस्स ४३ यम ४४ बहुला ४५।
रोहिणि ४६ सोम ४७ दितिदुगं ४९ पुस्सो ५० पिति ५१ भग ५२ ज्जमा ५३ हत्थो ५४॥३५५॥
चित्ताइ जेट्ठवज्जाणि अभिईअंताणि अट्ठ रिक्खाणि ६२। एए जुगपुव्वद्धे बिसट्ठिपव्वेसु रिक्खाणि॥३५६॥

प्रथमस्य पर्वणः परिसमाप्तौ सूर्यनक्षत्रं सर्पः-सर्पदेवतोपलक्षिता अश्लेषा१, द्वितीयस्य भगो-भगदेवतोपलक्षिताः पूर्वफाल्गुन्यः ततोऽर्यमद्विकमिति तृतीयस्य पर्वणोऽर्यमा-अर्यमदेवोपलक्षिता उत्तराफाल्गुन्यः ३, चतुर्थस्याप्युत्तरफाल्गुन्यः ४, पञ्चमस्य हस्तः ५, षष्ठस्य चित्रा ६, सप्तमस्य विशाखा ७, अष्टमस्य मित्रो-मित्रदेवोपलक्षिता अनुराधाः ८ तथा जेष्ठादिषट्कं क्रमेण वक्तव्यं, तद्यथा-नवमस्य ज्येष्ठा ९ दशमस्य मूल १० एकादशस्य पूर्वाषाढा ११ द्वादशस्योत्तराषाढा १२ त्रयोदशस्य श्रवणः १३ चतुर्दशस्य धनिष्ठा १४ पञ्चदशस्याजः-अजदेवतोपलक्षिता पूर्वभाद्रपदा १५, षोडशस्याभिवृद्धिः-अभिवृद्धिदेवतोपलक्षिता उत्तरभाद्रपदा १६ सप्तदशस्याप्युत्तरभाद्रपदा १७ अष्टादशस्य पूष-पूषदेवोपलक्षिता रेवती १८ एकोनविंशतितमस्याश्वः-अश्वदेवाऽश्विनी १९

षट्कं च कृत्तिकादिकमिति विंशतितमस्य कृत्तिका २० एकविंशतितमस्य रोहिणी २१ द्वाविंशतितमस्य मृगशिरः २२ त्रयोविंशतितमस्यार्द्रा २३ चतुर्विंशतितमस्य पुनर्वसुः २४ पञ्चविंशतितमस्य पुष्यः २५ षड्विंशतितमस्य पिता-पितृदेवोपलक्षिता मघा २६ सप्तविंशतितमस्य भगो-भगदेवाः पूर्वफाल्गुन्यः २७ अष्टाविंशतितमस्यार्यमदेवा उत्तरफाल्गुन्यः २८ एकोनत्रिंशत्तमस्याप्युत्तरफाल्गुन्यः २९ त्रिंशत्तमस्य चित्रा ३० एकत्रिंशत्तमस्य वायुः-वायुदेवोपलक्षिता स्वातिः ३१ द्वात्रिंशत्तमस्य विशाखा ३२ त्रयस्त्रिंशत्तमस्यानुराधा ३३ चतुस्त्रिंशत्तमस्य ज्येष्ठा ३४ पञ्चत्रिंशत्तमस्यायुः-आयुर्देवोपलक्षिताः पूर्वाषाढाः ३५ षट्त्रिंशत्तमस्य विष्वग्देवा उत्तराषाढा ३६ सप्तत्रिंशत्तमस्याप्युत्तराषाढा ३७ अष्टात्रिंशत्तमस्य श्रवणः ३८ एकोनचत्वारिंशत्तमस्य धनिष्ठा ३९ चत्वारिंशत्तमस्याजः-अजदेवोपलक्षिता पूर्वभाद्रपदा ४० एकचत्वारिंशत्तमस्याभिवृद्धिः-अभिवृद्धिदेवा उत्तरभाद्रपदा ४१ द्वाचत्वारिंशत्तमस्याप्यभिवृद्धिः-अभिवृद्धिदेवा उत्तरभाद्रपदा ४२ त्रिचत्वारिंशत्तमस्याश्वः-अश्वदेवाऽश्विनी ४३ चतुश्चत्वारिंशत्तमस्य यमदेवा भरणी ४४ पंचचत्वारिंशत्तमस्य कृत्तिका ४५ षट्चत्वारिंशत्तमस्य रोहिणी ४६ सप्तचत्वारिंशत्तमस्य सोमः-सोमदेवोपलक्षिता मृगशिरः ४७ अदितिद्विकमिति अष्टाचत्वारिंशत्तमस्य अदितिः-अदितिदेवतोपलक्षितं पुनर्वसुनक्षत्रं ४८ एकोनचत्वारिंशत्तमस्यापि पुनर्वसुनक्षत्रं ४९ पंचाशत्तमस्य पुष्यः ५० एकपंचाशत्तमस्य पिता- पितृदेवता मघा ५१ द्विपंचाशत्तमस्य भगो-भगदेवाः पूर्वफाल्गुन्यः ५२ त्रिपंचाशत्तमस्यार्यमदेवतोपलक्षिता उत्तरफाल्गुन्यः ५३ चतुष्पंचाशत्तमस्य हस्तः ५४ अत ऊर्ध्वं चित्रादीन्याभिजित्पर्यन्तानि ज्येष्ठावर्जान्यष्टौ नक्षत्राणि क्रमेण वक्तव्यानि, तद्यथा-पंचपंचाशत्तमस्य चित्रा ५५ षट्पंचाशत्तमस्य स्वातिः ५६ सप्तपंचाशत्तमस्य विशाखा ५७ अष्टापंचाशत्तमस्यानुराधा ५८ एकोनषष्टितमस्य मूलः ५९ षष्टितमस्य पूर्वाषाढा ६० एकषष्टितमस्योत्तरा-

पाढा ६१ द्वापष्टितमस्याभिजिदिति ६२। एतानि नक्षत्राणि युगस्य पूर्वार्द्धे द्वापष्टिसंख्येषु पर्वसु यथाक्रममुक्तानि, एवं करणवशेन युगस्योत्तरार्द्धेऽपि द्वापष्टिसंख्येषु पर्वसु ज्ञातव्यानि ॥ अथवा ध्रुवराशेरन्यथा निष्पत्तिः-नव शतानि पंचदशोत्तराणि स्थाप्यन्ते ९१५, तेषां द्वापष्ट्या भागो ह्रियते, लब्धाश्चतुर्दश दिवसाः, शेषा तिष्ठति सप्तचत्वारिंशत्, सा मुहूर्त्तानयनाय त्रिंशता गुण्यते, जातानि चतुर्दश शतानि दशोत्तराणि १४१०, तेषां द्वापष्ट्या भागे हृते लब्धा द्वाविंशतिर्मुहूर्त्ताः, शेषा तिष्ठति षट्चत्वारिंशत् ४६, ततश्छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तना, जातास्त्रयोविंशतिरेकत्रिंशद्भागाः ॥अथवाऽन्यथोत्पत्तिः- चन्द्रमास एकोनत्रिंशद्दिनानि द्वात्रिंशद्दिवसस्य द्वापष्टिभागास्तस्यार्द्धं चतुर्दश दिनानि पंचदश मुहूर्त्ताः, ये च द्वात्रिंशद् द्वापष्टिभागास्ते मुहूर्त्तानयनाय त्रिंशता गुण्यन्ते, जातानि नव शतानि षष्ट्यधिकानि ९६०, तेषां द्वापष्ट्या भागे हृते लब्धाः पंचदश मुहूर्त्ताः, शेषा तिष्ठति त्रिंशत्, पंचदशानामर्द्धं सप्त एकत्रिंशच्च द्वापष्टिभागाः, मुहूर्त्ता मुहूर्त्तराशौ प्रक्षिप्यन्ते, जाता द्वाविंशतिः, त्रिंशतश्चार्द्धं पंचदश, ततोऽमी पंचदश अनन्तरोक्ताश्चैकत्रिंशच्च द्वापष्टिभागा एकत्र मील्यन्ते, जाता षट्चत्वारिंशत्, ततः छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तना, लब्धा त्रयोविंशतिरेकत्रिंशद्भागाः ॥ यद्वेत्थं ध्रुवराशेरुत्पत्तिः- यदि चतुर्विंशत्यधिकेन पर्वशतेनाष्टादश शतानि त्रिंशदधिकानि दिवसानां लभ्यन्ते तत एकेन पर्वणा किं लभामहे ?, राशित्रयस्थापना १२४-१८३०-१ अत्रान्त्येन राशिना मध्यराशेर्गुणने जातानि तान्येवाष्टादश शतानि त्रिंशदधिकानि १८३०, तेषामाद्येन राशिना चतुर्विंशत्यधिकेन शतेन भागो ह्रियते, लब्धाश्चतुर्दश दिवसाः, शेषा तिष्ठति चतुर्नवतिस्ततो मुहूर्त्तानयनार्थमेषा त्रिंशता गुण्यते, जातान्यष्टाविंशतिशतानि विंशत्यधिकानि, तेषां चतुर्विंशत्यधिकेन शतेन भागो ह्रियते, लब्धा द्वाविंशतिर्मुहूर्त्ताः, शेषा तिष्ठति द्वानवतिः ९२, ततश्छेद्यच्छेदकराश्योश्चतुष्केणापवर्त्तना, लब्धास्त्रयोविंशतिरेकत्रिंशद्भागाः ॥ २५३-५६ ॥

एवं ध्रुवराशेरुत्पत्तावुपायाः कथिताः, सम्प्रति किं पर्व चरमे दिवसे कियत्सु मुहूर्त्तेषु गतेषु समाप्तिं गच्छति ? इत्येतद्विषयं करणमभिधित्सुराह—

चउहिं भइयंमि पव्वे एक्को सेसम्मि होइ कलिओगा। बेसु य दावरजुम्मो तिसु तेया चउसु कयजुम्मो ॥२५७॥

कलिओगे तेणउई पक्खेवो दावरंमि बावट्ठी। तेउए एक्कत्तीसा कडजुम्मे नत्थि पक्खेवो ॥ २५८ ॥

सेसछत्तीसगुणे बावट्ठीभाइयंमि जं लद्धं। जाणे तइसु मुहुत्तेसु अहोरत्तस्स तं पव्वं ॥ २५९ ॥

'पर्वाणि' पर्वराशौ चतुर्भिर्भक्ते सति यद्येकः शेषो भवति तदा स राशिः कल्योजो भण्यते, द्वयोः शेषयोर्द्वापरयुग्मः, त्रिषु शेषेषु त्रेतौजः, चतुर्षु शेषेषु कृतयुग्मः॥ कल्योजोरूपे राशौ त्रिनवतिः प्रक्षेपः-प्रक्षेपणीयो राशिः, द्वापरयुग्मे द्वाषष्टिः, त्रेतौजस्यैकत्रिंशत्, कृतयुग्मे नास्ति प्रक्षेपः। एवं प्रक्षिप्तप्रक्षेपाणां पर्वराशीनां सतां चतुर्विंशत्यधिकेन शतेन भागो ह्रियते, यच्छेषमवतिष्ठते तस्य विधिमाह-प्रक्षिप्तयथोक्तप्रक्षेपाणां पर्वराशीनां चतुर्विंशत्यधिकेन शतेन भागे हृते यच्छेषमवतिष्ठते तस्यार्द्धं क्रियते, कृत्वा च त्रिंशता गुण्यते, गुणयित्वा च द्वाषष्ट्या भागो भज्यते, भक्ते च सति यल्लब्धं तान् मुहूर्त्तान् जानीहि, लब्धशेषं तु मुहूर्त्तभागान्, तत एवं स्वशिष्येभ्यः प्ररूपयेत्, विवक्षितं पर्व चरमेऽहोरात्रे सूर्योदयात्तावतो मुहूर्त्तान् तावतश्च मुहूर्त्तभागानतिक्रम्य परिसमाप्तमिति॥ एष करणगाथाक्षरार्थः, भावना त्वियं-प्रथमं पर्व चरमेऽहोरात्रे कति मुहूर्त्तानतिक्रम्य समाप्तमिति जिज्ञासायामेको ध्रियते, अयं किल कल्योजोराशिरित्यत्र त्रिनवतिः प्रक्षिप्यते, जाता चतुर्नवतिः, अस्य चतुर्विंशत्यधिकेन शतेन भागो हर्त्तव्यः, स च भागो न लभ्यते, राशेः

स्तोकत्वात्, ततो यथासम्भवं करणलक्षणं कर्त्तव्यं, तत्र चतुर्नवतेरर्द्धं क्रियते, जाताः सप्तचत्वारिंशत् ४७, सा त्रिंशता गुण्यते, जातानि चतुर्दश शतानि दशोत्तराणि १४१०, तेषां द्वाषष्ट्या भागो ह्रियते, लब्धा द्वाविंशतिः मुहूर्त्ताः २२, शेषा तिष्ठति षट्चत्वारिंशत् ४६, ततश्छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तना, लब्धास्त्रयोविंशतिरेकत्रिंशद्भागाः, आगतं प्रथमं पर्व चरमेऽहोरात्रे द्वाविंशतिं मुहूर्त्तान् एकस्य च मुहूर्त्तस्य त्रयोविंशतिमेकत्रिंशद्भागानतिक्रम्य समाप्तिं गतमिति । द्वितीयपर्वजिज्ञासायां द्विको ध्रियते, स किल द्वापरयुग्मराशिरिति तत्र द्वाषष्टिः प्रक्षिप्यते, जाता चतुःषष्टिः ६४, सा चतुर्विंशत्यधिकस्य भागं शतस्य न प्रयच्छति ततस्तस्यार्धं क्रियते, जाता द्वात्रिंशत्, सा त्रिंशता गुण्यते, जातानि नव शतानि षष्ट्यधिकानि ९६०, तेषां द्वाषष्ट्या भागो ह्रियते, लब्धाः पञ्चदश मुहूर्त्ताः, पश्चादवतिष्ठते त्रिंशत्, ततश्छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तना, लब्धाः पञ्चदश एकत्रिंशद्भागाः, आगतं द्वितीयं पर्व-चरमेऽहोरात्रे पञ्चदश मुहूर्त्तान् एकस्य च मुहूर्त्तस्य पञ्चदशैकत्रिंशद्भागानतिक्रम्य द्वितीयं पर्व समाप्तमिति । तृतीयपर्वजिज्ञासायां त्रिको ध्रियते, स किल त्रेताजोराशिरिति तत्रैकत्रिंशत् प्रक्षिप्यते, जाता चतुस्त्रिंशत् ३४, सा चतुर्विंशत्यधिकशतस्य भागं न प्रयच्छति, ततस्तस्यार्धं क्रियते, जाताः सप्तदश, ते त्रिंशता गुण्यन्ते, जातानि पञ्च शतानि दशोत्तराणि ५१०, तेषां द्वाषष्ट्या भागो ह्रियते, लब्धा अष्टौ शेषास्तिष्ठन्ति चतुर्दश, ततश्छेद्यच्छेदकराश्योरर्धेनापवर्त्तना, लब्धाः सप्तैकत्रिंशद्भागाः, आगतं तृतीयं पर्व चरमेऽहोरात्रेऽष्टौ मुहूर्त्तान् एकस्य च मुहूर्त्तस्य सप्तैकत्रिंशद्भागानतिक्रम्य समाप्तिं गतमिति । चतुर्थपर्वजिज्ञासायां चतुष्को ध्रियते, स किल युग्मराशिरिति न किमपि तत्र प्रक्षिप्यते, चत्वारश्चतुर्विंशत्यधिकशतस्य भागं न प्रयच्छन्ति ततस्तेऽर्द्धीक्रियन्ते, जातौ द्वौ, तौ त्रिंशता गुण्येते, जाता षष्टिः, तस्या द्वाषष्ट्या भागो ह्रियते, भागश्च न लभ्यते इति छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तना, जाता त्रिंशत्,

आगतं चतुर्थं पर्व चरमेऽहोरात्रे मुहूर्त्तस्य त्रिंशतमेकत्रिंशद्भागानतिक्रम्य समाप्तिं गच्छतीति । सम्प्रति मूलटीकोपदर्शितमुदाहरणमुपदर्श्यते-त्र्यशीतितमं पर्व चरमेऽहोरात्रे कतिषु मुहूर्त्तेषु गतेषु कतिमुहूर्त्तभागेषु च समाप्तिं गच्छतीति त्र्यशीतिर्ध्रियते, अत्र चतुर्भिर्भागे ह्रियमाणे त्रयः शेषा उद्धरन्ति इति त्रेताजोराशिस्ततोऽत्रैकत्रिंशत् प्रक्षिप्यन्ते, जातं चतुर्दशोत्तरं शतम् ११४, एतच्चतुर्विंशत्यधिकस्य शतस्य भागं न प्रयच्छतीत्येतस्यार्द्धं क्रियते, जाता सप्तपञ्चाशत्, सा त्रिंशता गुण्यते, जातानि सप्तदश शतानि दशोत्तराणि १७१०, तेषां द्वाषष्ट्या भागो ह्रियते, लब्धा सप्तविंशतिः, शेषा तिष्ठति षट्त्रिंशत् ३६, ततश्छेद्यच्छेदकराश्योरर्द्धेनापवर्त्तना, लब्धा अष्टादशैकत्रिंशद्भागाः, आगतं-त्र्यशीतितमं पर्व चरमेऽहोरात्रे सप्तविंशतिं मुहूर्त्तान् एकस्य च मुहूर्त्तस्याष्टादशैकत्रिंशद्भागानतिक्रम्य समाप्तिं गतमिति, चतुर्विंशत्यधिकशततमपर्वजिज्ञासायां चतुर्विंशत्यधिकं शतं ध्रियते, तस्य किल चतुर्भिर्भागे हृते न किमपि शेषमवतिष्ठते इति, कृतयुग्मोऽयं राशिस्ततोऽत्र न किमपि प्रक्षिप्यते, ततश्चतुर्विंशत्यधिकेन शतेन भागो ह्रियते, जातो राशिर्निर्लेपः, आगतं परिपूर्णं चरमं दिनं भुक्त्वा चतुर्विंशत्यधिकशततमं पर्व समाप्तिं गतमिति ॥२५९॥ सम्प्रति प्रस्तुतप्राभृतोपसंहारमाह

अवमासपुण्णमासी एवं विविहा मए समक्खाया ।

'एवम्' उक्तेन प्रकारेणामावास्या पौर्णमासी च विविधा-अनेकप्रकारा, तद्यथा-चन्द्रनक्षत्रपरिज्ञानपुरःसरा सूर्यनक्षत्रपरिज्ञानपुरःसरा चरमदिवसमुहूर्त्तभागपरिज्ञानपुरःसरा च, मयाऽऽख्याता ॥

इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायाममावास्यापौर्णमासीप्रतिपादकमेकोनविंशतितमं प्राभृतं ॥

तदेवमुक्तमेकोनविंशतितमं प्राभृतं, साम्प्रतं विंशतितमं प्राभृतं विवक्षुराह—

एत्तो पणट्ठपव्वं वोच्छामि अहाणुपुव्वीए ॥ ३६० ॥

'इतः' अमावास्यापौर्णमासीप्रतिपादकादेकोनविंशतितमात्प्राभृतादनन्तरं प्रनष्टपर्वप्रतिपादकं विंशतितमं 'यथानुपूर्व्या' क्रमेण वक्ष्यामि ॥ ३६० ॥ प्रतिज्ञातमेव निर्वाहयति—

जइ कोई पुच्छेज्जा सूरे उट्ठितयंमि अभिइस्स । एक्ककला पडिपुण्णा किं पव्वं का तिही होइ ? ॥ ३६१ ॥

इच्छारूवूणाओ अभिजिम्मुपादाय संखिवेऊणं । इच्छाकऊणकाले कयंमि इणमो भवे करणं ॥ ३६२ ॥

कोऽपि शिष्यः पृच्छति-यदि सूर्ये उत्तिष्ठति- उदयमानेऽभिजितो नक्षत्रस्यैका परिपूर्णा कला सप्तषष्टिभागरूपा चन्द्रमसा प्रतिपन्ना-भुक्ता भवति तदा तस्मिन् दिवसे किं पर्व वर्त्तते? का वा तिथिः ? ॥ एवं शिष्येण प्रश्ने कृते सति सूरिः शेषनक्षत्र-दर्शनादिभिर्विवक्षितं नष्टं पर्व जानीयादिति तद्विषयं करणमाह— ईप्सितान्नक्षत्रात्पूर्वमभिजितमुपादाय याः कलास्ता एकत्र 'संक्षिपेत्' मीलयेत्, ततो या ईप्सिताः-विवक्षिताः कलास्ताभिरूने काले सति 'इदं' वक्ष्यमाणं भवति करणम् ॥ ३६१-२ तदेवाह—

छेत्तूण य छेयं तेरसेहिं तिनउइ ठितं तु संगुणए । अट्ठारसहिं सएहिं तीसाए भइयं सेसंमि ॥ ३६३ ॥

एगट्ठीउ विभत्ते जे लद्धा ते य होंति पक्खेवा । पन्नरसभागलद्धा पव्वगा अंसगा य तिही ॥ ३६४ ॥

'छित्त्वा' अपनीय 'छेदम्' ईप्सितकलारूपं यच्छेषं लभ्यते तत्र त्रयोदशभिः शतैस्त्रिनवत्यधिकैः संगुणयेत्, गुणयित्वा चाष्टादशभिः शतैस्त्रिंशदधिकैर्भजेत् , भक्ते च सति यच्छेषमवतिष्ठते तत् प्रतिराश्यते, प्रतिराश्य च मूलराशौ तस्मिन्नेकषष्ट्या प्रविभक्ते च

सति यल्लभ्यते ते 'प्रक्षेपाः' प्रक्षेपणीया राशयो ज्ञातव्याः, तेषु च प्रक्षेपेषु प्रतिराशौ प्रक्षिप्तेषु तस्य पंचदशभिर्भागे हृते यल्लभ्यते तानि पर्वाणि द्रष्टव्यानि, अंशास्तु तिथयः, एष करणगाथाक्षरार्थः, सम्प्रति भावना क्रियते-तत्र यत्पृष्टम्-उदयति सूर्येऽभिजित एककला चन्द्रमसा भुक्ता स्यात्तस्मिन् दिवसे किं पर्व वर्त्तते? का वा तिथिः? इति, तत्र सा एका कला त्रयोदशभिः शतैस्त्रिनवत्यधिकैर्गुण्यते, जातानि त्रयोदश शतानि त्रिनवत्यधिकानि १३९३, तेषामष्टादशभिः शतैस्त्रिनवत्यधिकैर्भागो न लभ्यत इति शेषः करणविधिर्विधीयते, तत्र त्रयोदश शतानि त्रिनवत्यधिकानि प्रतिराश्यन्ते, प्रतिराश्य च मूलराशेरेकषष्ट्या भागो ह्रियते, लब्धा द्वाविंशतिः २२, सा प्रतिराशौ प्रक्षिप्यते, जातः प्रतिराशिश्चतुर्दश शतानि पंचदशोत्तराणि १४१५, तेषां पंचदशभिर्भागो ह्रियते, लब्धा चतुर्नवतिः ९४, शेषास्तिष्ठन्ति पञ्च, आगतं चतुर्नवतितमे पर्वणि पञ्चम्यामुदयति सूर्येऽभिजित्कला चन्द्रमसा प्रतिपन्ना भवति । तथा कोऽपि पृच्छति-उदयति सूर्ये यदा धनिष्ठाया एका कला चन्द्रमसा प्रतिपन्ना भवति तदा किं पर्व वर्त्तते? का वा तिथिः? इति, तत्राभिजितः कला एकविंशतिः श्रवणनक्षत्रस्य सप्तषष्टिः धनिष्ठाया एका कलेति सर्वसङ्कलनेन जाता एकोननवतिः ८९, इत ईप्सिता कला धनिष्ठासत्का एका शोध्यते, स्थिता पश्चादष्टाशीतिः ८८, एनां राशिं त्रयोदशभिः शतैस्त्रिनवत्यधिकैर्गुणयेत्, जातमेकं लक्षं त्रयोविंशतिसहस्राणि नव शतानि सप्तसप्तत्यधिकानि १२३९७७, तेषामष्टादशभिः शतैस्त्रिंशदधिकैर्भागो ह्रियते, लब्धं त्यज्यते, स्थितानि शेषाणि त्रयोदश शतानि सप्तषष्ट्यधिकानि १३६७, एतानि प्रतिराश्यन्ते १३६७, तत आदिमस्य राशेरेकषष्ट्या भागहरणं, लब्धा द्वाविंशतिः, सा प्रतिराशौ प्रक्षिप्यते, जातानि त्रयोदश शतानि नवाशीत्यधिकानि १३८९, तेषां पञ्चदशभिर्भागो ह्रियते, लब्धा द्विनवतिः, शेषास्तिष्ठन्ति नव, आगतं द्विनवतितमे पर्वणि नवम्यामुदयति सूर्ये धनिष्ठाया एका कला

चन्द्रमसा प्रतिपन्नेति, एवं सर्वत्रापि भावना भावनीया ॥ ३६३-३६४ ॥ प्रनष्टजन्मनक्षत्रपरिज्ञानार्थं करणमाह—

समइच्छिएसु वासेसु कोई पुच्छेज्ज जम्मनक्खत्तं। जायस्स वरिससंखं पव्वाणि तहिं च ठाविज्जा ॥ ३६५ ॥
छित्तूण वरिससंखं पंचसु सेसाणि कुणसु पव्वाणि। तत्तो उवट्टमाणं सोहेज्जा एव तिहिरासिं ॥ ३६६ ॥
अवसेसं सोहिंतो संपयकालमिव आणए सव्वं। जं जं इच्छसि किंची अणागयं वावि खेवेणं ॥ ३६७ ॥

'समतिच्छितेषु' समतिक्रान्तेषु वर्षेषु कोऽपि स्वकीयं जन्मनक्षत्रं पृच्छेत्, यथा किं मम जन्मकाले नक्षत्रमासीदिति, एवं पृष्टे सति जातस्य सतस्तस्य या वर्षसङ्ख्या अतिक्रान्तास्ताः पर्वाणि तिथींश्च स्थापयेत्, स्थापयित्वा च वर्षसङ्ख्यां 'पञ्चसु' पंचविषयां छिंद्यात्, किमुक्तं भवति ?-पंचवर्षरूपा सङ्ख्या यावच्छेदं सहते तावत् छिंद्यात्, छित्त्वा च शेषाणि यानि वर्षाणि तिष्ठन्ति तानि पर्वाणि कुरु, कृत्वा च पर्वराशिः पूर्वपुरुषसम्प्रदायात् चतुरशीतिसङ्ख्यो वर्त्तमानः समस्तोऽप्येकत्र मील्यते- ततो वर्त्तमानपर्वराशिं तिथिराशिं च शोधयेत्, तत्र च ये शेषा अंशाः तेभ्यः साम्प्रतकालमिव यद् यद् इच्छसि किंचित् तत्तत् सर्वस्तिथिराशिरिष्टरूपः, इत्थंभूतं च वर्त्तमानं पर्वराशिं तिथिराशिं च शोधयित्वा ये(एष्ये)ऽवधिराशिं च प्रक्षिपेत्, प्रक्षिप्ताच्चाधिकपर्वराशेर्युगपर्वराशिं शोधयित्वा शेषं पूर्वोपदेशेन कुर्यात् , एष करणगाथाक्षरार्थः, भावना त्वियं-कस्यापि जातस्य नव वर्षाणि त्रयो मासा एकः पक्षः पंच दिवसाः, एष जातस्य कालः, अत्र किं चन्द्रनक्षत्रं सूर्यनक्षत्रं वा ?, अत्र स्थापना-९ व., ३ मा., १ प., ५ दि., प्रथमतः सर्वोपरि नव वर्षा ध्रियन्ते, तेषामधस्तात् त्रयो मासास्तेषां चाधस्तादेकः पक्षः तस्य चाधस्तात्पञ्चमी, अत्र वर्षराशेः पञ्चसङ्ख्यितेन युगेन

भागो ह्रियते, स्थितानि शेषाणि चत्वारि, तानि पर्वाणि कर्त्तव्यानि, तत्र वर्षे चतुर्विंशतिः पर्वाणि, ततश्चत्वारश्चतुर्विंशत्या गुण्यंते, जाता षण्णवतिः, त्रिषु मासेषु षट् पर्वाणि, तान्यपि तत्र प्रक्षिप्यन्ते, चतुर्षु वर्षेष्वेकोऽधिको मासः संजातस्तत्र च द्वे पर्वणी ते अपि प्रक्षिप्ते, यदपि एकं पर्व तदपि तत्र प्रक्षिप्तं, जातं सर्वसङ्ख्यया पंचोत्तरं पर्वशतम्, अतो वर्त्तमानानि चतुरशीतिपर्वाणि शोद्ध्यंते, स्थितानि शेषाण्येकविंशतिपर्वाणि, पंचतोऽष्टौ न शुध्यन्ति तत एकविंशतेरेकं रूपमादाय पंचदशभागाः क्रियन्ते, ते च पंचदश पंचसु मध्ये प्रक्षिप्ता जाता विंशतिस्ततोऽष्टौ शुद्धाः स्थिता द्वादश, आगतं युगादौ विंशतौ पर्वसु गतेषु द्वादश्यां चन्द्रगतं सूर्यगतं वा यन्नक्षत्रं तत्तस्य नक्षत्रं, यथाऽऽगममन्यस्यापि जन्मनक्षत्रमानेतव्यम्, एवमनागतेऽपि जन्मनक्षत्रमानायितव्यमिति ॥

॥ इति श्रीमलयगिरिविरचितायां ज्योतिष्करण्डकटीकायां नष्टपर्वप्रतिपादकं विंशतितमं प्राभृतं ॥

तदेवमुक्तं विंशतितमं प्राभृतं, सम्प्रति पौरुषीपरिमाणप्रतिपादकमेकविंशतितमं प्राभृतं विवक्षुराह—

पव्वे पन्नरसगुणा तिहिसहिए पोरसीए आणयणे । छलसीयसयविभत्ते जं लद्धं तं वियाणाहि ॥ ३६८ ॥

जइ होइ विसमलद्धं दक्खिणमयणं हविज्ज नायव्वं । अह हवइ समं लद्धं नायव्वं उत्तरं अयणं ॥ ३६९ ॥

अयणगए तिहिरासी चउग्गुणो पव्वपायभइयम्मि । जं लद्धमंगुलाण य खयवुड्डी पोरसीए उ ॥ ३७० ॥

युगमध्ये यस्मिन् पर्वणि यस्यां तिथौ पौरुषीपरिमाणं ज्ञातुमिष्यते ततः पूर्वं युगादित आरभ्य यानि पर्वाण्यतिक्रान्तानि तानि ध्रियन्ते, धृत्वा च पञ्चदशभिर्गुण्यन्ते, गुणयित्वा च विवक्षितायास्तिथेर्याः प्रागतिक्रान्तास्तिथयस्ताभिः सहितानि क्रियन्ते, कृत्वा च षडशीत्यधिकेन शतेन तेषां भागो ह्रियते, इहैकस्मिन्नयने त्र्यशीत्यधिकमण्डलशतपरिमाणं चन्द्रनिष्पादितानां तिथीनां

षडशीत्यधिकं शतं भवति ततस्तेन भागहरणं, हृते च भागे यल्लब्धं तद् विजानीहि, सम्यगवधारयेत्यर्थः, तत्र यदि लब्धं विषमं भवति यथा एककस्त्रिकः पञ्चकः सप्तको नवको वा तदा तत्पर्यन्तवर्त्ति दक्षिणमयनं ज्ञातव्यम्, अथ भवति लब्धं समं, तद्यथा-द्विकश्चतुष्को षट्कोऽष्टको दशको वा तदा तत्पर्यन्तवर्त्ति उत्तरायणमवसेयम् ॥ ३६८-६९ ॥ तदेवमुक्तो दक्षिणायनोत्तरायणपरिज्ञानोपायः, सम्प्रति षडशीत्यधिकेन शतेन भागे हृते यच्छेषमवतिष्ठते यदिवा भागासम्भवेन यच्छेषं तिष्ठति तद्गतं विधिमाह—

यः पूर्वभागे हृते भागासम्भवेन शेषीभूतोऽयनगतस्तिथिराशिर्वर्त्तते स चतुर्भिर्गुण्यते, गुणयित्वा च पर्वपादेन-युगमध्ये यानि सर्वसङ्ख्यया पर्वाणि चतुर्विंशत्यधिकशतसङ्ख्यानि तेषां पादेन-चतुर्थांशेन एकत्रिंशतेत्यर्थः तया भागे हृते यल्लब्धं तान्यङ्गुलानि अङ्गुलांशाश्च पौरुषीक्षयवृद्ध्योर्ज्ञातव्यानि, दक्षिणायने पदध्रुवराशेरुपरि वृद्धौ ज्ञातव्यानि, उत्तरायणे पदध्रुवराशेः क्षय इत्यर्थः, अथैवंभूतस्य गुणकारस्य भागहारस्य वा कथमुत्पत्तिः ?, उच्यते, यदि षडशीत्यधिकेन तिथिशतेन चतुर्विंशतिरङ्गुलानि क्षये वृद्धौ वा प्राप्यन्ते तत् एकस्यां तिथौ का वृद्धिः क्षयो वा, ?, राशित्रयस्थापना १८६-२४-१ अत्रान्त्येन राशिना एककलक्षणेन मध्यमो राशिश्चतुर्विंशतिरूपो गुण्यते, जातः स तावानेव, तत आद्येन राशिना षडशीत्यधिकशतरूपेण भागो ह्रियते, तत्रोपरितनराशेः स्तोकत्वाद्भागो न लभ्यते, ततश्छेद्यच्छेदकराश्योः षट्केनापवर्त्तना, जात उपरितनो राशिश्चतुष्करूपोऽधस्तन एकत्रिंशत्, लब्धमेकस्यां तिथौ चत्वार एकत्रिंशद्भागाः क्षये वृद्धौ चेति चतुष्को गुणकार उक्त एकत्रिंशद्भागहार इति ॥ इह यल्लब्धं तान्यङ्गुलानि क्षये वृद्धौ चेत्युक्तं तत्र कस्मिन्नयने कियत्प्रमाणाया राशेरुपरि वृद्धिः कस्मिन् वाऽयने किंप्रमाणाया राशेः क्षय ? इत्येतन्निरूपणार्थमाह—

दक्खिणवुड्ढी दुपया उ अंगुलाणं तु होइ नायव्वा । उत्तरअयणा हाणी कायव्वा चउहिं पायाहिं ॥ ३७१ ॥

दक्षिणायने द्विपादः पादद्वयस्योपर्यङ्गुलानां वृद्धिर्ज्ञातव्या, उत्तरायणे चतुर्भ्यः पादेभ्यः सकाशादङ्गुलानां हानिः ॥ तत्र युगमध्ये प्रथमे संवत्सरे दक्षिणायने यतो दिवसादारभ्य वृद्धिस्तं निरूपयति—

सावणबहुलपडिवए दुपया पुण पोरसी धुवं होइ । चत्तारि अंगुलाइं मासेणं वड्ढए तत्तो ॥ ३७२ ॥

एकत्तीसइभागा तिहिए पुण अंगुलस्स चत्तारि । दक्खिण अयणे वुड्ढी जाव उ चत्तारि उ पयाइं ॥ ३७३ ॥

युगस्य प्रथमे संवत्सरे श्रावणमासि बहुलपक्षे प्रतिपदि पौरुषी 'द्विपदा' पदद्वयप्रमाणा ध्रुवराशिर्भवति, ततस्तस्याः प्रतिपद आरभ्य प्रतितिथि क्रमेण तावद्यावत् मासेन-सार्द्धत्रिंशदहोरात्रप्रमाणेन चन्द्रमासापेक्षया एकत्रिंशता तिथिभिरित्यर्थः चत्वार्यङ्गुलानि वर्द्धन्ते, कथमेतदवसीयते ? यथा मासेन सार्द्धत्रिंशदहोरात्रप्रमाणेन, एकत्रिंशत्तिथ्यात्मकेन, अत आह—'एकत्तीसे' इत्यादि, यत एकस्यां तिथौ चत्वार एकत्रिंशद्भागा वर्द्धन्ते, एतच्च प्रागेव भावितं, परिपूर्णे तु दक्षिणायने वृद्धिः परिपूर्णानि चत्वारि पदानि, ततो मासेन—सूर्यमासेन सार्द्धत्रिंशदहोरात्रप्रमाणेन एकत्रिंशत्तिथ्यात्मकेनेत्युक्तम् ॥ ३७२-७३ ॥ तदेवमुक्ता वृद्धिः, सम्प्रति हानिमाह—

उत्तरअयणे हाणी चउहिं पायाहिं जाव दो पाया ।

युगस्य प्रथमे संवत्सरे उत्तरायणे माघमासे बहुलपक्षे सप्तम्या आरभ्य चतुर्भ्यः पादेभ्यः सकाशात् प्रतितिथि एकत्रिंशद्भागचतुष्टयहानिस्तावदवसेया यावदुत्तरायणपर्यन्ते द्वौ पादौ पौरुषीति । एष प्रथमसंवत्सरगतो विधिः, द्वितीये संवत्सरे श्रावणे मासि बहुलपक्षे त्रयोदशीमादौ कृत्वा वृद्धिः, माघमासे शुक्लपक्षे चतुर्थीमादिं कृत्वा क्षयः, तृतीये संवत्सरे श्रावणमासे शुक्लपक्षे दशमी

वृद्धेरादिः, माघमासे बहुलपक्षे प्रतिपत् क्षयस्यादिः, चतुर्थे संवत्सरे श्रावणमासे बहुलपक्षे सप्तमी वृद्धेरादिः, माघमासे बहुलपक्षे त्रयोदशी क्षयस्यादिः, पंचमे संवत्सरे श्रावणमासे शुक्लपक्षे चतुर्थी वृद्धेरादिः, माघमासि शुक्लपक्षे दशमी क्षयस्यादिः ॥ सम्प्रत्युपसंहारमाह—

एवं तु पोरसीए वुड्ढिखया होंति नायव्वा ॥ ३७४ ॥

'एवम्' उक्तेन प्रकारेण पौरुष्यां- पौरुषीविषयौ वृद्धिक्षयौ यथाक्रमं दक्षिणायनोत्तरायणेषु वेदितव्यौ । तदेवमुक्तं करणं, सम्प्रत्यस्य करणस्य भावना क्रियते- कोऽपि पृच्छति-युगे आदित आरभ्य पंचाशीतितमे पर्वणि पंचम्यां तिथौ कतिपदा पौरुषी भवति ?, तत्र चतुरशीतिर्ध्रियते, तस्याश्चाधस्तात् पंचम्यां तिथौ पृष्टमिति पंच, चतुरशीतिश्च पंचदशभिर्गुण्यते, जातानि द्वादश शतानि षष्ट्यधिकानि १२६०, तेषु मध्येऽधस्तनाः पंच प्रक्षिप्यन्ते, जातानि द्वादश शतानि पंचषष्ट्यधिकानि १२६५, तेषां षडशीत्यधिकेन शतेन भागो ह्रियते, लब्धाः षड्, आगतं षडयनान्यतिक्रान्तानि सप्तममयनं वर्त्तते, तद्गतं च शेषमेकोनपंचाशदधिकं शतं तिष्ठति, तच्चतुर्भिर्गुण्यते, जातानि पंच शतानि षण्णवत्यधिकानि ५९६, तेषामेकत्रिंशता भागहरणे लब्धा एकोनविंशतिः १९, शेषाः तिष्ठंति सप्त, तत्र द्वादशांगुलानि पादः, एकोनविंशतेर्द्वादशभिः पदं लब्धं, शेषाणि तिष्ठन्ति सप्तांगुलानि, षष्ठं चायनमुत्तरायणं तच्च गतं, सप्तमं च दक्षिणायनं वर्त्तते, ततः पदमेकं सप्तांगुलानि पदद्वयप्रमाणे ध्रुवराशौ प्रक्षिप्यंते, जातानि त्रीणि पदानि सप्तांगुलानि, ये च सप्तैकत्रिंशद्भागाः शेषीभूता वर्त्तन्ते तान् यवान् कुर्मः, तत्राष्टौ यवा अंगुले इति ते सप्त अष्टभिर्गुण्यन्ते, जाताः षट्पंचाशत् ५६, तस्यैकत्रिंशता भागे हृते लब्ध एको यवः, शेषास्तिष्ठन्ति यवस्य पंचविंशतिरेकत्रिंशद्भागाः, आगतं पंचाशीतितमे पर्वणि पंचम्यां त्रीणि

तिथिर्लभ्यते ततश्चतुर्भिरंगुलैः कति तिथीर्लभामहे?, राशित्रयस्थापना ४/३१-१-४ अत्रान्त्यो राशिश्चतुरंगुलरूप इत्येकत्रिंशद्भागकरणार्थमेकत्रिंशता गुण्यते, जातं चतुर्विंशत्यधिकं शतं १२४, तस्य चतुष्करूपेणादिराशिना भागो ह्रियते, लब्धा एकत्रिंशत्तिथयः, आगतं दक्षिणायने एकत्रिंशत्तमायां तिथौ चतुरंगुला पौरुष्यां वृद्धिरिति। तथोत्तरायणे पदचतुष्टयादंगुलाष्टकं हीनं पौरुष्या उपलभ्य कोऽपि पृच्छति-किं गतमुत्तरायणस्य?, अत्रापि त्रैराशिकं-यदि चतुर्भिरंगुलस्यैकत्रिंशद्भागैरेका तिथिर्लभ्यते ततोऽष्टभिरंगुलैः कति तिथयो लभ्यन्ते?, राशित्रयस्थापना ४/३१-१-८ अत्रान्त्यो राशिरेकत्रिंशद्भागकरणार्थमेकत्रिंशता गुण्यते, जाते द्वे शते अष्टाचत्वारिंशदधिके२४८, ताभ्यां मध्यो राशिरेकरूपो गुण्यते, जाते ते एव द्वे शते अष्टाचत्वारिंशदधिके२४८, तयोराद्येन राशिना चतुष्करूपेण भागहरणं, लब्धा द्वाषष्टिः,आगतमुत्तरायणे द्वाषष्टितमायां तिथावष्टावंगुलानि पौरुष्यां हीनानीति ॥३७५॥ सम्प्रत्युपसंहारमाह-

कालण्णाणसमासो पुव्वायरिएहिं आणिओ एसो। दिणकरपण्णत्तीओ सीसजणविबोहणट्ठाए ॥ ३७६ ॥

'एषः' अनन्तरोदितस्वरूपः 'कालज्ञानसमासः' कालपरिज्ञानविषयः संक्षेपो दिनकरप्रज्ञप्तेः सकाशात् शिष्यजनबोधनार्थं पूर्वाचार्यैरानीतः, एतेन स्वमनीषिकाव्युदास आवेदितो द्रष्टव्यः, तेन परम्परया सर्वविन्मूलत्वादुपादेयमिदमवश्यं प्रेक्षावद्भिर्ज्योतिष्करण्डकमिति ॥

यद्वावितमल्पमतिना जिनवचनविरुद्धमत्र टीकायाम्। विद्वद्भिस्तत्त्वज्ञैः प्रसादमाधाय तच्छोध्यम् ॥ १ ॥
ज्योतिष्करण्डकमिदं गम्भीरार्थं विवृण्वता कुशलम्। यदवापि मलयगिरिणा सिद्धिस्तेनाश्नुतां लोकः ॥ २ ॥

॥ इति श्रीमलयगिरिविरचिता ज्योतिष्करण्डकटीका समाप्तेति ॥ ग्रन्थाग्रम् ५००० ॥ श्रीरस्तु ॥